the products of the soil could sustain, or human labour manufacture. Of all the descriptions of the Puráṇas it is in their numerical delineations that the smallest element of truth is found.

It may here be asked who were the gods, demi-gods, and demons, spoken of in all Brahminical writings. Of the gods some were personifications of the elements and heavenly bodies, and some were perhaps certain highly favoured and opulent A'rya monarchs. The demi-gods were probably such among the aboriginal inhabitants of the country as were in alliance with the A'ryas, and the demons were no doubt their enemies. The Gandharvas, Kinnaras, Yakshas, Siddhas were among the former, while the Daityas, Asuras, and Rákshases were among the latter.

But who were the Nágas? In some respects they are represented as men, and in some as snakes. They had corporeal constitutions capable of (sexually) attracting and being attracted by human beings, and yet they were not without the serpentine furniture of the hood and the venomous fang. The word *nágas* is evidently the same as the *náchas* of Genesis, and we feel no difficulty in recognizing, in the Brahminical mythology, a confirmation of the Biblical account of the serpent, which was originally perhaps a species corresponding to the nága of the Brahmins, before the sentence was pronounced by which it became a creeping reptile.

Of the allegorical descriptions in the Puráṇas, the Deví-máhátmya presents a singular example. It is difficult to imagine what the Brahmins could mean by representing the discomfiture of the asuras by a single youthful lady. It has been supposed that the appearance

of Semiramis on the banks of the Indus probably suggested the tale. But, to say nothing of the mythical character of Semiramis herself, the retreat of a foreign enemy was not likely to be commemorated by the fabrication of a triumphant goddess. If the Brahmins had thought of preserving some recollections of the Babylonian queen in their literature, they would more probably have given her the sort of celebrity which Táḍaká, or Súrpanakhá the sister of Rávaṇa, enjoys in the Rámáyaṇa, or Putaná in the Srí Bhágavata.

The Deví-máhátmya appears to be altogether allegorical. The goddess was produced by the concentration of the energies of all the gods, and furnished with the weapons for which they were severally conspicuous. Supposing that the etherials had a quarrel with the demons and that after many signal defeats, separately sustained, they had thought of the wisdom of uniting their forces, and had formed a general confederacy by which the Asuras were vanquished,—how could an imaginative Brahmin describe the fact more felicitously than by means of the allegory of the Deví-máhátmya. The union of their forces and resources furnished the gods with a *power*, (the goddess has among other names that of Sácti) which the demons could not resist.

We have followed the *Gauḍiya*, or Bengal manuscripts, in this edition. The Maithila manuscripts present in many instances various readings of which the most remarkable is that which we have placed separately at the end. From the 28th sloka of chapter 135 that reading entirely diverges from Bengal manuscripts. We find no more convergence between the two even to the end of the book.

This divergence is a remarkable fact and may afford important evidence as to the extent to which the Purána is genuine. We have already referred to the opinion of of Professor Wilson that the Purána is incomplete because of its abrupt conclusion. He must have based his opinion on a consideration of Bengal manuscripts, for therein the conclusion is certainly abrupt. Take the various lection, however, with which Maithila manuscripts supplement the Purána, and the conclusion is not so abrupt.

The abrupt conclusion of Bengal manuscripts is to us an evidence of their comparative purity. If our theory be correct that the Puránas are compilations of detached memoranda, their abrupt conclusion can be no more wonderful than the abrupt conclusion of a person's journal, in which the diaries were entered at different times and on different occasions ; and the greater the abruptness of the conclusion, the less is the suspicion of after-embellishment.

The Bengal manuscripts, as we have already said, do not contain the foolish and hackneyed enumeration of the eighteen Puránas, and of Vyása their common parent, which can serve only to detract from their value as historical guides. There are however seven slokas at the end on the glory of the Márcandeya which are no doubt an interpolation. Setting these aside, the Purána concludes with the words, "Dama (the king) said nothing to his father's enemies when they were put to the flight." This may have been the last entry of the annalist who worte this Purána. If we accept it as the conclusion, and discard the supplement of the Maithila manuscripts, we may, again, have some light thrown on the introductory part of the Purána.

The introductory part, or what we have called our

first section, brings before us doctrines and characters of an after age to which no allusion is made in the body of the Puráṇa. In this interpolation Bengal manuscripts concur with the Maithila. But the simplicity of the Bengal interpolater, not sufficiently drilled in the manœuvres of Mithilá, betrays the secret. The introductory interpolation was evidently made without advertence to the conclusion. The winged sages and Jaimini were brought in for the purpose of broaching the doctrine of the quadruple form of Vásudeva, and for pacifying the Brahminical conscience still smarting under the polyandry of Draupadí, and the outrageous conduct of Balaráma. The interpolaters however forgot to wind up the conclusion consistently with their introduction. The birds are the living speakers, according to that introduction, and Jaimini the auditor. To make the interpolation complete and consistent, the birds and Jaimini ought to take leave of us when the curtain drops. Of them, however, there is no trace in Bengal manuscripts at the end.

The Maithila writers afterwards discovered and rectified the error, in the supplement of which we have spoken. But the omission in Bengal manuscripts, which it testifies to their comparative purity, opens our eyes to the whole interpolation. We are thereby emboldened to hazard the assertion that the Puráṇa, or compilation of legends, which has become noted under the name of Márcaṇḍeya commenced originally at chapter 45, where Márcaṇḍeya himself appears as the living speaker, and extends to chapter 137, where that living speaker removes from our sight. The first two sections, where the birds are the speakers and Jaimini the auditor, are interpolations, like the Deví-Máhátmya.

# मार्कण्डेय पुराणं ॥

## प्रथमोऽध्यायः ॥

ओं नमो भगवते वासुदेवाय ॥



यद्योगिभिर्भवभयार्त्तिविनाशयोग्य-
मासाद्य वन्दितमतीव विविक्तचित्तैः ।
तद्वः पुनातु हरिपादसरोजयुग्म-
माविर्भवत्क्रमविलङ्घितभूर्भुवःस्वः ॥ १ ॥
पायात् स वः सकलकल्मषभेददक्षः
क्षीरोदकुक्षिफणिभोगनिविष्टमूर्त्तिः ।
श्वासावधूतसलिलोत्कलिकाकरालः
सिन्धुः प्रनृत्यमिव यस्य करोति सङ्गात् ॥ २ ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

तपःस्वाध्यायनिरतं मार्कण्डेयं महामुनिं ।
व्यासशिष्यो महातेजा जैमिनिः पर्य्यपृच्छत ॥ १ ॥
भगवन् भारताख्यानं व्यासेनोक्तं महात्मना ।
पूर्णमस्तमलैः शुभ्रैर्नानाशास्त्रसमुच्चयैः ॥ २ ॥
जातिशुद्धिसमायुक्तं साधुशब्दोपशोभितं ।
पूर्व्वपक्षोक्तिसिद्धान्तपरिनिष्ठासमन्वितं ॥ ३ ॥

त्रिदशानां यथा विष्णुर्द्विपदां ब्राह्मणो यथा।
भूषणानाञ्च सर्वेषां यथा चूड़ामणिर्वरः ॥ ४ ॥
यथायुधानां कुलिशमिन्द्रियाणां यथा मनः ।
तथेह सर्व्वशास्त्राणां महाभारतमुत्तमं ॥ ५ ॥
अत्रार्थश्चैव धर्मश्च कामो मोक्षश्च वर्ण्यते ।
परस्परानुबन्धाश्च सानुबन्धाश्च ते पृथक् ॥ ६ ॥
धर्मशास्त्रमिदं श्रेष्ठमर्थशास्त्रमिदं परं ।
कामशास्त्रमिदं चाग्र्यं मोक्षशास्त्रं तथोत्तमं ॥ ७ ॥
चतुराश्रमधर्माणामाचारस्थितिसाधनं ।
प्रोक्तमेतन्महाभाग वेदव्यासेन धीमता ॥ ८ ॥
तथा तात कृतं ह्येतद्व्यासेनोदारकर्मणा ।
यथा व्याप्तं महाशास्त्रं विरोधैर्नाभिभूयते ॥ ९ ॥
व्यासवाक्यजलौघेन कुतर्कतरुहारिणा ।
वेदशैलावतीर्णेन नीरजस्का मही कृता ॥ १० ॥
कलशब्दमहाहंसं महाख्यानपराम्बुजं ।
कथाविस्तीर्णसलिलं कार्ष्णं वेदमहाह्रदं ॥ ११ ॥
तदिदं भारताख्यानं बह्वर्थं श्रुतिविस्तरं ।
तत्त्वतो ज्ञातुकामोऽहं भगवंस्त्वामुपस्थितः ॥ १२ ॥
कस्मान्मानुषतां प्राप्तो निर्गुणोऽपि जनार्दनः ।
वासुदेवो जगत्सूतिस्थितिसंयमकारणं ॥ १३ ॥
कस्माच्च पाण्डुपुत्राणामेका सा द्रुपदात्मजा ।
पञ्चानां महिषी कृष्णा अत्र नः संशयो महान् ॥ १४ ॥

भेषजं ब्रह्महत्याया बलदेवो महाबलः ।
तीर्थयात्राप्रसङ्गेन कस्माच्चक्रे हलायुधः ॥ १५ ॥
कथञ्च द्रौपदेयास्तेऽकृतदारा महारथाः ।
पाण्डुनाथा महात्मानो वधमापुरनाथवत् ॥ १६ ॥
एतत् सर्वं विस्तरशो ममाख्यातुमिहार्हसि ।
भवन्तो मूढबुद्धीनामवबोधकराः सदा ॥ १७ ॥
इति तस्य वचः श्रुत्वा मार्कण्डेयो महामुनिः ।
दशाष्टदोषरहितो वक्तुं समुपचक्रमे ॥ १८ ॥

मार्कण्डेय उवाच ।

क्रियाकालोऽयमस्माकं संप्राप्तो मुनिसत्तम ।
विस्तरे चापि वक्तव्ये नैष कालः प्रशस्यते ॥ १९ ॥
ये तु वक्ष्यन्ति वक्ष्येऽथ तानहं जैमिने तव ।
तथा च नष्टसन्देहं त्वां करिष्यन्ति पक्षिणः ॥ २० ॥
पिङ्गाक्षश्च विबोधश्च सुपत्रः सुमुखस्तथा ।
द्रोणपुत्राः खगश्रेष्ठास्तत्त्वज्ञाः शास्त्रचिन्तकाः ॥ २१ ॥
वेदशास्त्रार्थविज्ञाने येषामव्याहता मतिः ।
विन्ध्यकन्दरमध्यस्थास्तानुपास्य च पृच्छ च ॥ २२ ॥
एवमुक्तस्तदा तेन मार्कण्डेयेन धीमता ।
प्रत्युवाचर्षिशार्दूलो विस्मयोत्फुल्ललोचनः ॥ २३ ॥

जैमिनिरुवाच ।

अत्यद्भुतमिदं ब्रह्मन् खगवागिव मानुषी ।
यत् पक्षिणस्ते विज्ञानमापुरत्यन्तदुर्लभं ॥ २४ ॥

तिर्य्यग्योन्यां यदि भवस्तेषां ज्ञानं कुतोऽभवत्।
कथञ्च द्रोणतनयाः प्रोच्यन्ते ते पतत्रिणः ॥ २५ ॥
कश्च द्रोणः प्रविख्यातो यस्य पुत्रचतुष्टयं।
जातं गुणवतान्तेषां धर्मज्ञानं महात्मनां ॥ २६ ॥

मार्कण्डेय उवाच।

शृणुष्वावहितो भूत्वा यद्वृत्तं नन्दने पुरा।
शक्रस्याप्सरसाञ्चैव नारदस्य च सङ्गमे ॥ २७
नारदो नन्दनेऽपश्यत् पुंश्चलीगणमध्यगं।
शक्रं सुराधिराजानं तन्मुखासक्तलोचनं ॥ २८ ॥
स तेनर्षिवरिष्ठेन दृष्टमात्रः शचीपतिः।
समुत्तस्थौ स्वकञ्चास्मै ददावासनमादरात् ॥ २९ ॥
तं दृष्ट्वा बलहन्तारमुत्थितं त्रिदशाङ्गनाः।
प्रणेमुस्ताश्च देवर्षिं विनयावनताः स्थिताः ॥ ३० ॥
ताभिरभ्यर्च्चितः सोऽथ उपविष्टे शतक्रतौ।
यथार्हं कृतसंभाषः कथाश्चक्रे मनोरमाः ॥ ३१ ॥
ततः कथान्तरे शक्रस्तमुवाच महामुनिं।

शक्र उवाच॥

देह्याज्ञां नृत्यतामासां तव याभिमतेति वै ॥ ३२ ॥
रम्भा वा कर्कशा वाथ उर्वश्यथ तिलोत्तमा।
घृताची मेनका वापि यत्र वा भवतो रुचिः ॥ ३३ ॥
एतच्छ्रुत्वा द्विजश्रेष्ठोवाच शक्रस्य नारदः।
विचिन्त्याप्सरसः प्राह विनयावनताः स्थिताः ॥ ३४ ॥

युष्माकमिह सर्व्वासां रूपौदार्य्यगुणाधिकं ।
आत्मानं मन्यते या तु सा नृत्यतु ममाग्रतः ॥ ३५ ॥
गुणरूपविहीनायाः सिद्धिर्नाट्यस्य नास्ति वै ।
चार्व्वधिष्ठानवन्नृत्यं नृत्यमन्यद्विडम्बनं ॥ ३६ ॥

मार्कण्डेय उवाच ।

तद्वाक्यसमकालञ्च एकैकास्तां नतास्ततः ।
अहं गुणाधिका न त्वं न त्वं चान्याब्रवीदिदं ॥ ३७ ॥
तासां सम्भ्रममालोक्य भगवान् पाकशासनः ।
पृच्छ्यतां मुनिरित्याह वक्ता यां वो गुणाधिकां ॥ ३८ ॥
शक्रच्छन्दानुयाताभिः पृष्टस्ताभिः स नारदः ।
प्रोवाच यत्तदा वाक्यं जैमिने तन्निबोध मे ॥ ३९ ॥
तपस्यन्तन्नगेन्द्रस्थं या वः क्षोभयते बलात् ।
दुर्व्वाससं मुनिश्रेष्ठं तां वो मन्ये गुणाधिकां ॥ ४० ॥

मार्कण्डेय उवाच ।

तस्य तद्वचनं श्रुत्वा सर्व्वा वेपितकन्धराः ।
अशक्यमेतदस्माकमिति ताश्चक्रिरे कथाः ॥ ४१ ॥
तत्राप्सरा वपुर्नाम मुनिक्षोभणगर्व्विता ।
प्रत्युवाचानुयास्यामि यत्रासौ संस्थितो मुनिः ॥ ४२ ॥
अद्य तं देहयन्तारं प्रयुक्तेन्द्रियवाजिनं ।
स्मरशस्त्रगलद्रश्मिं करिष्यामि कुसारथिं ॥ ४३ ॥
ब्रह्मा जनार्द्दनो वापि यदि वा नीललोहितः ।
तमप्यद्य करिष्यामि कामबाणक्षतान्तरं ॥ ४४ ॥

इत्युक्त्वा प्रजगामाथ प्रालेयाद्रिं वपुस्तदा ।
मुनेस्तपःप्रभावेण प्रशान्तश्वापदाश्रमं ॥ ४५ ॥
सा पुंस्कोकिलमाधुर्य्यं यत्रास्ते स महामुनिः ।
क्रोशमात्रं स्थिता तस्मादगायत वराप्सराः ॥ ४६ ॥
तद्गीतध्वनिमाकर्ण्य मुनिर्विस्मितमानसः ।
जगाम तत्र यत्रास्ते सा बाला रुचिरानना ॥ ४७ ॥
तां दृष्ट्वा चारुसर्व्वाङ्गीं मुनिः संस्तभ्य मानसं ।
क्षोभणायागतां ज्ञात्वा कोपामर्षसमन्वितः ॥ ४८ ॥
उवाचेदन्ततो वाक्यं महर्षिस्तां महातपाः ॥ ४९ ॥
यस्माद्दुःखार्जितस्येह तपसो विघ्नकारणात् ।
आगतासि मदोन्मत्ते मम दुःखाय खेचरि ॥ ५० ॥
तस्मात् सुपर्णगोत्रे त्वं मत्क्रोधकलुषीकृता ।
जन्म प्राप्स्यसि दुष्प्रज्ञे यावद्वर्षाणि षोडश ॥ ५१ ॥
निजरूपं परित्यज्य पक्षिणीरूपधारिणी ।
चत्वारस्ते च तनयाजनिष्यन्तेऽधमाप्सरः ॥ ५२ ॥
अप्राप्य तेषु च प्रीतिं शस्त्रपूता पुनर्दिवि ।
वासमाप्स्यसि वक्तव्यन्नोत्तरन्ते कथञ्चन ॥ ५३ ॥
इति वचनमसह्यं कोपसंरक्तदृष्टि-
स्खलकलवलयान्तां मानिनीं श्रावयित्वा ।
तरलतरतरङ्गां गां परित्यज्य विप्रः
प्रथितगुणगणौघां संप्रयातः खगङ्गां ॥ ५४ ॥

इति मार्कण्डेयपुराणे वपुशापः प्रथमः ।

## द्वितीयोऽध्यायः ।

---

मार्कण्डेय उवाच ।

अरिष्टनेमिपुत्रोऽभूद्गरुडो नाम पक्षिराट् ।
गरुडस्याभवत् पुत्रः सम्पातिरिति विश्रुतः ॥ १ ॥
तस्याप्यासीत् सुतः शूरः सुपार्श्वो वायुविक्रमः ।
सुपार्श्वतनयः कुन्तिः कुन्तिपुत्रः प्रलोलुपः ॥ २ ॥
तस्यापि तनयावास्तां कङ्कः कन्धर एव च ॥ ३ ॥
कङ्कः कैलासशिखरे विद्युद्रूपेति विश्रुतं ।
ददर्शाम्बुजपत्राक्षं राक्षसं धनदानुगं ॥ ४ ॥
आपानासक्तममलस्रग्दामाम्बरधारिणं ।
भार्य्यासहायमासीनं शिलापट्टेऽमले शुभे ॥ ५ ॥
तद्दृष्टमात्रं कङ्केन रक्षः क्रोधसमन्वितं ।
प्रोवाच कस्मादायातस्त्वमितो ह्यण्डजाधम ॥ ६ ॥
स्त्रीसन्निकर्षे तिष्ठन्तं कस्मान्मामुपसर्पसि ।
नैष धर्मः सुबुद्धीनां मिथोनिर्व्याजवस्तुषु ॥ ७ ॥

कङ्क उवाच ।

साधारणोऽयं शैलेन्द्रो यथा तव तथा मम ।
अन्येषाञ्चैव जन्तूनां ममता भवतोऽत्र का ॥ ८ ॥

मार्कण्डेय उवाच ।

ब्रुवाणमित्थं खड्गेन कङ्कं चिच्छेद राक्षसः ।
क्षरत्क्षतजबीभत्सं विस्फुरन्तमचेतनं ॥ ९ ॥

कङ्कं विनिहतं श्रुत्वा कन्धरः क्रोधमूर्च्छितः।
विद्युद्रूपवधायाशु मनश्चक्रेऽण्डजेश्वरः॥ १०॥
स गत्वा शैलशिखरं कङ्को यत्र हतः स्थितः।
तस्य सङ्कलनञ्चक्रे भ्रातुर्ज्येष्ठस्य खेचरः।
कोपामर्षविवृत्ताक्षो नागेन्द्र इव निःश्वसन्॥ ११॥
जगामाथ स यत्रास्ते भ्रातृहा तस्य राक्षसः।
पक्षवातेन महता चालयन् भूधरान् वरान्॥ १२॥
वेगात् पयोदजालानि विक्षिपन् क्षतजेक्षणः।
क्षणात् क्षयितशत्रुः स पद्भ्यां क्रान्तभूधरः॥ १३॥
पानासक्तमतिं तत्र तं ददर्श निशाचरं।
आताम्रवक्त्रनयनं हेमपर्यङ्कमाश्रितं॥ १४॥
स्रग्दामापूरितशिखं हरिचन्दनभूषितं।
केतकीपत्रगर्भाभैर्दन्तैर्घोरतराननं॥ १५॥
वामोरुमाश्रितां चास्य ददर्शायतलोचनां।
पत्नीं मदनिकां नाम पुंस्कोकिलकलस्वनां॥ १६॥
ततो रोषपरीतात्मा कन्धरः कन्दरस्थितं।
तमुवाच सुदुष्टात्मन्नेहि युध्यस्व वै मया॥ १७॥
यस्माज्ज्येष्ठो मम भ्राता विस्रब्धो घातितस्त्वया।
तस्मात्त्वां मदसंसक्तं नयिष्ये यमसादनं॥ १८॥
विश्वस्तघातिनां लोका ये च स्त्रीबालघातिनां।
यास्यसे निरयान् सर्व्वांस्तांस्त्वमद्य मया हतः॥ १९॥

मार्कण्डेय उवाच ।

इत्येवं पतगेन्द्रेण प्रोक्ते स्त्रीसन्निधौ तदा ।
रक्षः क्रोधसमाविष्टं प्रत्यभाषत पक्षिणं ॥ २० ॥
यदि ते निहतो भ्राता पौरुषं तद्धि दर्शितं ।
त्वामप्यद्य हनिष्येऽहं खड्गेनानेन खेचर ॥ २१ ॥
तिष्ठ क्षणं नाद्य जीवन् पतगाधम यास्यसि ।
इत्युक्त्वाञ्जनपुञ्जाभं विमलं खड्गमाददे ॥ २२ ॥
ततः पतगराजस्य यक्षाधिपभटस्य च ।
बभूव युद्धमतुलं यथा गरुडशक्रयोः ॥ २३ ॥
ततः स राक्षसः क्रोधात् खड्गमाविध्य वेगवत् ।
चिक्षेप पतगेन्द्राय निर्वाणाङ्गारवर्चसं ॥ २४ ॥
पतगेन्द्रश्च तं खड्गं किञ्चिदुत्पत्य भूतलात् ।
वक्त्रेण जग्राह तदा गरुडः पन्नगं यथा ॥ २५ ॥
वक्त्रपादतलैर्भङ्क्त्वा चक्रे क्षोभमथाण्डजः ।
तस्मिन् भग्ने ततः खड्गे बाहुयुद्धमवर्त्तत ॥ २६ ॥
ततः पतगराजेन वक्षस्याक्रम्य राक्षसः ।
हस्तपादकरैराशु शिरसा च वियोजितः ॥ २७ ॥
तस्मिन्विनिहते सा स्त्री खगं शरणमभ्यगात् ।
किञ्चित् सञ्जातसन्त्रासा प्राह भार्य्या भवामि ते ॥ २८ ॥
तामादाय खगश्रेष्ठः स्वकं गृहमगात् पुनः ।
गत्वा स निष्कृतिं भ्रातुर्विद्युद्रूपनिपातनात् ॥ २९ ॥

कन्धरस्य च सा वेश्म प्राप्येच्छारूपधारिणी ।
मेनकातनया सुभ्रूः सौपर्णं रूपमादधे ॥ ३० ॥
तस्यां स जनयामास तार्क्षीं नाम सुतान्तदा ।
मुनिशापाग्निविप्लुष्टां वपुरप्सरसां वरां ।
तस्या नाम तदा चक्रे तार्क्षीमिति विहङ्गमः ॥ ३१ ॥
मन्दपालसुताश्चासंश्चत्वारोऽमितबुद्धयः ।
जरितारिप्रभृतयो द्रोणान्ता द्विजसत्तमाः ॥ ३२ ॥
तेषां जघन्यो धर्म्मात्मा वेदवेदाङ्गपारगः ।
उपयेमे स तान्तार्क्षीं कन्धरानुमते शुभां ॥ ३३ ॥
कस्यचित्त्वथ कालस्य तार्क्षी गर्भमवाप ह ।
सप्तपक्षाहिते गर्भे कुरुक्षेत्रं जगाम सा ॥ ३४ ॥
कुरुपाण्डवयोर्युद्धे वर्त्तमाने सुदारुणे ।
भावित्वाच्चैव कार्य्यस्य रणमध्यं विवेश सा ॥ ३५ ॥
तत्रापश्यत् तदा युद्धं भगदत्तकिरीटिनोः ।
निरन्तरं शरैरासीदाकाशं शलभैरिव ॥ ३६ ॥
पार्थकोदण्डनिर्मुक्तमासन्नमतिवेगवत् ।
तस्या भल्लमभिश्यामं त्वचं चिच्छेद जाठरीं ॥ ३७ ॥
भिन्ने कोष्ठे शशाङ्काभं भूमावण्डचतुष्टयं ।
आयुषः सावशेषत्वात्तूलराशाविवापतत् ॥ ३८ ॥
तत्पातसमकालञ्च सुप्रतीकाद्गजोत्तमात् ।
पपात महती घण्टा बाणसञ्छिन्नबन्धना ॥ ३९ ॥
समं समन्तात् प्राप्तां तु निर्भिन्नधरणीतला ।

छादयन्ती खगाण्डानि विततानि पितुरुपरि ॥ ४० ॥
हते च तस्मिन्नृपतौ भगदत्ते नरेश्वरे ।
बभून्यत्राण्यभूयङ्कं कुरुपाण्डवसैन्ययोः ॥ ४१ ॥
वृत्ते युद्धे धर्मपुत्रे गते शान्तनवान्तिकं ।
भीष्मस्य गदतोऽशेषान् श्रोतुं धर्मान्महात्मनः ॥ ४२ ॥
घण्टागतानि तिष्ठन्ति यत्राण्डानि द्विजोत्तम ।
आजगाम तमुद्देशं शमीको नाम संयमी ॥ ४३ ॥
स तत्र शब्दमशृणोच्चिचीकुचीति वाश्यतां ।
बाल्यादस्फुटवाक्यानां विज्ञानेऽपि परे सति ॥ ४४ ॥
अथर्षिः शिष्यसहितो घण्टामुत्पाट्य विस्मितः ।
अमातृपितृपक्षाणि शिशुकानि ददर्श ह ॥ ४५ ॥
तानि तत्र तथा भूमौ शमीको भगवान्मुनिः ।
दृष्ट्वा स विस्मयाविष्टः प्रोवाचानुगतान् द्विजान् ॥ ४६ ॥
सम्यगुक्तं द्विजाग्र्येण शुक्रेणोशनसा स्वयं ।
पलायनपरं दृष्ट्वा दैत्यसैन्यं सुरार्द्दितं ॥ ४७ ॥
न गन्तव्यं निवर्त्तध्वं कस्माद्व्रजत कातराः ।
उत्सृज्य शौर्य्ययशसी क्व गता न मरिष्यथ ॥ ४८ ॥
नश्यतो युध्यतो वापि तावद्भवति जीवितं ।
यावद्धाताऽसृजत् पूर्व्वं न यावन्मनसेप्सितं ॥ ४९ ॥
एके म्रियन्ते स्वगृहे पलायन्तोऽपरे जनाः ।
भुञ्जन्तोऽन्नं तथैवापः पिबन्तो निधनं गताः ॥ ५० ॥
विलासिनस्तथैवान्ये कामयाना निरामयाः ।

अविक्षताङ्गाः शक्रेण प्रेतराजवशङ्गताः ॥ ५१ ॥
अन्ये तपस्यभिरता नीताः प्रेतनृपानुगैः ।
योगाभ्यासे रताश्चान्ये नैव प्रापुस्तत्युताँ ॥ ५२ ॥
शम्बराय पुरा क्षिप्तं वज्रं कुलिशपाणिना ।
हृदयेऽभिहतस्तेन तथापि न मृतोऽसुरः ॥ ५३ ॥
तेनैव खलु वज्रेण तेनैवेन्द्रेण दानवाः ।
प्राप्ते काले हता दैत्यास्तत्क्षणान्निधनं गताः ॥ ५४॥
विदित्वैवं न सन्त्रासः कर्त्तव्यो विनिवर्त्तत ।
ततो निवृत्तास्ते दैत्यास्त्यक्त्वा मरणजं भयं ॥ ५५ ॥
इति मुन्यथः सत्यं कृतमेभिः खगोत्तमैः ।
ये युद्धेऽपि न संप्राप्ताः पञ्चत्वमतिमानुषे ॥ ५६ ॥
क्वाण्डानां पतनं विप्राः क्व घण्टापतनं समं ।
क्व च मांसवसारक्तैर्भूमेरास्तरणक्रिया: ॥ ५७ ॥
केऽप्येते सर्व्वथा विप्रा नैते सामान्यपक्षिणः ।
दैवानुकूलता लोके महाभाग्यप्रदर्शिनी ॥ ५८ ॥
एवमुक्त्वा स तान् वीक्ष्य पुनर्व्वचनमब्रवीत् ।
निवर्त्तताश्रमं यात गृहीत्वा पक्षिबालकान् ॥ ५९ ॥
मार्जाराखुभयं यत्र नैषामण्डजजन्मनां ।
श्येनतो नकुलाद्वापि स्थाप्यन्तां तत्र पक्षिणः ॥ ६० ॥
द्विजाः किं वातियत्नेन मार्य्यन्ते कर्मभिः स्वकैः ।
रक्ष्यन्ते चाखिला जीवा यथैते पक्षिबालकाः ॥ ६१ ॥
तथापि यत्नः कर्त्तव्यो नरैः सर्व्वेषु कर्मसु ।

कुर्व्वन् पुरुषकारन्तु वाच्यतां याति नो सतां ॥ ६२ ॥

इति मुनिवरचोदितास्ततस्ते
मुनितनयाः परिगृह्य पक्षिबालान्।
तरुविटपसमाश्रिताखिलसंघं
ययुरथ तापसरम्यमाश्रमं स्वं ॥ ६३ ॥

स चापि वन्यं मनसाभिकामितं
प्रगृह्य मूलं कुसुमं फलं कुशान्।
चकार चक्रायुधरुद्रवेधसां
सुरेन्द्रवैवस्वतजातवेदसां ॥ ६४ ॥

अपाम्पतेर्गोष्पतिवित्तरक्षिणोः
समीरणस्यापि तथा द्विजोत्तमः।
धातुर्विधातुस्त्वथ वैश्वदेविकाः
श्रुतिप्रयुक्ता विविधास्तु सत्क्रियाः ॥ ६५ ॥

इति मार्कण्डेयपुराणे चटकोत्पत्तिर्द्वितीयः ॥ २ ॥

---

तृतीयोऽध्यायः ॥



मार्कण्डेयउवाच ॥

अहन्यहनि विप्रेन्द्र स तेषां मुनिसत्तमः।
चकाराहारपयसा तथा गुप्त्या च पोषणं ॥ १ ॥
माससमात्रेण जग्मुस्ते भानोः स्यन्दनवर्त्मनि।
कौतूहलविलोलाक्षैर्दृष्टा मुनिकुमारकैः ॥ २ ॥

दृष्ट्वा मह्यीं सनगरां साम्भोनिधिसरिद्वरां ।
रथचक्रप्रमाणां ते पुनराश्रममागताः ॥ ३ ॥
श्रमक्लान्तान्तरात्मानो महात्मानो वियोनिजाः ।
ज्ञानञ्च प्रकटीभूतं तत्र तेषां प्रभावतः ॥ ४ ॥
ऋषेः शिष्यानुकम्पार्थं वदतो धर्म्मनिश्चयं ।
कृत्वा प्रदक्षिणां सर्व्वे चरणावभ्यवादयन् ॥ ५ ॥
ऊचुश्च मरणाद्घोरान्मोक्षिताः स्मस्त्वया मुने ।
आवासभक्ष्यपयसां त्वं नो दाता पिता गुरुः ॥ ६ ॥
गर्भस्थानां मृता माता पित्रा नैवापि पालिताः ।
त्वया नो जीवितं दत्तं शिशवो येन रक्षिताः ॥ ७ ॥
क्षितावित्ततेजास्त्वं कृमीणामिव शुष्यतां ।
गजघण्टां समुत्पाट्य कृतवान् दुःखरेचनं ॥ ८ ॥
कथं वर्द्धयुरबलाः खस्थान् द्रक्ष्याम्यहं कदा ।
कदा भूमेर्द्रुमं प्राप्तान् द्रक्ष्ये वृक्षान्तरं गतान् ॥ ९ ॥
कदा मे सहजा कान्तिः पांशुना नाशमेष्यति ।
एषां पक्षानिलोत्थेन मत्समीपविचारिणां ॥ १० ॥
इति चिन्तयता तात भवता प्रतिपालिताः ।
ते साम्प्रतं प्रवृद्धाः स्मः प्रबुद्धाः करवाम किं ॥ ११ ॥
इत्यृषिर्वचनं तेषां श्रुत्वा संस्कारवत् स्फुटं ।
शिष्यैः परिवृतः सर्व्वैः सह पुत्रेण शृङ्गिणा ॥ १२ ॥
कौतूहलपरो भूत्वा रोमाञ्चपटसंवृतः ।
उवाच तत्त्वतो ब्रूत प्रवृत्तेः कारणं गिरः ॥ १३ ॥

कस्य शापादियं प्राप्ता भवद्भिर्विक्रिया परा ।
रूपस्य वचसश्चैव तन्मे वक्तुमिहार्हथ ॥ १४ ॥

पक्षिण ऊचुः ।

विपुलस्वानिति ख्यातः प्रागासीन्मुनिसत्तमः ।
तस्य पुत्रद्वयं जज्ञे सुकृषस्तुम्बुरुस्तथा ॥ १५ ॥
सुकृषस्य वयं पुत्राश्चत्वारः संयतात्मनः ।
तस्यर्षेर्विनयाचारभक्तिनम्राः सदैव हि ॥ १६ ॥
तपश्चरणशक्तस्य शाम्यमानेन्द्रियस्य च ।
यथाभिमतमस्माभिस्तदा तस्योपपादितं ॥ १७ ॥
समित्पुष्पादिकं सर्व्वं यच्चैवाभ्यवहारिकं ।
एवं तत्राथ वसतां तस्यास्माकञ्च कानने ॥ १८ ॥
आजगाम महावर्ष्मा भग्नपक्षो जरान्वितः ।
आताम्रनेत्रः स्रस्तात्मा पक्षी भूत्वा सुरेश्वरः ॥ १९ ॥
सत्यशौचक्षमाचारमतीवोदारमानसं ।
जिज्ञासुस्तमृषिश्रेष्ठमस्मच्छापभवाय च ॥ २० ॥

पक्ष्युवाच ।

द्विजेन्द्र मां क्षुधाविष्टं परित्रातुमिहार्हसि ।
भक्षणार्थी महाभाग गतिर्भव ममातुला ॥ २१ ॥
विन्ध्यस्य शिखरे तिष्ठन् पक्षिपक्षेरितेन वै ।
पतितोऽस्मि महाभाग श्वसनेनातिरंहसा ॥ २२ ॥
सोऽहं मोहसमाविष्टो भूमौ सप्ताहमस्मृतिः ।

स्थितस्तत्राष्टमेनाह्ना चेतनां प्राप्तवानहं ॥ २३ ॥
प्राप्तचेताः क्षुधाविष्टो भवन्तं शरणं गतः ।
भक्ष्यार्थी विगतानन्दो दूयमानेन चेतसा ॥ २४ ॥
तत् कुरुष्वामलमते मत्त्राणायाचलां मतिं ।
प्रयच्छ भक्ष्यं विप्रर्षे प्राणयात्राक्षमं मम ॥ २५ ॥
स एवमुक्तः प्रोवाच तमिन्द्रं पक्षिरूपिणं ।
प्राणसन्धारणार्थाय दास्ये भक्ष्यं तवेप्सितं ॥ २६ ॥
इत्युक्ता पुनरप्येनमपृच्छत् स द्विजोत्तमः ।
आहारः कस्तवार्थाय उपकल्प्यो भवेन्मया ।
स चाह नरमांसेन तृप्तिर्भवति मे परा ॥ २७ ॥

ऋषिरुवाच ॥

कौमारं ते व्यतिक्रान्तमतीतं यौवनञ्च ते ।
वयसः परिणामस्ते वर्त्तते नूनमण्डज ॥ २८ ॥
यस्मिन्नराणां सर्व्वेषामशेषेच्छा निवर्त्तते ।
स कस्माद्वृद्धभावेऽपि सुनृशंसात्मको भवान् ॥ २९ ॥
क्व मानुषस्य पिशितं क्व वयश्चरमं तव ।
सर्व्वथा दुष्टभावानां प्रथमो नोपपद्यते ॥ ३० ॥
अथवा किं मयैतेन प्रोक्तेनास्ति प्रयोजनं ।
प्रतिश्रुत्य सदा देयमिति मो भावितं मनः ॥ ३१ ॥
इत्युक्ता तं स विप्रेन्द्रस्तथेति कृतनिश्चयः ।
शीघ्रमस्मान् समाहूय गुणतोऽनुप्रशस्य च ॥ ३२ ॥
उवाच क्षुब्धहृदयो मुनिर्वाक्यं सुनिष्ठुरं ।

विनयावनतान् सर्व्वान् भक्तियुक्तान् कृताञ्जलीन् ॥ ३३ ॥
कृतात्मानो द्विजश्रेष्ठा कर्मयुक्तामया सह ।
जातं श्रेष्ठमपत्यं वो यूयं मम यथा द्विजाः ॥ ३४ ॥
गुरुः पूज्यो यदि मतो भवतां परमः पिता ।
ततः कुरुत मे वाक्यं निर्व्यलीकेन चेतसा ॥ ३५ ॥
तद्वाक्यसमकालञ्च प्रोक्तमस्माभिरादृतैः ।
यद्वक्ष्यति भवांस्तद्वै कृतमेवावधार्य्यतां ॥ ३६ ॥

ऋषिरुवाच ॥

मामेष शरणं प्राप्तो विहगः क्षुत्तृषान्वितः ।
युष्मन्मांसेन येनास्य क्षणं तृप्तिर्भवेत वै ॥ ३७ ॥
तृष्णाक्षयश्च रक्तेन तथा शीघ्रं विधीयतां ।
ततो वयं प्रव्यथिताः प्रकम्पोद्भूतसाध्वसाः ।
कष्टं कष्टमिति प्रोच्य नैतत् कर्मेति चाब्रुवन् ॥ ३८ ॥
कथं परशरीरस्य हेतोर्देहं स्वकं बुधः ।
विनाशयेद्घातयेद्वा यथाह्यात्मा तथा सुतः ॥ ३९ ॥
पितृदेवमनुष्याणां यान्युक्तानि ऋणानि वै ।
तान्यपाकुरुते पुत्रो न शरीरप्रदः सुतः ॥ ४० ॥
तस्मान्नैतत् करिष्यामो नो चीर्णं यत् पुरातनैः ।
जीवन् भद्राण्यवाप्नोति जीवन् पुण्यं करोति च ॥ ४१ ॥
मृतस्य देहनाशश्च धर्म्माद्युपरतिस्तथा ।
आत्मानं सर्व्वतो रक्ष्यमाहुर्धर्म्मविदो जनाः ॥ ४२ ॥
इत्थं श्रुत्वा वचोऽस्माकं मुनिः क्रोधादिव ज्वलन् ।

प्रोवाच पुनरप्यस्मान् निर्दहन्निव लोचनैः॥४३॥
प्रतिज्ञातं वचो मह्यं यस्मान्नैतत् करिष्यथ।
तस्मान्मच्छापनिर्दग्धास्तिर्य्यग्योनौ प्रयास्यथ॥४४॥
एवमुक्त्वा तदा सोऽस्मांस्तं विहङ्गममब्रवीत्।
अन्त्येष्टिमात्मनः कृत्वा शास्त्रतश्चौर्द्ध्वदैहिकं॥४५॥
भक्षयस्व सुविस्रब्धो मामत्र द्विजसत्तम।
आहारीकृतमेतत्ते मया देहमिहात्मनः॥४६॥
एतावदेव विप्रस्य ब्राह्मणत्वं प्रचक्ष्यते।
यावत् पतगजात्यग्र स्वसत्यपरिपालनं॥४७॥
न यज्ञैर्दक्षिणावद्भिस्तत्पुण्यं प्राप्यते महत्।
कर्मणान्येन वा विप्रैर्यत् सत्यपरिपालनात्॥४८॥
इत्यृषेर्वचनं श्रुत्वा सोऽन्तर्विस्मयनिर्भरः।
प्रत्युवाच मुनिं शक्रः पक्षिरूपधरस्तदा॥४९॥
योगमास्थाय विप्रेन्द्र त्यजेदं स्वं कलेवरं।
जीवज्जन्तुं हि विप्रेन्द्र न भक्षामि कदाचन॥५०॥
तस्यैतद्वचनं श्रुत्वा योगयुक्तोऽभवन्मुनिः।
तं तस्य निश्चयं ज्ञात्वा शक्रोऽप्याह स्वदेहभृत्॥५१॥
भो भो विप्रेन्द्र बुध्यस्व बुद्ध्या बोध्यं बुधात्मक।
जिज्ञासार्थं मयाऽयं ते अपराधः कृतोऽनघ॥५२॥
तत् क्षमस्वामलमते का त्वेच्छा क्रियतां तव।
पालनात् सत्यवाक्यस्य प्रीतिर्मे परमा त्वयि॥५३॥
अद्य प्रभृति ते ज्ञानमैन्द्रं प्रादुर्भविष्यति।

तपस्यथ तथा धर्म्मे न ते विघ्नो भविष्यति ॥ ५४ ॥
इत्युक्ता तु गते शक्रे पिता कोपसमन्वितः ।
प्रणम्य शिरसाऽस्माभिरिदमुक्तो महामुनिः ॥ ५५ ॥
बिभ्यतां मरणात्तात त्वमस्माकं महामते ।
क्षन्तुमर्हसि दीनानां जीवितप्रियता हि नः ॥ ५६ ॥
त्वगस्थिमांससंघाते पूयशोणितपूरिते ।
कर्त्तव्या न रतिर्यत्र तथास्माकमियं रतिः ॥ ५७ ॥
श्रूयताञ्च महाभाग यथा लोको विमह्यति ।
कामक्रोधादिभिर्दोषैरवशः प्रबलारिभिः ॥ ५८ ॥
प्रज्ञाप्राकारसंयुक्तमस्थिस्थूणं पुरं महत् ।
चर्मभित्तिमहारोधं मांसशोणितलेपनं ॥ ५९ ॥
नवद्वारं महायासं सर्व्वतः स्नायुवेष्टितं ।
नृपश्च पुरुषस्तत्र चेतनावानवस्थितः ॥ ६० ॥
मन्त्रिणौ तस्य बुद्धिश्च मनश्चैव विरोधिनौ ।
यतेते वैरनाशाय तावुभावितरेतरं ॥ ६१ ॥
नृपस्य तस्य चत्वारो नाशमिच्छन्ति विद्विषः ।
कामः क्रोधस्तथा लोभो मोहश्चान्यस्तथा रिपुः ॥ ६२ ॥
यदा तु स नृपस्तानि द्वाराण्यावृत्य तिष्ठति ।
तदा सुस्थबलश्चैव निरातङ्कश्च जायते ॥ ६३ ॥
जातानुरागो भवति शत्रुभिर्नाभिभूयते ॥ ६४ ॥
यदा तु सर्व्वद्वाराणि विवृतानि स मुञ्चति ।
रागो नाम तदा शत्रुर्नेत्रादिद्वारमृच्छति ॥ ६५ ॥

सर्व्वव्यापी महायामः कच्छदारप्रवेशनः।
तस्यानुमार्गं विशति तद्वै घोरं रिपुत्रयं॥ ६६॥
प्रविश्याथ स वै तत्र द्वारैरिन्द्रियसंज्ञकैः।
रागः संश्लेषमायाति मनसा च सहेतरैः॥ ६७॥
इन्द्रियाणि मनश्चैव वशे कृत्वा दुरासदः।
द्वाराणि च वशे कृत्वा प्राकारं नाशयत्यथ॥ ६८॥
मनस्तस्याश्रितं दृष्ट्वा बुद्धिर्नश्यति तत्क्षणात्।
अमात्यरहितस्तत्र पौरवर्गोज्झितस्तथा॥ ६९॥
रिपुभिर्लब्धविवरः स नृपो नाशमृच्छति।
एवं रागस्तथा मोहो लोभः क्रोधस्तथैव च॥ ७०॥
प्रवर्त्तन्ते दुरात्मानो मनुष्यस्मृतिनाशकाः।
रागात् क्रोधः प्रभवति क्रोधाल्लोभोऽभिजायते॥ ७१॥
लोभाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति॥ ७२॥
एवं प्रणष्टबुद्धीनां रागलोभानुवर्त्तिनां।
जीविते च सलोभानां प्रसादं कुरु सत्तम॥ ७३॥
योऽयं शापो भगवता दत्तः स न भवेत्तथा।
न तामसीं गतिं कष्टां व्रजेम मुनिसत्तम॥ ७४॥

ऋषिरुवाच॥

यन्मयोक्तं न तन्मिथ्या भविष्यति कदाचन।
न मे वागनृतं प्राह यावदद्येति पुत्रकाः॥ ७५॥
दैवमत्र परं मन्ये धिक् पौरुषमनर्थकं।

अकार्य्यं कारितो येन बलादस्मत्पिता किल ॥ ७६ ॥
यस्माच्च युष्माभिरयं मयि पश्च प्रसादितः ।
तस्मात्तिर्य्यक्त्वमापन्नाः परं ज्ञानमवाप्स्यथ ॥ ७७ ॥
ज्ञानदर्शितमार्गाश्च निर्धूतक्लेशकल्मषाः ।
मत्प्रसादादसन्दिग्धाः परां सिद्धिमवाप्स्यथ ॥ ७८ ॥
एवं शप्ताः स्म भगवन् पित्रा दैववशात् पुरा ।
ततः कालेन महता योन्यन्तरमुपागताः ॥ ७९ ॥
जाताश्च रणमध्ये वै भवता परिपालिताः ।
वयमित्थं द्विजश्रेष्ठ खगत्वं समुपागताः ।
नास्त्यसाविह संसारे यो न दिष्टेन बाध्यते ॥ ८० ॥

मार्कण्डेय उवाच ।

इति तेषां वचः श्रुत्वा शमीको भगवान् मुनिः ।
प्रत्युवाच महाभागः समीपस्थायिनो द्विजान् ॥ ८१ ॥
पूर्व्वमेव मया प्रोक्तं भवतां सन्निधाविदं ।
सामान्यपक्षिणो नैते केऽप्येते द्विजसत्तमाः ।
ये युद्धेऽपि न संप्राप्ताः पञ्चत्वमतिमानुषे ॥ ८२ ॥
ततः प्रीतिमता तेन तेऽनुज्ञाता महात्मना ।
जग्मुः शिखरिणां श्रेष्ठं विन्ध्यं द्रुमलतायुतं ॥ ८३ ॥
यावदद्य स्थितास्तस्मिन्नचले धर्मपक्षिणः ।
तपःस्वाध्यायनिरताः समाधौ कृतनिश्चयाः ॥ ८४ ॥
इतिमुनिवरलब्धसत्क्रियास्ते
मुनितनया विहगत्वमभ्युपेताः ।

गिरिवरगह्वरेऽतिपुण्यतोये
यतमनसो निवसन्ति विन्ध्यपृष्ठे ॥ ८५ ॥

इति मार्कण्डेयपुराणे विन्ध्यप्राप्तिः ॥ ३ ॥

चतुर्थोऽध्यायः ॥

मार्कण्डेय उवाच ॥

एवन्ते द्रोणतनयाः पक्षिणो ज्ञानिनोऽभवन् ।
वसन्ति ह्यचले विन्ध्ये तानुपास्व च पृच्छ च ॥ १ ॥
इत्यृषेर्वचनं श्रुत्वा मार्कण्डेयस्य जैमिनिः ।
जगाम विन्ध्यशिखरं यत्र ते धर्मपक्षिणः ॥ २ ॥
तन्नगासन्नभूतश्च शुश्राव पठतां ध्वनिं ।
श्रुत्वा च विस्मयाविष्टश्चिन्तयामास जैमिनिः ॥ ३ ॥
स्थानसौष्ठवसम्पन्नं जितश्वासमविभ्रमं ।
विस्पष्टमपदोषञ्च पठ्यते द्विजसत्तमैः ॥ ४ ॥
वियोनिमपि संप्राप्तानेतान्मुनिकुमारकान् ।
चित्रमेतदहं मन्ये न जहाति सरस्वती ॥ ५ ॥
बन्धुवर्गस्तथा मित्रं यच्चान्यदिष्टमपरं गृहे ।
त्यक्त्वा गच्छति तत् सर्व्वं न जहाति सरस्वती ॥ ६ ॥
इति सञ्चिन्तयन्नेव विवेश गिरिकन्दरं ।
प्रविश्य च ददर्शासौ शिलापट्टगतान् द्विजान् ॥ ७ ॥

पठतस्तान् समालोक्य मुखदोषविवर्जितान् ।
सोऽथ शोकेन हर्षेण सर्व्वानेवाभ्यभाषत ॥ ८ ॥
स्वस्त्यस्तु वो द्विजश्रेष्ठा जैमिनिं मां निबोधत ।
व्यासशिष्यमनुप्राप्तं भवतां दर्शनोत्सुकं ॥ ९ ॥
मन्युर्न खलु कर्त्तव्यो यत् पितातीवमन्युना ।
शप्ताः खगत्वमापन्नाः सर्व्वथा दिष्टमेव तत् ॥ १० ॥
स्फीतद्रव्ये कुले केचिज्जाताः किल मनस्विनः ।
द्रव्यनाशे द्विजेन्द्रास्ते शबरेण सुसान्त्विताः ॥ ११ ॥
दत्वा याचन्ति पुरुषा हत्वा वध्यन्ति चापरे ।
पातयित्वा च पात्यन्ते त एव तपसः क्षयात् ॥ १२ ॥
एतद्दृष्टं सुबहुशो विपरीतं तथा मया ।
भावाभावसमुच्छेदैरजस्रं व्याकुलं जगत् ॥ १३ ॥
इति संचिन्त्य मनसा न शोकं कर्त्तुमर्हथ ।
ज्ञानस्य फलमेतावच्छोकहर्षैरधृष्यता ॥ १४ ॥
ततस्ते जैमिनिं सर्व्वे पाद्यार्घ्याभ्यामपूजयन् ।
अनामयञ्च पप्रच्छुः प्रणिपत्य महामुनिं ॥ १५ ॥
अथोचुः खगमाः सर्व्वे व्यासशिष्यं तपोनिधिं ।
सुखोपविष्टं विश्रान्तं पक्षानिलहृतश्रमं ॥ १६ ॥

पक्षिण ऊचुः ।

अद्य नः सफलं जन्म जीवितञ्च सुजीवितं ।
यत् पश्यामः सुरैर्वन्द्यं तव पादाम्बुजद्वयं ॥ १७ ॥
पितुः कोपाग्निरुद्भूतो यो नो देहेषु वर्त्तते ।

सोऽद्य शान्तिं गतो विप्र युष्मद्दर्शनवारिणा ॥ १८ ॥
कच्चित्ते कुशलं ब्रह्मन्नाश्रमे मृगपक्षिषु ।
वृक्षेष्वथ लतागुल्मत्वक्सारतृणजातिषु ॥ १९ ॥
अथवा नैतदुक्तं हि सम्यगस्माभिरादृतैः ।
भवता सङ्गमो येषां तेषामकुशलं कुतः ॥ २० ॥
प्रसादश्च कुरुष्वास्य ब्रूह्यागमनकारणं ।
देवानामिव संसर्गो भवतोऽभ्युदयो महान् ।
केनास्मद्भाग्यगुरुणा आनीतो दृष्टिगोचरं ॥ २१ ॥

जैमिनिरुवाच ॥

श्रूयतां द्विजशार्दूलाः कारणं येन कन्दरं ।
विन्ध्यस्येहागतो रम्यं रेवावारिकणोक्षितं ।
सन्देहान् भारते शास्त्रे तान् प्रष्टुं गतवानहं ॥ २२ ॥
मार्कण्डेयं महात्मानं पूर्व्वं भृगुकुलोद्वहं ।
तमहं पृष्टवान् प्राप्य सन्देहान् भारतं प्रति ॥ २३ ॥
स च पृष्टो मया प्राह सन्ति विन्ध्ये महाचले ।
द्रोणपुत्त्रा महात्मानस्ते वक्ष्यन्त्यर्थविस्तरं ॥ २४ ॥
तद्वाक्यचोदितश्चेममागतोऽहं महागिरिं ।
तत् शृणुध्वमशेषेण श्रुत्वा व्याख्यातुमर्हथ ॥ २५ ॥

पक्षिण ऊचुः ॥

विषये सति वक्ष्यामो निर्व्विशङ्काः शृणुष्व तत् ।
कथं तन्न वदिष्यामो यदस्मद्बुद्धिगोचरं ॥ २६ ॥
चतुर्ष्वपि हि वेदेषु धर्मशास्त्रेषु चैव हि ।

समस्तेषु तथाङ्गेषु यथान्यद्वेदसम्मितं ॥ २७ ॥
एतेषु गोचरोऽस्माकं बुद्धेर्ब्राह्मणसत्तम ।
प्रतिज्ञान्तु समावोढुं तथापि न हि शक्नुमः ॥ २८ ॥
तस्माद्वदस्व विश्रब्धं सन्दिग्धं यद्धि भारते ।
वक्ष्यामस्तव धर्मज्ञ न चेन्मोहो भविष्यति ॥ २९ ॥

जैमिनिरुवाच ॥

सन्दिग्धानीह वस्तूनि भारतं प्रति यानि मे ।
शृणुध्वममलास्तानि श्रुत्वा व्याख्यातुमर्हथ ॥ ३० ॥
कस्मान्मानुषतां प्राप्तो निर्गुणोऽपि जनार्द्दनः ।
वासुदेवोऽखिलाधारः सर्व्वकारणकारणं ॥ ३१ ॥
कस्माच्च पाण्डुपुत्राणामेका सा द्रुपदात्मजा ॥
पञ्चानां महिषी कृष्णा सुमहानत्र संशयः ॥ ३२ ॥
भेषजं ब्रह्महत्याया बलदेवो महाबलः ।
तीर्थयात्राप्रसङ्गेन कस्माच्चक्रे हलायुधः ॥ ३३ ॥
कथञ्च द्रौपदेयास्तेऽकृतदारा महारथाः ।
पाण्डुनाथा महात्मानो बधमापुरनाथवत् ॥ ३४ ॥
एतत् सर्व्वं कथ्यतां मे सन्दिग्धं भारतं प्रति ।
कृतार्थोऽहं सुखं येन गच्छेयं निजमाश्रमं ॥ ३५ ॥

पक्षिण ऊचुः ॥

नमस्कृत्य सुरेशाय विष्णवे प्रभविष्णवे ।
पुरुषायाप्रमेयाय शाश्वतायाव्ययाय च ॥ ३६ ॥
चतुर्व्यूहात्मने तस्मै त्रिगुणायागुणाय च ।

वरिष्ठाय गरिष्ठाय वरेण्यायामृताय च ॥ ३७ ॥
यस्मादणुतरन्नास्ति यस्मान्नास्ति वृहत्तरं ।
येन विश्वमिदं व्याप्तमजेन जगदादिना ॥ ३८ ॥
आविर्भावतिरोभावदृष्टादृष्टविलक्षणं ।
वदन्ति यत् सृष्टमिदं तथैवान्ते च संहृतं ॥ ३९ ॥
ब्रह्मणे चादिदेवाय नमस्कृत्य समाधिना ।
ऋक्सामान्युद्गिरन्वक्त्रैर्यः पुनाति जगत्त्रयं ॥ ४० ॥
प्रणिपत्य तथेशानमेकबाणविनिर्जितैः ।
यस्यासुरगणैर्यज्ञा विलुप्यन्ते न यज्विनां ॥ ४१ ॥
प्रवक्ष्यामो मतं कृत्स्नं व्यासस्याद्भुतकर्म्मणः ।
येन भारतमुद्दिश्य धर्म्माद्याः प्रकटीकृताः ॥ ४२ ॥
आपो नारा इति प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः ।
अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः ॥ ४३ ॥
स देवो भगवान् सर्व्वं व्याप्य नारायणो विभुः ।
चतुर्द्धा संस्थितो ब्रह्मन् सगुणो निर्गुणस्तथा ॥ ४४ ॥
एका मूर्त्तिरनिर्द्देश्या शुक्लां पश्यन्ति तां बुधाः ।
ज्वालामालावनद्धाङ्गी निष्ठा सा योगिनां परा ॥ ४५ ॥
दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा ।
वासुदेवाभिधानोऽसौ निर्म्ममत्वेन दृश्यते ॥ ४६ ॥
रूपवर्णादयस्तस्या न भावाः कल्पनामयाः ।
अस्त्येव सा सदा शुद्धा सुप्रतिष्ठैकरूपिणी ॥ ४७ ॥
द्वितीया पृथिवीं मूर्द्ध्ना शेषाख्या धारयत्यधः ।

तामसी सा समाख्याता तिर्य्यक्त्वं समुपाश्रिता ॥ ४८ ॥
तृतीया कर्म कुरुते प्रजापालनतत्परा ।
सत्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ॥ ४९ ॥
चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा ।
रजस्तस्या गुणः सर्गं सा करोति सदैव हि ॥ ५० ॥
या तृतीया हरेर्मूर्त्तिः प्रजापालनतत्परा ।
सा तु धर्मव्यवस्थानं करोति नियतं भुवि ॥ ५१ ॥
प्रोद्भूतानसुरान् हन्ति धर्मविच्छित्तिकारिणः ।
पाति देवान् सतश्चान्यान् धर्मरक्षापरायणान् ॥ ५२ ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति जैमिने ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजत्यसौ ॥ ५३ ॥
भूत्वा पुरा वराहेण तुण्डेनापो निरस्य च ।
एकया दंष्ट्रयोत्खाता नलिनीव वसुन्धरा ॥ ५४ ॥
कृत्वा नृसिंहरूपञ्च हिरण्यकशिपुर्हतः ।
विप्रचित्तिमुखाश्चान्ये दानवा विनिपातिताः ॥ ५५ ॥
वामनादींस्तथैवान्यान् संख्यातुमिह नोत्सहे ।
अवतारांश्च तस्येह माथुरः साम्प्रतं त्वयं ॥ ५६ ॥
इति सा सात्त्विकी मूर्त्तिरवतारान् करोति वै ।
प्रद्युम्नेति च सा ख्याता रक्षाकर्मण्यवस्थिता ॥ ५७ ॥
देवत्वेऽथ मनुष्यत्वे तिर्य्यग्योनौ च संस्थिता ।
गृह्णाति तत्स्वभावञ्च वासुदेवेच्छया सदा ॥ ५८ ॥
इत्येतत्ते समाख्यातं कृतकृत्योऽपि यत्प्रभुः ।

मानुषत्वं गतो विष्णुः शृणुष्वास्योत्तरं पुनः ॥ ५८ ॥

इति मार्कण्डेयपुराणे चतुर्व्यूहावतारः ॥

पञ्चमोऽध्यायः ॥



पक्षिण ऊचुः ॥

त्वष्टृपुत्रे हते पूर्व्वं ब्रह्मन्निन्द्रस्य तेजसः ।
ब्रह्महत्याभिभूतस्य परा हानिरजायत ॥ १ ॥
तद्धर्मं प्रविवेशाथ शाक्रतेजोऽपचारतः ।
निस्तेजाश्चाभवच्छक्रो धर्मे तेजसि निर्गते ॥ २ ॥
ततः पुत्रं हतं श्रुत्वा त्वष्टा क्रुद्धः प्रजापतिः ।
अवलुञ्च्य जटामेकामिदं वचनमब्रवीत् ॥ ३ ॥
अद्य पश्यन्तु मे वीर्य्यं त्रयो लोकाः सदेवताः
स च पश्यतु दुर्बुद्धिर्ब्रह्महा पाकशासनः ॥ ४ ॥
स्वकर्माभिरतो येन मत्सुतो विनिपातितः ।
इत्युक्त्वा कोपरक्ताक्षो जटामग्नौ जुहाव तां ॥ ५ ॥
ततो वृत्रः समुत्तस्थौ ज्वालामाली महासुरः ।
महाकायो महादंष्ट्रो भिन्नाञ्जनचयप्रभः ॥ ६ ॥
इन्द्रशत्रुरमेयात्मा त्वष्टृतेजोऽपबृंहितः ।
अहन्यहनि सोऽवर्द्धदिषुपातं महाबलः ॥ ७ ॥
वधाय चात्मनो दृष्ट्वा वृत्रं शक्रो महासुरं ।
प्रेषयामास सप्तर्षीन् सन्धिमिच्छन् भयातुरः ॥ ८ ॥

सख्यञ्चक्रुस्ततस्तस्य वृत्रेण समयांस्तथा ।
ऋषयः प्रीतमनसः सर्व्वभूतहिते रताः ॥ ९ ॥
समयस्थितिमुल्लङ्घ्य यदा शक्रेण घातितः ।
वृत्रो हत्याभिभूतस्य तदा बलमशीर्य्यत ॥ १० ॥
तच्छक्रदेहविभ्रष्टं बलं मारुतमाविशत् ।
सर्व्वव्यापिनमव्यक्तं बलस्यैवाधिदैवतं ॥ ११ ॥
अहल्याञ्च यदा शक्रो गौतमं रूपमास्थितः ।
धर्षयामास देवेन्द्रस्तदा रूपमहीयत ॥ १२ ॥
अङ्गप्रत्यङ्गलावण्यं यदतीवमनोरमं ।
विहाय दुष्टं देवेन्द्रं नासत्यावगमत्ततः ॥ १३ ॥
धर्म्मेण तेजसा त्यक्तं बलहीनमरूपिणं ।
ज्ञात्वा सुरेशं दैतेयास्तज्जये चक्रुरुद्यमं ॥ १४ ॥
राज्ञामुद्रिक्तवीर्य्याणां देवेन्द्रं विजिगीषवः ।
कुलेष्वतिबला दैत्या अजायन्त महामुने ॥ १५ ॥
कस्यचित्त्वथ कालस्य धरणी भारपीडिता ।
जगाम मेरुशिखरं सदो यत्र दिवौकसां ॥ १६ ॥
तेषां सा कथयामास भूरिभारावपीडिता ।
दनुजात्मजदैत्योत्थं खेदकारणमात्मनः ॥ १७ ॥
एते भवद्भिरसुरा निहताः पृथुलौजसः ।
ते सर्व्वे मानुषे लोके जाता गेहेषु भूभृतां ॥ १८ ॥
अक्षौहिण्योहि बहुलास्तद्भारार्त्ता व्रजाम्यधः ।
तथा कुरुध्वं त्रिदशा यथा शान्तिर्भवेन्मम ॥ १९ ॥

पक्षिण ऊचुः ॥

तेजोभागैस्ततो देवा अवतेरुर्दिवो महीं ।
प्रजानामुपकारार्थं भूभारहरणाय च ॥ २० ॥
यदिन्द्रदेहजं तेजस्तन्मुमोच स्वयं वृषः ।
कुन्त्यां जातो महातेजास्ततो राजा युधिष्ठिरः ॥ २१ ॥
बलं मुमोच पवनस्ततो भीमो व्यजायत ।
शक्रवीर्य्यार्द्धतश्चैव जज्ञे पार्थो धनञ्जयः ॥ २२ ॥
उत्पन्नौ यमजौ माद्र्यां शक्ररूपौ महाद्युती ।
पञ्चधा भगवानित्थमवतीर्णः शतक्रतुः ॥ २३ ॥
तस्योत्पन्ना महाभागा पत्नी कृष्णा हुताशनात् ॥ २४ ॥
शक्रस्यैकस्य सा पत्नी कृष्णा नान्यस्य कस्यचित् ।
योगीश्वराः शरीराणि कुर्व्वन्ति बहुलान्यपि ॥ २५ ॥
पञ्चानामेकपत्नीत्वमित्येतत् कथितं तव ।
श्रूयतां बलदेवोऽपि यथा यातः सरस्वतीं ॥ २६ ॥

इति मार्कण्डेयपुराणे इन्द्रविक्रिया ॥ ५ ॥

षष्ठोऽध्यायः ॥



पक्षिण ऊचुः ॥

रामः पार्थे परां प्रीतिं ज्ञात्वा कृष्णस्य लाङ्गली ।
चिन्तयामास बहुधा किं कृतं सुकृतं भवेत् ॥ १ ॥

कृष्णेन हि विना नाहं यास्ये दुर्य्योधनान्तिकं ।
पाण्डवान् वा समाश्रित्य कथं दुर्य्योधनं नृपं ॥ २ ॥
जामातरं तथा शिष्यं घातयिष्ये नरेश्वरं ।
तस्मान्न पार्थं यास्यामि नापि दुर्य्योधनं नृपं ॥ ३ ॥
तीर्थेष्वाप्लावयिष्यामि तावदात्मानमात्मना ।
कुरूणां पाण्डवानाञ्च यावदन्ताय कल्पते ॥ ४ ॥
इत्यामन्त्र्य हृषीकेशं पार्थदुर्य्योधनावपि ।
जगाम द्वारकां शौरिः स्वसैन्यपरिवारितः ॥ ५ ॥
गत्वा द्वारवतीं रामो हृष्टपुष्टजनाकुलां ।
श्वोगन्तव्येषु तीर्थेषु पपौ पानं हलायुधः ॥ ६ ॥
पीतपानो जगामाथ रैवतोद्यानमृद्धिमत् ।
हस्ते गृहीत्वा समदां रेवतीमप्सरोपमां ॥ ७ ॥
स्त्रीकदम्बकमध्यस्थो ययौ मत्तः पदा स्खलन् ।
ददर्श च वनं वीरो रमणीयमनुत्तमं ॥ ८ ॥
सर्व्वर्त्तुफलपुष्पाढ्यं शाखामृगगणाकुलं ।
पुण्यं पद्मवनोपेतं सपल्वलमहावनं ॥ ९ ॥
स शृण्वन् प्रीतिजननान् वल्गून्मदकलान् शुभान् ।
श्रोत्ररम्यान् सुमधुरान् शब्दान् खगमुखेरितान् ॥ १० ॥
सर्व्वर्त्तुफलभाराढ्यान् सर्व्वर्त्तुकुसुमोज्ज्वलान् ।
अपश्यत् पादपांस्तत्र विहगैरनुनादितान् ॥ ११ ॥
आम्रानाम्रातकान् भव्यान् नारिकेलान् सतिन्दुकान् ।
आबिल्वकांस्तथा जीरान् दाडिमान् बीजपूरकान् ॥ १२ ॥

पनसान् लकुचान् मोचान् नीपांश्चातिमनोहरान् ।
पारावतांश्च कङ्कोलान् नलिनानम्लवेतसान् ॥ १३ ॥
भल्लातकानामलकांस्तिन्दुकांश्च महाफलान् ।
इङ्गुदान् करमर्दांश्च हरीतकविभीतकान् ॥ १४ ॥
एतानन्यांश्च स तरून् ददर्श यदुनन्दनः ।
तथैवाशोकपुन्नागकेतकीवकुलानथ ॥ १५ ॥
चम्पकान् सप्तपर्णांश्च कर्णिकारान् समालतीन् ।
पारिजातान् कोविदारान् मन्दारान् बदरांस्तथा ॥ १६ ॥
पाटलान् पुष्पितान् रम्यान् देवदारुद्रुमांस्तथा ।
सालांस्तालांस्तमालांश्च किंशुकान् वञ्जुलान् वरान् ॥१७॥
चकोरैः शातपत्रैश्च भृङ्गराजैस्तथा शुकैः ।
कोकिलैः कलविङ्कैश्च हारीतैर्जीवजीवकैः ॥ १८ ॥
प्रियपुत्रैश्चातकैश्च तथान्यैर्विविधैः खगैः ।
श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितं ॥ १९ ॥
सरांसि च मनोज्ञानि प्रसन्नसलिलानि च ।
कुमुदैः पुण्डरीकैश्च तथा नीलोत्पलैः शुभैः ॥ २० ॥
कह्लारैः कमलैश्चापि आचितानि समन्ततः ।
कादम्बैश्चक्रवाकैश्च तथैव जलकुक्कुटैः ॥ २१ ॥
कारण्डवैः प्लवैर्हंसैः कूर्मैर्मद्गुभिरेव च ।
एभिश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभिः ॥ २२ ॥
क्रमेणेत्थं वनं शौरिर्वीक्षमाणो मनोरमं ।
जगामानुगतः स्त्रीभिर्लतागृहमनुत्तमं ॥ २३ ॥

स ददर्श द्विजांस्तत्र वेदवेदाङ्गपारगान् ।
कौशिकान् भार्गवांश्चैव भारद्वाजान् सगौतमान् ॥ २४ ॥
विविधेषु च सम्भूतान् वंशेषु द्विजसत्तमान् ।
कथाश्रवणबद्धोत्कानुपविष्टान्महत्स च ॥ २५ ॥
कृष्णाजिनोत्तरीयेषु कुशेषु च वृषीषु च ।
सूतञ्च तेषां मध्यस्थं कथयानं कथाः शुभाः ॥ २६ ॥
पौराणिकीः सुरर्षीणामाद्यानां चरिताश्रयाः ।
दृष्ट्वा रामं द्विजाः सर्व्वे मधुपानाकुलेक्षणं ॥ २७ ॥
मत्तोऽयमिति मन्वानाः समुत्तस्थुस्त्वरान्विताः ।
पूजयन्तो हलधरमृते तं सूतवंशजं ॥ २८ ॥
ततः क्रोधसमाविष्टो हली सूतं महाबलः ।
निजघान विवृत्ताक्षः क्षोभिताशेषदानवः ॥ २९ ॥
अध्यास्यति पदं ब्राह्मं तस्मिन् सूते निपातिते ।
निष्क्रान्तास्ते द्विजाः सर्व्वे वनात् कृष्णाजिनाम्बराः ॥ ३० ॥
अवधूतं तथात्मानं मन्यमानो हलायुधः ।
चिन्तयामास सुमहन्मया पापमिदं कृतं ॥ ३१ ॥
ब्राह्मं स्थानं गतो ह्येष यत् सूतो विनिपातितः ।
तथा हीमे द्विजाः सर्व्वे मामवेक्ष्य विनिर्गताः ॥ ३२ ॥
शरीरस्य च मे गन्धो लोहस्येवासुखावहः ।
आत्मानञ्चावगच्छामि ब्रह्मघ्नमिव कुत्सितं ॥ ३३ ॥
धिगमर्षं तथा मद्यमभिमानमभीरुतां ।
यैराविष्टेन सुमहन्मया पापमिदं कृतं ॥ ३४ ॥

तत्क्षयार्थं चरिष्यामि व्रतं द्वादशवार्षिकं ।
स्वकर्मख्यापनं कुर्व्वन् प्रायश्चित्तमनुत्तमं ॥ २५ ॥
अथ येयं समारब्धा तीर्थयात्रा मयाधुना ।
एतामेव प्रयास्यामि प्रतिलोमां सरस्वतीं ॥ ३६ ॥
अतो जगाम रामोऽसौ प्रतिलोमां सरस्वतीं ।
ततः परं शृणुध्वेमं पाण्डवेयकथाश्रयं ॥ ३७ ॥

इति मार्कण्डेयपुराणे बलदेवब्रह्महत्या ॥ ६ ॥

सप्तमोऽध्यायः ॥



धर्मपक्षिण ऊचुः ॥

हरिश्चन्द्रेति राजर्षिरासीत्त्रेतायुगे पुरा ।
धर्मात्मा पृथिवीपालः प्रोल्लसत्कीर्त्तिरुत्तमः ॥ १ ॥
न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणां ।
नाधर्मरुचयः पौरास्तस्मिन् शासति पार्थिवे ॥ २ ॥
बभूवुर्न तथोन्मत्ता धनवीर्य्यतपोमदैः ।
नाजायन्त स्त्रियश्चैव काश्चिदप्राप्तयौवनाः ॥ ३ ॥
स कदाचिन्महाबाहुररण्येऽनुसरन् मृगं ।
शुश्राव शब्दमसकृत् त्रायस्वेति च योषितां ॥ ४ ॥
स विहाय मृगं राजा माभैषीरित्यभाषत ।
मयि शासति दुर्मेधाः कोऽयमन्यायवृत्तिमान् ॥ ५ ॥

तत्कन्दितानुसारी च सर्वारम्भविघातकृत् ।
एतस्मिन्नन्तरे रौद्रो विघ्नराट् समचिन्तयत् ॥ ६ ॥
विश्वामित्रोऽयमतुलं तप आस्थाय वीर्य्यवान् ।
प्रागसिद्धाभवादीनां विद्याः साधयति व्रती ॥ ७ ॥
साध्यमानाः क्षमामौनचित्तसंयमिनाऽमुना ।
ता वै भयार्त्ताः क्रन्दन्ति कथं कार्य्यमिदं मया ॥ ८ ॥
तेजस्वी कौशिकश्रेष्ठो वयमस्य सुदुर्बलाः ।
क्रोशन्त्येतास्तथा भीता दुष्पारं प्रतिभाति मे ॥ ९ ॥
अथवायं नृपः प्राप्तो माभैरिति वदन् मुहुः ।
इममेव प्रविश्याशु साधयिष्ये यथेप्सितं ॥ १० ॥
इति संचिन्त्य रौद्रेण विघ्नराजेन वै ततः ।
तेनाविष्टो नृपः कोपादिदं वचनमब्रवीत् ॥ ११ ॥
कोऽयं बध्नाति वस्त्रान्ते पावकं पापकृन्नरः ।
बलोष्णतेजसा दीप्ते मयि पत्यावुपस्थिते ॥ १२ ॥
सोऽद्य मत्कार्मुकाक्षेपविदीपितदिगन्तरैः ।
शरैर्विभिन्नसर्व्वाङ्गो दीर्घनिद्रां प्रवेक्ष्यति ॥ १३ ॥
विश्वामित्रस्ततः क्रुद्धः श्रुत्वा तन्नृपतेर्वचः ।
क्रुद्धे चर्षिवरे तस्मिन्नेशुर्विद्याः क्षणेन ताः ॥ १४ ॥
स चापि राजा तं दृष्ट्वा विश्वामित्रन्तपोनिधिं ।
भीतः प्रावेपतात्यर्थं सहसाश्वत्थपर्णवत् ॥ १५ ॥
स दुरात्मन्निति यदा मुनिस्तिष्ठेति चाब्रवीत् ।
ततः स राजा विनयात्प्रणिपत्याभ्यभाषत ॥ १६ ॥

भगवन्नेषं धर्म्मो मे नापराधो मम प्रभो ।
न क्रोद्धुमर्हसि मुने निजधर्मरतस्य मे ॥ १७ ॥
दातव्यं रक्षितव्यञ्च धर्मज्ञेन महीक्षिता ।
चापञ्चोद्यम्य योद्धव्यं धर्मशास्त्रानुसारतः ॥ १८ ॥

विश्वामित्र उवाच ॥

दातव्यं कस्य के रच्याः कैर्योद्धव्यञ्च ते नृप ।
क्षिप्रमेतत्समाचक्ष्व यद्यधर्मभयन्तव ॥ १९ ॥

हरिश्चन्द्र उवाच ॥

दातव्यं विप्रमुख्येभ्यो ये चान्ये कृशवृत्तयः ।
रच्या भीताः सदा युद्धं कर्त्तव्यं परिपन्थिभिः ॥ २० ॥

विश्वामित्र उवाच ॥

यदि राजा भवान् सम्यग्राजधर्ममवेक्षते ।
निर्वेष्टुकामो विप्रोऽहं दीयतामिष्टदक्षिणा ॥ ॥

पक्षिण ऊचुः ॥

एतद्राजा वचः श्रुत्वा प्रहृष्टेनान्तरात्मना ।
पुनर्जातमिवात्मानं मेने प्राह च कौशिकं ॥ २२ ॥
उच्यतां भगवन् यत्ते दातव्यमविशङ्कितं ।
दत्तमित्येव तद्विद्धि यद्यपि स्यात् सुदुर्लभं ॥ २३ ॥
हिरण्यं वा सुवर्णं वा पुत्रः पत्नी कलेवरं ।
प्राणा राज्यं पुरं लक्ष्मीर्यदभिप्रेतमात्मनः ॥ २४ ॥

विश्वामित्र उवाच ।

राजन् प्रतिगृहीतोऽयं यस्ते दत्तः प्रतिग्रहः ।
प्रयच्छ प्रथमं तावद्दक्षिणां राजसूयिकीं ॥ २५ ॥

राजोवाच ।

ब्रह्मंस्तामपि दास्यामि दक्षिणां भवतो ह्यहं ।
व्रियतां द्विजशार्दूल यस्तवेष्टः प्रतिग्रहः ॥ २६ ॥

विश्वामित्र उवाच ।

ससागरां धरामेतां सभूभृद्ग्रामपत्तनां ।
राज्यञ्च सकलं वीर रथाश्वगजसंकुलं ॥ २७ ॥
कोष्टागारञ्च कोषञ्च यच्चान्यद्विद्यते तव ।
विना भार्य्याञ्च पुत्रञ्च शरीरञ्च तवानघ ॥ २८ ॥
धर्मञ्च सर्व्वधर्मज्ञ यो यान्तमनुगच्छति ।
बहुना वा किमुक्तेन सर्व्वमेतत् प्रदीयतां ॥ २९ ॥

पक्षिण ऊचुः ॥

प्रहृष्टेनैव मनसा सोऽविकारमुखो नृपः ।
तस्यर्षेर्व्वचनं श्रुत्वा तथेत्याह कृताञ्जलिः ॥ ३० ॥

विश्वामित्र उवाच ॥

सर्व्वस्वं यदि मे दत्तं राज्यमुर्व्वी बलं धनं ।
प्रभुत्वं कस्य राजर्षे राज्यस्थे तापसे मयि ॥ ३१ ॥

हरिश्चन्द्र उवाच ॥

यस्मिन्नपि मया काले ब्रह्मन्दत्ता वसुन्धरा ।
तस्मिन्नपि भवान् स्वामी किमुतायं महीपतिः ॥ ३२ ॥

विश्वामित्र उवाच ॥

यदि राजंस्त्वया दत्ता मम सर्व्वा वसुन्धरा ।
यत्र मे विषये स्वाम्यं तस्मान्निष्क्रान्तुमर्हसि ॥ ३३ ॥
श्रोणीसूत्रादिसकलं मुक्त्वा भूषणसंग्रहं ।
तरुवल्कलमाबध्य सह पत्न्या सुतेन च ॥ ३४ ॥

पक्षिण ऊचुः ॥

तथेति चोक्त्वा कृत्वा च राजा गन्तुं प्रचक्रमे ।
स्वपत्न्या शैव्यया सार्द्धं बालकेनात्मजेन च ॥ ३५ ॥
व्रजतः स ततो रुद्ध्वा पन्थानं प्राह तं नृपं ।
क्व यास्यसीत्यदत्वा मे दक्षिणां राजसूयिकीं ॥ ३६ ॥

हरिश्चन्द्र उवाच ॥

भगवन्राज्यमेतत्ते दत्तं निहतकण्टकं ।
अवशिष्टमिदं ब्रह्मन्नद्य देहत्रयं मम ॥ ३७ ॥

विश्वामित्र उवाच ॥

तथापि खलु दातव्या त्वया मे यज्ञदक्षिणा ।
विशेषतो ब्राह्मणानां हन्त्यदत्तं प्रतिश्रुतं ॥ ३८ ॥
यावत्तोषो राजसूये ब्राह्मणानां भवेन्नृप ।
तावदेव तु दातव्या दक्षिणा राजसूयिकी ॥ ३९ ॥
प्रतिश्रुत्य च दातव्यं योद्धव्यं चाततायिभिः ।
रक्षितव्यास्तथा चार्त्तास्त्वयैव प्राक् प्रतिश्रुतं ॥ ४० ॥

हरिश्चन्द्र उवाच ॥

भगवन् साम्प्रतं नास्ति दास्ये कालक्रमेण ते ।
प्रसादं कुरु विप्रर्षे सद्भावमनुचिन्त्य च ॥ ४१ ॥

विश्वामित्र उवाच ।

किंप्रमाणो मया कालः प्रतीक्ष्यस्ते जनाधिप ।
शीघ्रमाचक्ष्व शापाग्निरन्यथा त्वां प्रधक्ष्यति ॥ ४२ ॥

हरिश्चन्द्र उवाच ।

मासेन तव विप्रर्षे प्रदास्ये दक्षिणाधनं ।
साम्प्रतं नास्ति मे वित्तमनुज्ञां दातुमर्हसि ॥ ४३ ॥

विश्वामित्र उवाच ।

गच्छ गच्छ नृपश्रेष्ठ स्वधर्ममनुपालय ।
शिवश्च तेऽध्वा भवतु मा सन्तु परिपन्थिनः ॥ ४४ ॥

पक्षिण ऊचुः ।

अनुज्ञातः स गच्छेति जगाम वसुधाधिपः ।
पद्भ्यामनुचिता गन्तुमन्वगच्छत तं प्रिया ॥ ४५ ॥
तं सभार्य्यं नृपश्रेष्ठं निर्यान्तं ससुतं पुरात् ।
दृष्ट्वा प्रचुक्रुशुः पौरा राज्ञश्चैवानुयायिनः ॥ ४६ ॥
हा नाथ किं जहास्यस्मान् नित्यार्त्तिपरिपीडितान् ।
त्वं धर्म्मतत्परो राजन् पौरानुग्रहकृत्तथा ॥ ४७ ॥
नयास्मानपि राजर्षे यदि धर्म्ममवेक्षसे ।
मुहूर्त्तं तिष्ठ राजेन्द्र भवतो मुखपङ्कजं ॥ ४८ ॥
पिबामो नेत्रभ्रमरैः कदा द्रक्ष्यामहे पुनः ।
यस्य प्रयातस्य पुरो यान्ति पृष्ठे च पार्थिवाः ॥ ४९ ॥
तस्यानुयाति भार्य्येयं गृहीत्वा बालकं सुतं ।
यस्य भृत्याः प्रयातस्य यान्त्यग्रे कुञ्जरस्थिताः ॥ ५० ॥

स एष पंक्त्यां राजेन्द्रो हरिश्चन्द्रोऽद्य गच्छति ।
हा राजन् सुकुमारं ते सुभ्रु सुत्वचमुन्नसं ॥ ५१ ॥
पथि पांशुपरिक्लिष्टं मुखं कीदृग्भविष्यति ।
तिष्ठ तिष्ठ नृपश्रेष्ठ स्वधर्ममनुपालय ॥ ५२ ॥
आनृशंस्यं परो धर्मः क्षत्रियाणां विशेषतः ।
किं दारैः किं सुतैर्नाथ धनैर्धान्यैरथापि वा ॥ ५३ ॥
सर्व्वमेतत् परित्यज्य च्छायाभूता वयं तव ।
हा नाथ हा महाराज हा स्वामिन् किं जहासि नः ॥५४॥
यत्र त्वं तत्र हि वयं तत् सुखं यत्र वै भवान् ।
नगरन्तद्भवान् यत्र स स्वर्गो यत्र नो नृपः ॥ ५५ ॥
इति पौरवचः श्रुत्वा राजा शोकपरिप्लुतः ।
अतिष्ठत् स तदा मार्गे तेषामेवानुकम्पया ॥ ५६ ॥
विश्वामित्रोऽपि तं दृष्ट्वा पौरवाक्याकुलीकृतं ।
रोषामर्षविवृत्ताक्षः समागम्य वचोऽब्रवीत् ॥ ५७ ॥
धिक् त्वां दुष्टसमाचारमनृतं जिह्मभाषिणं ।
मम राज्यञ्च दत्वा यः पुनः प्राक्रष्टुमिच्छसि ॥ ५८ ॥
इत्युक्तः परुषन्तेन गच्छामीति सवेपथुः ।
ब्रुवन्नेवं ययौ शीघ्रमाकर्षन्दयितां करे ॥ ५९ ॥
कर्षतस्तां ततो भार्य्यां सुकुमारीं श्रमातुरां ।
सहसा दण्डकाष्ठेन ताडयामास कौशिकः ॥ ६० ॥
तां तथा ताडितां दृष्ट्वा हरिश्चन्द्रो महीपतिः ।
गच्छामीत्याह दुःखार्त्तो नान्यत् किञ्चिदुदाहरत्॥ ६१॥

अथ विश्वे तदा देवाः पञ्च प्राहुः कृपालवः ।
विश्वामित्रः सुपापोऽयं लोकान् कान् समवाप्स्यति ॥ ६२ ॥
येनायं यज्वनां श्रेष्ठः स्वराज्यादवरोपितः ।
कस्य वा श्रद्धया पूतं सुतं सोमं महाध्वरे ।
पीत्वा वयं प्रयास्यामो मुदं मन्त्रपुरःसरं ॥ ६३ ॥

पक्षिण ऊचुः ।

इति तेषां वचः श्रुत्वा कौशिकोऽतिरुषान्वितः ।
शशाप तान् मनुष्यत्वं सर्व्वे यूयमवाप्स्यथ ॥ ६४ ॥
प्रसादितश्च तैः प्राह पुनरेव महामुनिः ।
मानुषत्वेऽपि भवतां भविषी नैव सन्ततिः ॥ ६५ ॥
न दारसंग्रहश्चैव भविता न च मत्सरः ।
कामक्रोधविनिर्मुक्ता भविष्यथ सुराः पुनः ॥ ६६ ॥
ततोऽवतेरुरंशैः स्वैर्देवास्ते कुरुवेश्मनि ।
द्रौपदीगर्भसम्भूताः पञ्च वै पाण्डुनन्दनाः ॥ ६७ ॥
एतस्मात् कारणात् पञ्च पाण्डवेया महारथाः ।
न दारसंग्रहं प्राप्ताः शापात्तस्य महामुनेः ॥ ६८ ॥
एतत्ते सर्व्वमाख्यातं पाण्डवेयकथाश्रयं ।
प्रश्नं चतुष्टयं गीतं किमन्यच्छ्रोतुमिच्छसि ॥ ६९ ॥

इति मार्कण्डेयपुराणे द्रौपदेयोत्पत्तिः ॥ ७ ॥

अष्टमोऽध्यायः ॥

जैमिनिरुवाच ॥

भवद्भिरिदमाख्यातं यथाप्रश्नमनुक्रमात् ।
महत् कौतूहलं मेऽस्ति हरिश्चन्द्रकथां प्रति ॥ १ ॥
अहो महात्मना तेन प्राप्तं कृच्छ्रमनुत्तमं ।
कच्चित् सुखमनुप्राप्तं तादृगेव द्विजोत्तमाः ॥ २ ॥

पक्षिण ऊचुः ॥

विश्वामित्रवचः श्रुत्वा स राजा प्रययौ शनैः ।
शैव्ययानुगतो दुःखी भार्य्यया बालपुत्रया ॥ ३ ॥
स गत्वा वसुधापालो दिव्यां वाराणसीं पुरीं ।
नैषा मनुष्यभोग्येति शूलपाणेः परिग्रहः ॥ ४ ॥
जगाम पद्भ्यां दुःखार्त्तः सह पत्न्यानुकूलया ।
पुरीप्रवेशे ददृशे विश्वामित्रमुपस्थितं ॥ ५ ॥
तं दृष्ट्वा समनुप्राप्तं विनयावनतोऽभवत् ।
प्राह चैवाञ्जलिं कृत्वा हरिश्चन्द्रो महामुनिं ॥ ६ ॥
इमे प्राणाः सुतश्चायमियं पत्नी मुने मम ।
येन ते कृत्यमस्त्याशु तद्गृहाणार्घ्यमुत्तमं ॥ ७ ॥
यद्वान्यत् कार्य्यमस्माभिस्तदनुज्ञातुमर्हसि ॥ ८ ॥

विश्वामित्र उवाच ॥

पूर्णः स मासो राजर्षे दीयतां मम दक्षिणा ।
राजसूयनिमित्तं हि स्मर्य्यते स्ववचो यदि ॥ ९ ॥

हरिश्चन्द्र उवाच ।

अद्यप्रभृत्येव संपूर्णो मासोऽस्माकं तपोधन ।
तिष्ठत्येतद्दिनार्धं यत्तत् प्रतीक्षस्व मा चिरं ॥ १० ॥

विश्वामित्र उवाच ।

एवमस्तु महाराज आगमिष्याम्यहं पुनः ।
शापं तव प्रदास्यामि न चेदद्य प्रदास्यसि ॥ ११ ॥

पक्षिण ऊचुः ।

इत्युक्त्वा प्रययौ विप्रो राजा चाचिन्तयत्तदा ।
कथमस्मै प्रदास्यामि दक्षिणा या प्रतिश्रुता ॥ १२ ॥
कुतः पुष्टानि मित्राणि कुतोऽर्थः साम्प्रतं मम ।
प्रतिग्रहः प्रदुष्टो मे नाहं यायामधः कथं ॥ १३ ॥
किमु प्राणान् विमुञ्चामि कान्दिशं याम्यकिञ्चनः ।
यदि नाशं गमिष्यामि अप्रदाय प्रतिश्रुतं ॥ १४ ॥
ब्रह्मस्वहृत् कृमिः पापो भविष्याम्यधमाधमः ।
अथवा प्रेष्यतां यास्ये वरमेवात्मविक्रयः ॥ १५ ॥

पक्षिण ऊचुः ।

राजानं व्याकुलं दीनं चिन्तयानमधोमुखं ।
प्रत्युवाच तदा पत्नी बाष्पगद्गदया गिरा ॥ १६ ॥
त्यज चिन्तां महाराज स्वसत्यमनुपालय ।
श्मशानवद्वर्जनीयो नरः सत्यबहिष्कृतः ॥ १७ ॥
नातः परतरं धर्मं वदन्ति पुरुषस्य तु ।
यादृशं पुरुषव्याघ्र स्वसत्यपरिपालनं ॥ १८ ॥

अग्निहोत्रमधीतं वा दानाद्याश्चाखिलाः क्रियाः ।
भजन्ते तस्य वैफल्यं यस्य वाक्यमकारणं ॥ १९ ॥
सत्यमत्यन्तमुदितं धर्मशास्त्रेषु धीमतां ।
तारणायानृतं तद्वत् पातनायाकृतात्मनां ॥ २० ॥
सप्ताश्वमेधानाहृत्य राजसूयञ्च पार्थिवः ।
कृतिर्नाम च्युतः स्वर्गादसत्यवचनात् सकृत् ॥ २१ ॥
राजन् जातमपत्यं मे इत्युक्त्वा प्ररुरोद ह ।
वाष्पाम्बुप्लुतनेत्रान्तामुवाचेदं महीपतिः ॥ २२ ॥

हरिश्चन्द्र उवाच ॥

विमुञ्च भद्रे सन्तापमयं तिष्ठति बालकः ।
उच्यतां वक्तुकामासि यद्वा त्वं गजगामिनि ॥ २३ ॥

पत्न्युवाच ॥

राजन् जातमपत्यं मे सतां पुत्रफलाः स्त्रियः ।
स मां प्रदाय वित्तेन देहि विप्राय दक्षिणां ॥ २४ ॥

पक्षिण ऊचुः ॥

एतद्वाक्यमुपश्रुत्य ययौ मोहं महीपतिः ।
प्रतिलभ्य च संज्ञां स विललापातिदुःखितः २५ ॥
महद्दुःखमिदं भद्रे यत्त्वमेवं ब्रवीषि मां ।
किन्तव स्मितसंलापा मम पापस्य विस्मृताः ॥ २६ ॥
हाहा कथं त्वया शक्यं वक्तुमेतत् शुचिस्मिते ।
दुर्वाच्यमेतद्वचनं कर्तुं शक्नोम्यहं कथं ॥ २७ ॥

इत्युक्त्वा स नरश्रेष्ठो भिन्धिभिन्धिति सकृद्रुवन् ।
निपपात महीपृष्ठे मूर्च्छयाभिपरिप्लुतः ॥ २८ ॥
शयानं भुवि तं दृष्ट्वा हरिश्चन्द्रं महीपतिं ।
उवाचेदं सकरुणं राजपत्नी सुदुःखिता ॥ २९ ॥

पत्न्युवाच ॥

हा महाराज कस्येदमपध्यानमुपस्थितं ।
यस्त्वं निपतितो भूमौ राङ्कवास्तरणोचितः ॥ ३० ॥
येन कोट्यग्रगोवित्तं विप्राणामपवर्जितं ।
स एष पृथिवीनाथो भूमौ स्वपिति मे पतिः ॥ ३१ ॥
हा कष्टं किं तवानेन कृतं देव महीक्षिता ।
यदिन्द्रोपेन्द्रतुल्योऽयं नीतः प्रस्वापनीं दशां ॥ ३२ ॥
इत्युक्त्वा सापि सुश्रोणी मूर्च्छिता निपपात ह ।
भर्तृदुःखमहाभारेणासह्येन निपीडिता ॥ ३३ ॥
तौ तथा पतितौ भूमावनाथौ पितरौ शिशुः ।
दृष्ट्वात्यन्तं क्षुधाविष्टः प्राह वाक्यं सुदुःखितः ॥ ३४ ॥
तात तात ददस्वान्नमम्बाम्ब भोजनं दद ।
क्षुन्मे बलवती जाता जिह्वाग्रं शुष्यते तथा ॥ ३५ ॥

पक्षिण ऊचुः ॥

एतस्मिन्नन्तरे प्राप्तो विश्वामित्रो महातपाः ।
दृष्ट्वा तु तं हरिश्चन्द्रं पतितं भुवि मूर्च्छितं ॥ ३६ ॥
स वारिणा समभ्युक्ष्य राजानमिदमब्रवीत् ।
उत्तिष्ठोत्तिष्ठ राजेन्द्र तां ददस्वेष्टदक्षिणां ॥ ३७ ॥

कृच्छ्रं धारयतो दुःखमहन्यहनि वर्द्धते ।
आप्याय्यमानः स तदा हिमशीतेन वारिणा ॥ ३८ ॥
अवाप्य चेतनां राजा विश्वामित्रमवेक्ष्य च ।
पुनर्मोहं समापेदे स च क्रोधं ययौ मुनिः ॥ ३९ ॥
स समाश्वास्य राजानं वाक्यमाह द्विजोत्तमः ।
दीयतां दक्षिणा सा मे यदि धर्म्ममवेक्षसे ॥ ४० ॥
सत्येनार्कः प्रतपति सत्ये तिष्ठति मेदिनी ।
सत्यञ्चोक्तं परो धर्म्मः स्वर्गः सत्ये प्रतिष्ठितः ॥ ४१ ॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतं ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ४२ ॥
अथवा किं ममैतेन साम्ना प्रोक्तेन कारणं ।
अनार्य्ये पापसंकल्पे क्रूरे चानृतवादिनि ॥ ४३ ॥
त्वयि राज्ञि प्रभवति सद्भावः श्रूयतामयं ।
अद्य मे दक्षिणां राजन् दास्यति भवान् यदि ॥ ४४ ॥
अस्ताचलं प्रयातेऽर्के शप्स्यामि त्वां ततो ध्रुवं ।
इत्युक्त्वा स ययौ विप्रो राजा चासीद्भयातुरः ॥ ४५ ॥
कान्दिग्भूतोऽधमो निःस्वो नृशंसधनिनार्द्दितः ।
भार्य्यास्य भूयः प्राहेदं क्रियतां वचनं मम ॥ ४६ ॥
मा शापानलनिर्द्दग्धः पञ्चत्वमुपयास्यसि ।
स तथा चोद्यमानस्तु राजा पत्न्या पुनः पुनः ॥ ४७ ॥
प्राह भद्रे करोम्येष विक्रयं तव निर्घृणः ।
नृशंसैरपि यत् कर्त्तुं न शक्यं तत् करोम्यहं ॥ ४८ ॥

यदि मे शक्यते वाणी वक्तुमीदृक् सुदुर्वचम्
एवमुक्त्वा ततो भार्य्यां गत्वा नगरमातुरः ।
बाष्पापिहितकण्ठाक्षस्ततो वचनमब्रवीत् ॥ ४९ ॥

राजोवाच ।

भो भो नागरिकाः सर्व्वे शृणुध्वं वचनं मम ।
किं मां पृच्छथ कस्त्वं भो नृशंसोऽहममानुषः ॥ ५० ॥
राक्षसो वातिकठिनस्ततः पापतरोऽपि वा ।
विक्रेतुं दयितां प्राप्तो यो न प्राणांस्त्यजाम्यहं ॥ ५१ ॥
यदि वः कस्यचित् कार्य्यं दास्या प्राणेष्टया मम ।
स ब्रवीतु त्वरायुक्तो यावत् सन्धारयाम्यहं ॥ ५२ ॥

पक्षिण ऊचुः ॥

अथ वृद्धो द्विजः कश्चिदागत्याह नराधिपं ।
समर्पयस्व मे दासीमहं क्रेता धनप्रदः ॥ ५३ ॥
अस्ति मे वित्तमस्तोकं सुकुमारी च मे प्रिया ।
गृहकर्म्म न शक्नोति कर्त्तुमस्मात् प्रयच्छ मे ॥ ५४ ॥
कर्म्मण्यतावयोरूपशीलानां तव योषितः ।
अनुरूपमिदं वित्तं गृहाणार्पय मेऽबलां ॥ ५५ ॥
एवमुक्तस्य विप्रेण हरिश्चन्द्रस्य भूपतेः ।
व्यदीर्य्यत मनो दुःखान्न चैनं किञ्चिदब्रवीत् ॥ ५६ ॥
ततः स विप्रो नृपतेर्वल्कलान्ते दृढं धनं ।
बद्ध्वा केशेष्वथादाय नृपपत्नीमकर्षयत् ॥ ५७ ॥

इतोऽद्य रोहितोस्योऽपि दृष्ट्वा कृष्टान्तु मातरं ।
हस्तेन वस्त्रमाकर्षन् काकपक्षधरः शिशुः ॥ ५८ ॥

राजपत्न्युवाच ॥

मुञ्चार्य्य मुञ्च तावन्मां यावत् पश्याम्यहं शिशुं
दुर्लभं दर्शनं तात पुनरस्य भविष्यति ॥ ५९ ॥
पश्यैहि वत्स मामेवं मातरं दास्यतां गतां ।
मां मा स्प्राक्षीराजपुत्र अस्पृश्याहं तवाधुना ॥ ६० ॥
ततः स बालः सहसा दृष्ट्वा कृष्टान्तु मातरं ।
समभ्यधावदम्बेति रुदन् सास्राविलेक्षणः ॥ ६१ ॥
तमागतं द्विजः क्रेता बालमभ्याहनत् पदा ।
वदंस्तथापि सोऽम्बेति नैवामुञ्चत मातरं ॥ ६२ ॥

राजपत्न्युवाच ॥

प्रसादं कुरु मे नाथ क्रीणीष्वेमञ्च बालकं ।
क्रीतापि नाहं भवतो विनैनं कार्य्यसाधिका ॥ ६३ ॥
इत्थं ममाल्पभाग्यायाः प्रसादसुमुखो भव ।
मां संयोजय बालेन वत्सेनेव पयस्विनीं ॥ ६४ ॥

ब्राह्मण उवाच ॥

गृह्यतां वित्तमेतत्ते दीयतां बालको मम ।
स्त्रीपुंसोर्धर्मशास्त्रज्ञैः कृतमेव हि वेतनं ।
शतं सहस्रं लक्षञ्च कोटिमूल्यं तथा परैः ॥ ६५ ॥

पक्षिण ऊचुः।

तथैव तस्य तद्वित्तं बद्धोत्तरपटे ततः।
प्रगृह्य बालकं माया सहैकस्थमबन्धयत्॥ ६६॥
नीयमानौ तु तौ दृष्ट्वा भार्य्यापुत्रौ स पार्थिवः।
विललाप सुदुःखार्त्तो निःश्वस्योष्णं पुनः पुनः॥ ६७॥
यां न वायुर्न चादित्यो नेन्दुर्न च पृथग्जनः।
दृष्टवन्तः पुरा पत्नीं सेयं दासीत्वमागता॥ ६८॥
सूर्य्यवंशप्रसूतोऽयं सुकुमारकराङ्गुलिः।
संप्राप्तो विक्रयं बालो धिङ्मामस्तु सुदुर्म्मतिं॥ ६९॥
हा प्रिये हा शिशो वत्स ममानार्य्यस्य दुर्नयैः।
दैवाधीनां दशां प्राप्तो न मृतोऽस्मि तथापि धिक्॥ ७०॥

पक्षिण ऊचुः॥

एवं विलपतो राज्ञः स विप्रोऽन्तरधीयत।
वृक्षगेहादिभिस्तुङ्गैस्तावादाय त्वरान्वितः॥ ७१॥
विश्वामित्रस्ततः प्राप्तो नृपं वित्तमयाचत।
तस्मै समर्पयामास हरिश्चन्द्रोऽपि तद्धनं॥ ७२॥
तद्वित्तं स्तोकमालोक्य दारविक्रयसम्भवं।
शोकाभिभूतं राजानं कुपितः कौशिकोऽब्रवीत्॥ ७३॥
क्षत्रबन्धो ममेमां त्वं सदृशीं यज्ञदक्षिणां।
मन्यसे यदि तत् क्षिप्रं पश्य त्वं मे बलं परं॥ ७४॥
तपसोऽथ सुतप्तस्य ब्राह्मण्यस्यामलस्य च।
मत्प्रभावस्य चोग्रस्य शुद्धस्याध्ययनस्य च॥ ७५॥

हरिश्चन्द्र उवाच।

अन्यां दास्यामि भगवन् कालः कश्चित् प्रतीक्ष्यतां।
साम्प्रतं नास्ति विक्रीता पत्नी पुत्रश्च बालकः॥ ७६॥

विश्वामित्र उवाच।

चतुर्भागः स्थितो योऽयं दिवसस्य नराधिप।
एष एव प्रतीक्ष्यो मे वक्तव्यं नोत्तरं त्वया॥ ७७॥

पक्षिण ऊचुः।

तमेवमुक्त्वा राजेन्द्रं निष्ठुरं निर्घृणं वचः।
तदादाय धनं तूर्णं कुपितः कौशिको ययौ॥ ७८॥
विश्वामित्रे गते राजा भयशोकाब्धिमध्यगः।
सर्व्वाकारं विनिश्चित्य प्रोवाचोच्चैरधोमुखः॥ ७९॥
वित्तक्रीतेन यो ह्यर्थी मया प्रेष्येण मानवः।
स ब्रवीतु त्वरायुक्तो यावत्तपति भास्करः॥ ८०॥
अथाजगाम त्वरितो धर्मश्चण्डालरूपधृक्।
दुर्गन्धो विकृतो रूक्षः श्मश्रुलो दन्तुरो घृणी॥ ८१॥
कृष्णो लम्बोदरः पिङ्गरूक्षाक्षः परुषाक्षरः।
गृहीतपक्षिपुञ्जश्च शवमाल्यैरलङ्कृतः॥ ८२॥
कपालहस्तो दीर्घास्यो भैरवोऽतिवदन् मुहुः।
श्वगणाभिवृतो घोरो यष्टिहस्तो निराकृतिः॥ ८३॥

चण्डाल उवाच।

अहमर्थी त्वया शीघ्रं कथयस्वात्मवेतनं।
स्तोकेन बहुना वापि येन वै लभ्यते भवान्॥ ८४॥

पक्षिण ऊचुः ।

तं तादृशमथायान्तं क्रूरवाक्यं सुनिष्ठुरं ।
वदन्तमतिदुःशीलं कस्त्वमित्याह पार्थिवः ॥ ८५ ॥

चण्डाल उवाच ।

चण्डालोऽहमिह ख्यातः प्रवीरेति पुरोत्तमे ।
विख्यातो वध्यवधको मृतकम्बलहारकः ॥ ८६ ॥

हरिश्चन्द्र उवाच ।

नाहं चण्डालदासत्वमिच्छेयं सुविगर्हितं ।
वरं शापाग्निना दग्धो न चण्डालवशं गतः ॥ ८७ ॥

पक्षिण ऊचुः ।

तस्यैवं वदतः प्राप्तो विश्वामित्रस्तपोनिधिः ।
कोपामर्षविवृत्ताक्षः प्राह चेदं नराधिपं ॥ ८८ ॥

विश्वामित्र उवाच ।

चण्डालोऽयमनल्पं ते दातुं वित्तमुपस्थितः ।
कस्मान्न दीयते मह्यमशेषा यज्ञदक्षिणा ॥ ८९ ॥

हरिश्चन्द्र उवाच ।

भगवन् सूर्य्यवंशोत्थमात्मानं वेद्मि कौशिक ।
कथं चण्डालदासत्वं गमिष्ये वित्तकामुकः ॥ ९० ॥

विश्वामित्र उवाच ।

यदि चण्डालवित्तं त्वमात्मविक्रयजं मम ।
न प्रदास्यसि कालेन शप्स्यामि त्वामसंशयं ॥ ९१ ॥

पक्षिण ऊचुः ॥

हरिश्चन्द्रस्ततो राजा चिन्ताम्लानिशोषितः ।
प्रसीदेति वदन् पादयोर्निपपात विह्वलः ॥ ९२ ॥
दासोऽस्म्यार्त्तोऽस्मि भीतोऽस्मि त्वद्भक्तश्च विशेषतः ।
कुरु प्रसादं विप्रर्षे कष्टश्चण्डालसङ्करः ॥ ९३ ॥
भवेयं वित्तशेषेण सर्व्वकर्मकरो वशः ।
तवैव मुनिशार्दूल प्रेष्यश्चित्तानुवर्त्तकः ॥ ९४ ॥

विश्वामित्र उवाच ॥

यदि प्रेष्यो मम भवान् चण्डालाय ततो मया ।
दासभावमनुप्राप्तो दत्तो वित्तार्व्वुदेन वै ॥ ९५ ॥

पक्षिण ऊचुः ॥

एवमुक्ते तदा तेन श्वपाको हृष्टमानसः ।
विश्वामित्राय तद्द्रव्यं दत्वा बद्धा नरेश्वरं ॥ ९६ ॥
दण्डप्रहारसंभ्रान्तमतीवव्याकुलेन्द्रियं ।
इष्टबन्धुवियोगार्त्तमनयन्निजपत्तनं ॥ ९७ ॥
हरिश्चन्द्रस्ततो राजा वसंश्चण्डालपत्तने ।
प्रातर्मध्याह्नसमये सायञ्चैतदगायत ॥ ९८ ॥
बाला दीनमुखी दृष्ट्वा बालं दीनमुखं पुरः ।
मां स्मरत्यसुखाविष्टा मोचयिष्यति नौ नृपः ॥ ९९ ॥
उपात्तवित्तो विप्राय दत्वा वित्तमतोऽधिकं ।
न सा मां मृगशावाक्षी वेत्ति पापतरं कृतं ॥ १०० ॥

राज्यनाशः सुहृत्त्यागो भार्यातनयविक्रयः ।
प्राप्ता चण्डालता चेयमहो दुःखपरम्परा ॥ १०१ ॥
एवं स निवसन्नित्यं सस्मार दयितं सुतं ।
भार्याञ्चात्मसमाविष्टो हृतसर्वस्व आतुरः ॥ १०२ ॥
कस्यचित्त्वथ कालस्य मृतचेलापहारकः ।
हरिश्चन्द्रोऽभवद्राजा श्मशाने तद्वशानुगः ॥ १०३ ॥
चण्डालेनानुशिष्टश्च मृतचेलापहारिणा ।
शवागमनमन्विच्छन्निह तिष्ठ दिवानिशं ॥ १०४ ॥
इदं राज्ञेऽपि देयञ्च षड्भागन्तु शवं प्रति ।
त्रयस्तु मम भागाः स्युर्द्वौ भागौ तव वेतनं ॥ १०५ ॥
इति प्रतिसमादिष्टो जगाम शवमन्दिरं ।
दिशं तु दक्षिणां यत्र वाराणस्यां स्थितं तदा ॥ १०६ ॥
श्मशानं घोरसंनादं शिवाशतसमाकुलं ।
शवमौलिसमाकीर्णं दुर्गन्धं बहुधूमकं ॥ १०७ ॥
पिशाचभूतवेतालडाकिनीयक्षसंकुलं ।
गृध्रगोमायुसंकीर्णं श्ववृन्दपरिवारितं ॥ १०८ ॥
अस्थिसंघातसंकीर्णं महादुर्गन्धसंकुलं ।
नानामृतसुहृन्नादरौद्रकोलाहलायुतं ॥ १०९ ॥
हा पुत्र मित्र हा बन्धो भ्रातर्वत्स प्रियाद्य मे ।
हा पते भगिनि मातर्हा मातुल पितामह ॥ ११० ॥
मातामह पितः पौत्र क्व गतोऽस्येहि बान्धव ।
इत्येवं वदतां यत्र ध्वनिः संश्रूयते महान् ॥ १११ ॥

रक्तमांसवसामेदच्छन्नमस्थिसितसंकुलं ॥ ११२ ॥
अर्धदग्धाः शवाः श्यामा विकसद्दन्तपङ्क्तयः ।
हसन्तीवाग्निमध्यस्थाः कायस्येयं दशा त्विति ॥ ११३ ॥
अग्नेश्चटचटाशब्दो वयसामस्थिपंक्तिषु ।
बान्धवाक्रन्दशब्दश्च पुक्कसेषु प्रहर्षजः ॥ ११४ ॥
गायतां भूतवेतालपिशाचगणरक्षसां ।
श्रूयते सुमहान् घोरः कल्पान्त इव निःस्वनः ॥ ११५ ॥
महामहिषकारीषगोशकृद्राशिसंकुलं ॥
तदुत्थभस्मकूटैश्च वृतं सास्थिभिरुन्नतैः ॥ ११६ ॥
नानोपहारस्रग्दीपकाकविक्षेपकाखिलं ।
अनेकशब्दबहुलं श्मशानं नरकायते ॥ ११७ ॥
सवह्निगर्भैरशिवैः शिवारुतैर्निनादितं भीषणरावगह्वरं ।
भयं भयस्याप्युपसज्जनैर्भृशं श्मशानमाक्रन्दविरावदारुणं ।
स राजा तत्र संप्राप्तो दुःखितः शोचनोद्यतः ॥ [११८ ॥]
हा भृत्या मन्त्रिणो विप्राः क्व तद्राज्यं विधे गतं ॥ ११९ ॥
हा शैव्ये पुत्र हा बाल मां त्यक्त्वा मन्दभाग्यकं ।
विश्वामित्रस्य दोषेण गताः कुत्रापि ते मम ॥ १२० ॥
इत्येवं चिन्तयंस्तत्र चण्डालोक्तं पुनः पुनः ।
मलिनो रूक्षसर्वाङ्गः केशवान् गन्धवान् ध्वजी ॥ १२१ ॥
लकुटी कालकल्पश्च धावंश्चापि ततस्ततः ।
अस्मिन् शव इदं मूल्यं प्राप्तं प्राप्स्यामि चाप्युत ॥ १२२ ॥
इदं मम इदं राज्ञे मुख्यचण्डालके त्विदं ।

इति धावन् द्विजो राजा जीवन् कोणपवर्द्धनः ॥१२३॥
ओष्ठांकर्पटसंग्रन्थिकृतकन्थापरिग्रहः ।
चिताभस्मरजोलिप्तमुखबाहूदराङ्घ्रिकः ॥ १२४ ॥
नानामेदोवसामज्जालिप्तपाण्यङ्गुलिः श्वसन् ।
नानाशवौदनकृततृप्तिस्तत्परायणः ॥ १२५ ॥
तदीयमाल्यसंश्लेषकृतमस्तकमण्डनः ।
न रात्रौ न दिवा शेते हा हेति प्रवदन् मुहुः ॥ १२६ ॥
एवं द्वादशमासास्तु नीताः शतसमोपमाः ।
स कदाचिन्नृपश्रेष्ठः श्रान्तो बन्धुवियोगवान् ॥ १२७ ॥
निद्राभिभूतो रूक्षाङ्गो निश्चेष्टः सुप्त एव च ।
तथापि शयनीये स दृष्टवानद्भुतं महत् ॥ १२८ ॥
श्मशानाभ्यासयोगेन दैवस्य बलवत्तया ।
अन्यदेहेन दत्वा तु गुरवे गुरुदक्षिणां ॥ १२९ ॥
तदा द्वादश वर्षाणि दुःखदानात्तु निष्कृतिः ।
आत्मानं स ददर्शाथ पुक्कसीगर्भसम्भवं ॥ १३० ॥
तत्रस्थश्चाप्यसौ राजा सोऽचिन्तयदिदं तदा ।
इतो निष्क्रान्तमात्रो हि दानधर्मं करोम्यहम् ॥ १३१ ॥
अनन्तरं स जातस्तु तदा पुक्कसबालकः ।
श्मशानमृतसंस्कारकरणेषु सदोद्यतः ॥ १३२ ॥
प्राप्ते तु सप्तमे वर्षे श्मशानेऽथ मृतो द्विजः ।
आनीतो बन्धुभिर्दृष्टस्तेन तथाधनो गुणी ॥ १३३ ॥
मूल्यार्थिना तु तेनापि परिभूतास्तु ब्राह्मणाः ।

अनुक्ते ब्राह्मणात्तस्य विश्वामित्रस्य चेष्टितम् ॥ १३४ ॥
पापिष्ठमशुभं कर्म कुरु त्वं श्वपचारक ।
हरिश्चन्द्रः पुरा राजा विश्वामित्रेण पुक्कसः ॥ १३५ ॥
ततः पुण्यविनाशेन ब्राह्मणस्वापनाशनात् ।
यदा न क्षमते तेषां तैः स गतो यथा तदा ॥ १३६ ॥
गच्छ त्वं नरकं घोरमधुनैव नराधम ।
इत्युक्तमात्रे वचने स्वप्नस्थः स नृपस्तदा ॥ १३७ ॥
अपश्यद्यमदूतान् वै पाशहस्तान् भयावहान् ।
तैः संगृहीतमात्मानं नीयमानं तदा बलात् ॥ १३८ ॥
पश्यति स्म भृशं खिन्नो हा मातः पितरश्च मे ।
एवं वादी स नरके तैलद्रोण्यां निपातितः ॥ १३९ ॥
क्रकचैः पाट्यमानस्तु क्षुरधाराभिरप्यधः ।
अन्धे तमसि दुःखार्त्तः पूयशोणितभोजनः ॥ १४० ॥
सप्तवर्षं मृतात्मानं पुक्कसत्वे ददर्श ह ।
दिनं दिनं तु नरके दह्यते पच्यतेऽन्यतः ॥ १४१ ॥
खिद्यते क्षोभ्यतेऽन्यत्र मार्यते पाट्यतेऽन्यतः ।
क्षार्यते दीप्यतेऽन्यत्र शीतवाताहतोऽन्यतः ॥ १४२ ॥
एकं दिनं वर्षशतप्रमाणं नरकेऽभवत् ।
तथा वर्षशतं तत्र श्रावितं नरके भटैः ॥ १४३ ॥
ततो निपातितो भूमौ शिवाशी श्वा व्यजायत ।
वान्ताशी शीतदुःखार्त्तो मासमात्रे मृतोऽपि सः ॥ १४४ ॥
अथापश्यत् खरं देहं हस्तिनं वानरं पशुं ।

ज्ञानं पित्रादत्तं कर्त्तुं च नाशकवि वर्जितं भूमिप ॥ १४५ ॥
मत्स्यं कूर्मं वराहञ्च वाजिनं कुक्कुटं शुकं ।
शारिकां स्थावरांश्चैव सर्व्वजन्मानि देहिनः ॥ १४६ ॥
दिवसे दिवसे जन्म प्राप्तवान् प्राणिनस्तदा ।
अपश्यद्दुःखसन्तप्तो दिव्यं वर्षशतं तथा ॥ १४७ ॥
एवं वर्षशतं पूर्णं गतं तस्य कुयोनिषु ।
अपश्यच्च कदाचित् स राजा तत् स्वकुलोद्भवम् ॥ १४८ ॥
तत्र स्थितस्य तस्यापि राज्यं द्यूतेन हारितम् ।
भार्य्या हृता च पुत्रश्च स चैकाकी वनं गतः ॥ १४९ ॥
तत्रापश्यत् स सिंहं वै व्यादितास्यं भयावहम् ।
विभक्षयिषुमायातं शरभेण समन्वितम् ॥ १५० ॥
पुनश्च भक्षितः सोऽपि भार्य्यां शोचितुमुद्यतः ।
हा शैव्ये क्व गतास्यद्य मामिहापास्य दुःखितं ॥ १५१ ॥
अपश्यत् पुनरेवापि भार्य्यां स्वां सहपुत्रकां ।
त्रायस्व त्वं हरिश्चन्द्र किं द्यूतेन तव प्रभो ॥ १५२ ॥
पुत्रस्ते शोच्यतां प्राप्तो भार्य्यया शैव्यया सह ।
स नापश्यत् पुनरपि धावमानः पुनः पुनः ॥ १५३ ॥
अथापश्यत् पुनरपि स्वर्गस्थः स नराधिपः ।
नीयते मुक्तकेशी सा दीना विवस्त्रा बलात् ॥ १५४ ॥
हाहाकारं प्रमुञ्चन्ती त्रायस्वेत्यपजल्पना ।
अथापश्यत् पुनस्तत्र धर्म्मराजस्य शासनात् ॥ १५५ ॥
आक्रन्दन्त्यन्तरिक्षस्था आगच्छेह नराधिप ।

विश्वामित्रेण विप्रार्थे यतो राजंस्तथार्दितः ॥ १५६ ॥
इत्युक्त्वा सर्पपाशैस्तु नीयते बध्यतिस्तु ।
आत्मदेवेन कथितं विश्वामित्रस्य चेष्टितं ॥ १५७ ॥
तथापि तस्य विकृतिर्न धर्म्मात्ता व्यवर्त्तत ।
एताः सर्व्वा दशास्तस्य याः स्वप्ने सम्प्रदर्शिताः ॥ १५८ ॥
सर्व्वांस्तास्तेन सम्भुक्ता यावद्वर्षाणि द्वादश ।
अतीते द्वादशे वर्षे नीयमानो भटैर्बलात् ॥ १५९ ॥
यमं सोऽपश्यदाकारादुवाच च नराधिपम् ।
विश्वामित्रस्य कोपोऽयं दुर्निवार्य्यो महात्मनः ॥ १६० ॥
पुत्रस्य ते मृत्युमपि प्रदास्यति स कौशिकः ।
गच्छ त्वं मानुषं लोकं दुःखशेषं च भुंक्ष्व वै ॥
गतस्य तत्र राजेन्द्र श्रेयस्तव भविष्यति ॥ १६१ ॥
व्यतीते द्वादशे वर्षे दुःखस्यान्ते नराधिपः ।
अन्तरिक्षाच्च पतितो यमदूतैः प्रणोदितः ॥ १६२ ॥
पतितो यमलोकाच्च विबुद्धो भयसम्भ्रमात् ।
अहो कष्टमिति ध्यात्वा क्षते क्षारावसेचनं ॥ १६३ ॥
स्वप्ने दुःखं मया दृष्टं यस्यान्तो नोपलभ्यते ।
स्वप्ने दृष्टं मया यत्तु किन्तु मे द्वादशाः समाः ॥ १६४ ॥
गतेत्यपृच्छत्तत्रस्थान् पुक्कसांस्तु स सम्भ्रमात् ।
नेत्यूचुः केचित्तत्रस्था एवमेवापरेऽब्रुवन् ॥ १६५ ॥
श्रुत्वा दुःखी ततो राजा देवान् शरणमीयिवान् ।
स्वस्ति कुर्व्वन्तु मे देवाः शैव्याया बालकस्य च ॥ १६६ ॥

नमो धर्माय महते नमः कृष्णाय वेधसे।
परावराय शुद्धाय पुराणायाव्ययाय च॥१६७॥
नमो बृहस्पते तुभ्यं नमस्ते वासवाय च।
एवमुक्त्वा स राजा तु पुनः पुत्रतपस्विनि॥१६८॥
श्वपाकां मृतचेले पुनर्नष्टस्मृतिर्यथा।
मलिनो जटिलः कृष्णो लकुटी विकृतो नृपः॥१६९॥
नैव पुत्रो न भार्या तु तस्य वै स्मृतिगोचरे।
नष्टोत्साहो राज्यनाशाच्छ्मशाने निवसंस्तदा॥१७०॥
अथाजगाम स्वसुतं मृतमादाय लापिनी।
भार्या तस्य नरेन्द्रस्य सर्पदष्टं हि बालकं॥१७१॥
हा वत्स हा पुत्र शिशो इत्येवं वदती मुहुः।
कृशा विवर्णा विमनाः पांशुध्वस्तशिरोरुहा॥१७२॥

राजपत्न्युवाच।

हा राजन्नद्य बालं त्वं पश्यसीमं महीतले।
रममाणं पुरा दृष्टं दष्टं दुष्टाहिना मृतं॥१७३॥
तस्या विलापशब्दन्तमाकर्ण्य स नराधिपः।
जगाम त्वरितोऽभ्येति भविता मृतकम्बलः॥१७४॥
स तां रोरुदतीं भार्यां नाभ्यजानात्तु पार्थिवः।
चिरप्रवाससन्तप्तां पुनर्जातामिवाबलां॥१७५॥
सापि तं चारुकेशान्तं पुरा दृष्ट्वा जटालकं।
नाभ्यजानान्नृपसुता शुष्कवृक्षोपमं नृपं॥१७६॥
सोऽपि कृष्णपटे बालं दृष्ट्वाशीविषपीडितं।

नरेन्द्रवंशयोपेतं विनाशमाप नरेश्वरः ॥ १७७ ॥
अहो कष्टं नरेन्द्रस्य यस्यायं कुले शिशुः ।
जातो नीतः कृतान्तेन कामवस्थां दुरात्मना ॥ १७८ ॥
एवं दृष्ट्वा हि मे बालं मातुरुत्सङ्गशायिनं ।
स्मृतिमभ्यागतो बालो रोहिताश्वोऽब्जलोचनः ॥ १७९ ॥
सोऽप्येतामेव मे बालो वयोऽवस्थामुपागतः ।
नीतो यदि न घोरेण कृतान्तेनात्मनो वशं ॥ १८० ॥

राजपत्न्युवाच ।

हा वत्स कस्य पापस्य अपध्यानादिदं महत् ।
दुःखमापतितं घोरं यस्यान्तो नोपलभ्यते ॥ १८१ ॥
हा नाथ राजन् भवता मामनाश्वास्य दुःखितां
क्वापि सन्तिष्ठता स्थाने विश्रब्धं स्थीयते कथं ॥ १८२ ॥
राज्यनाशः सुहृत्त्यागो भार्यातनयविक्रयः ।
हरिश्चन्द्रस्य राजर्षेः किं विधे न कृतं त्वया ॥ १८३ ॥
इति तस्या वचः श्रुत्वा राजा स्वस्थानतश्च्युतः
प्रत्यभिज्ञाय दयितां पुत्रञ्च निधनं गतं ॥ १८४ ॥
कष्टं शैब्येयमेषा हि स बालोऽयमितीरयन् ।
रुरोद दुःखसन्तप्तो मूर्च्छामभिजगाम च ॥ १८५ ॥
सा च तं प्रत्यभिज्ञाय तामवस्थामुपागतं ।
मूर्च्छिता निपपातार्त्ता निश्चेष्टा धरणीतले ॥ १८६ ॥
चेतः संप्राप्य राजेन्द्रो राजपत्नी च तौ समं ।
विषेदतुः सुसन्तप्तौ शोकभारावपीडितौ ॥ १८७ ॥

प्रकृष्टा विच्छिन्नादीना भर्तृदुःखविपीड़िता ।
धीमती सा ततोऽपश्यत् भर्तृदुःखं सुदुःखितं ॥ १९८ ॥
श्वपाकार्हमतो मोहं जगामायतलोचना ।
प्राप्य चेतश्च शनकैः सगद्गदमभाषत ॥ १९९ ॥
धिक् त्वां दैवातिकरुणं निर्मर्यादं जुगुप्सितं ।
येनायममरप्रख्यो नीतो राजा श्वपाकतां ॥ २०० ॥
राज्यनाशं सुहृत्त्यागं भार्यातनयविक्रयं ।
प्रापयित्वापि नो मुक्तश्चण्डालोऽयं कृतो नृपः ॥ २०१ ॥
हा राजन् जातसन्तापामित्थं मां धरणीतलात् ।
उत्थाप्य नाद्य पर्य्यङ्कमारोहेति किमुच्यते ॥ २०२ ॥
नाद्य पश्यामि ते छत्रं भृङ्गारमथवा पुनः ।
चामरं व्यजनं चापि कोऽयं विधिविपर्य्ययः ॥ २०३ ॥
यस्याग्रे व्रजतः पूर्वं राजानो भृत्यतां गताः ।
स्वोत्तरीयैरकुर्व्वन्त नीरजस्कं महीतलं ॥ २०४ ॥
सोऽयं कपालसंलग्नघटीघटनिरन्तरे ।
मृतनिर्माल्यसूत्रान्तर्गूढकेशे सुदारुणे ॥ २०५ ॥
वसानिस्यन्दसंशुष्कमहीपुटकमण्डिते ।
भस्माङ्गारार्द्धदग्धास्थिमज्जसंघट्टभीषणे ॥ २०६ ॥
गृध्रगोमायुनादार्त्तनष्टक्षुद्रविहङ्गमे ।
चिताधूमाततघना नीलीकृतदिगन्तरे ॥ २०७ ॥
कुणपास्वादनमुदा संप्रहृष्टनिशाचरे ।
चरत्यमेध्ये राजेन्द्रः श्मशाने दुःखपीड़ितः ॥ २०८ ॥

मग्नस्य दुःखजलधौ पारः प्राणवियोजनं ।
एकोऽपि बालको योऽस्माकमासीद्वंशकरः सुतः ॥ २१९ ॥
मम दैवानुयोगेन मग्नः सोऽपि बलीयसा ।
कथं प्राणान् विमुञ्चामि परायत्तोऽस्मि दुर्गतः ॥ २२० ॥
अथवा नार्त्तिना क्लिष्टो नरः पापमवेक्षते ।
तिर्य्यक्त्वे नास्ति तद्दुःखं नासिपत्रवने तथा ॥ २२१ ॥
वैतरण्यां कुतस्तादृग् यादृशं पुत्रविप्लवे ।
सोऽहं सुतशरीरेण दीप्यमाने हुताशने ॥ २२२ ॥
निपतिष्यामि तन्वङ्गि क्षन्तव्यं कुकृतं मम ।
अनुज्ञाता च गच्छ त्वं विप्रवेश्म शुचिस्मिते ॥ २२३ ॥
मम वाक्यञ्च तन्वङ्गि निबोधादृतमानसा ।
यदि दत्तं यदि हुतं गुरवो यदि तोषिताः ॥ २२४ ॥
परत्र सङ्गमो भूयात् पुत्रेण सह च त्वया ।
इह लोके कुतस्त्वेतद्भविष्यति ममेङ्गितम् ॥ २२५ ॥
त्वया सह मम श्रेयो गमनं पुत्रमार्गणे ।
यन्मया हसता किञ्चिद्रहस्ये वा शुचिस्मिते ॥ २२६ ॥
अश्लीलमुक्तं तत् सर्व्वं क्षन्तव्यं मम याचतः ।
राजपत्नीति गर्व्वेण नावज्ञेयः स ते द्विजः ।
सर्व्वयत्नेन ते तोष्यः स्वामिदैवतवच्छुभे ॥ २२७ ॥

राज्ञ्युवाच ।

अहमप्यत्र राजर्षे दीप्यमाने हुताशने ।
दुःखभारासहाद्यैव सह यास्यामि वै त्वया ॥ २२८ ॥

पक्षिण ऊचुः ।

ततः कृत्वा चितां राजा आरोप्य तनयं स्वकं ।
भार्य्यया सहितश्चासौ बद्धाञ्जलिपुटस्तदा ॥ २२९ ॥
चिन्तयन् परमात्मानमीशं नारायणं हरिं ।
हृत्कोटरगुहासीनं वासुदेवं सुरेश्वरं ॥
अनादिनिधनं ब्रह्म कृष्णं पीताम्बरं शुभं ॥ २३० ॥
तस्य चिन्तयमानस्य सर्व्वे देवाः सवासवाः ।
धर्म्मं प्रमुखतः कृत्वा समाजग्मुस्त्वरान्विताः ॥ २३१ ॥
आगत्य सर्व्वे प्रोचुस्ते भो भो राजन् शृणु प्रभो ।
अयं पितामहः साक्षाद्धर्म्मश्च भगवान् स्वयं ॥ २३२ ॥
साध्याश्च विश्वे मरुतो लोकपालाः सवाहनाः ।
नागाः सिद्धाः सगन्धर्व्वा रुद्राश्चैव तथाश्विनौ ॥ २३३ ॥
एते चान्ये च बहवो विश्वामित्रस्तथैव च ।
विश्वत्रयेण यो मित्रं कर्त्तुं न शकितः पुरा ॥ २३४ ॥
विश्वामित्रस्तु ते मैत्रीमिष्टञ्चाहर्त्तुमिच्छति ।
आरुरोह ततः प्राप्तो धर्म्मः शक्रोऽथ गाधिजः ॥ २३५ ॥

धर्म्म उवाच ।

मा राजन् साहसं कार्षीर्धर्म्मोऽहं त्वामुपागतः ।
तितिक्षादमसत्याद्यैः स्वगुणैः परितोषितः ॥ २३६ ॥

इन्द्र उवाच ।

हरिश्चन्द्र महाभाग प्राप्तः शक्रोऽस्मि तेऽन्तिकं ।
त्वया सभार्य्यपुत्रेण जिता लोकाः सनातनाः ॥ २३७ ॥

आरोह त्रिदिवं राजन् भार्य्यापुत्रसमन्वितः ।
सुदुष्प्रापं नरैरन्यैर्जितमात्मीयकर्म्मभिः ॥ २३८ ॥

पक्षिण ऊचुः ॥

ततोऽमृतमयं वर्षमपमृत्युविनाशनं ।
इन्द्रः प्रावर्षदाकाशाच्चितामध्यगतः प्रभुः ॥ २३९ ॥
पुष्पवर्षञ्च सुमहद्देवदुन्दुभिनिस्वनं ।
ततस्ततो वर्त्तमाने समाजे देवसंकुले ॥ २४० ॥
समुत्तस्थौ ततः पुत्रो राज्ञस्तस्य महात्मनः ।
सुकुमारतनुः सुस्थः प्रसन्नेन्द्रियमानसः ॥ २४१ ॥
ततो राजा हरिश्चन्द्रः परिष्वज्य सुतं क्षणात् ।
सभार्य्यः स्वश्रिया युक्तो दिव्यमाल्याम्बरान्वितः ॥ २४२ ॥
सुस्थः सम्पूर्णहृदयो मुदा परमया युतः ।
बभूव तत्क्षणादिन्द्रो भूयश्चैनमभाषत ॥ २४३ ॥
सभार्य्यस्त्वं सपुत्रश्च प्राप्स्यसे सद्गतिं परां ।
समारोह महाभाग निजानां कर्म्मणां फलैः ॥ २४४ ॥

हरिश्चन्द्र उवाच ॥

देवराजाननुज्ञातः स्वामिना श्वपचेन वै ।
अगत्वा निष्कृतिं तस्य नारोक्ष्येऽहं सुरालयं ॥ २४५ ॥

धर्म्म उवाच ।

तवैनं भाविनं क्लेशमवगम्यात्ममायया ।
आत्मा श्वपाकतां नीतो दर्शितं तच्च चापलं ॥ २४६ ॥

इन्द्र उवाच।

प्रार्थ्यते यत् परं स्थानं समस्तैर्मनुजैर्भुवि।
तदारोह हरिश्चन्द्र स्थानं पुण्यकृतां त्वया॥ २४७॥

हरिश्चन्द्र उवाच।

देवराज नमस्तुभ्यं वाक्यञ्चैतन्निबोध मे।
प्रसादसुमुखं यत्त्वां ब्रवीमि प्रश्रयान्वितः॥ २४८॥
मच्छोकमग्नमनसः कोशलानगरे जनाः।
तिष्ठन्ति तानपोह्याद्य कथं यास्याम्यहं दिवं॥ २४९॥
ब्रह्महत्या गुरोर्घातो गोवधः स्त्रीवधस्तथा।
तुल्यमेभिर्महापापं भक्तत्यागेऽप्युदाहृतं॥ २५०॥
भजन्तं भक्तमत्याज्यमदुष्टं त्यजतः सुखं।
नेह नामुत्र पश्यामि तस्माच्छक्र दिवं व्रज॥ २५१॥
यदि ते सहिताः स्वर्गं मया यान्ति सुरेश्वर।
ततोऽहमपि यास्यामि नरकं वापि तैः सह॥ २५२॥

इन्द्र उवाच।

बहूनि पुण्यपापानि तेषां भिन्नानि वै पृथक्।
कथं संघातभोग्यं त्वं भूयः स्वर्गमवाप्स्यसि॥ २५३॥

हरिश्चन्द्र उवाच।

शक्र भुङ्क्ते नृपो राज्यं प्रभावेन कुटुम्बिनां।
यजते च महायज्ञैः कर्म्म पौर्त्तं करोति च॥ २५४॥
तच्च तेषां प्रभावेन मया सर्व्वमनुष्ठितं

उपकर्त्तॄन् न सन्त्यक्ष्ये तानहं स्वर्गलिप्सया ॥ २५५ ॥
तस्माद्यन्मम देवेश किञ्चिदस्ति सुचेष्टितं ।
दत्तमिष्टमथो जप्तं सामान्यं तैस्तदस्तु नः ॥ २५६ ॥
बहुकालोपभोग्यं हि फलं यन्मम कर्म्मणः ।
तदस्तु दिनमप्येकं तैः समं त्वत्प्रसादतः ॥ २५७ ॥

पक्षिण ऊचुः ॥

एवं भविष्यतीत्युक्त्वा शक्रस्त्रिभुवनेश्वरः ।
प्रसन्नचेता धर्म्मस्य विश्वामित्रस्य गाधिजः ॥ २५८ ॥
विमानकोटिसम्बद्धं स्वर्गलोकान्महीतलं ।
गत्वायोध्याजनं प्राह दिवमारुह्यतामिति ॥ २५९ ॥
तदिन्द्रस्य वचः श्रुत्वा प्रीत्या तस्य च भूपतेः ।
आनीय रोहितास्यञ्च विश्वामित्रो महातपाः ॥ २६० ॥
अयोध्याख्ये पुरे रम्ये सोऽभ्यसिञ्चन्नृपात्मजं ।
देवैश्च मुनिभिः सिद्धैरभिषिच्य नराधिपं ॥ २६१ ॥
राज्ञा सह तदा सर्व्वे हृष्टपुष्टसुहृज्जनाः ।
सपुत्रभृत्यदारास्ते दिवमारुरुहुर्जनाः ॥ २६२ ॥
पदे पदे विमानात्ते विमानमगमन्नराः ।
तदा सम्भूतहर्षोऽसौ हरिश्चन्द्रश्च पार्थिवः ॥ २६३ ॥
सम्प्राप्य भूतिमतुलां विमानैः स महीपतिः ।
आसाञ्चक्रे पुराकारे वप्रप्राकारसंवृते ॥ २६४ ॥
ततस्तस्यर्द्धिमालोक्य श्लोकं तत्रोशना जगौ ।
दैत्याचार्य्यो महाभागः सर्व्वशास्त्रार्थतत्त्ववित् ॥ २६५ ॥

शुक उवाच ॥

हरिश्चन्द्रसमो राजा न भूतो न भविष्यति ।
यः शृणोति स्वदुःखार्त्तः स सुखं महदाप्नुयात् ॥ २६६ ॥
स्वर्गार्थी प्राप्नुयात् स्वर्गं पुत्त्रार्थी पुत्त्रमाप्नुयात् ।
भार्य्यार्थी प्राप्नुयाद्भार्य्यां राज्यार्थी राज्यमाप्नुयात् ॥ २६७ ॥
अहो तितिक्षामाहात्म्यमहो दानफलं महत् ।
यदागतो हरिश्चन्द्रः पुरीञ्चेन्द्रत्वमाप्तवान् ॥ २६८ ॥

पक्षिण ऊचुः ॥

एतत्ते सर्व्वमाख्यातं हरिश्चन्द्रविचेष्टितं ।
अतःपरं कथाशेषः श्रूयतां मुनिसत्तम ॥ २६९ ॥
विपाको राजसूयस्य पृथिवीक्षयकारणं ।
तद्विपाकनिमित्तञ्च युद्धमाडिबकं महत् ॥ २७० ॥

इति मार्कण्डेयपुराणे हरिश्चन्द्रोपाख्यानं ॥ ८ ॥

नवमोऽध्यायः ॥



पक्षिण ऊचुः ॥

राज्यच्युते हरिश्चन्द्रे गते च त्रिदशालयं ।
निश्चक्राम महातेजा जलवासात् पुरोहितः ॥ १ ॥
वशिष्ठो द्वादशाब्दान्ते गङ्गापर्य्युषितो मुनिः ।
शुश्राव च समस्तन्तु विश्वामित्रविचेष्टितं ॥ २ ॥

हरिश्चन्द्रस्य नाशञ्च राज्यस्योदारकर्म्मणः ।
चण्डालसंप्रयोगञ्च भार्य्यातनयविक्रयं ॥ ३ ॥
स श्रुत्वा सुमहाभागः प्रीतिमान्वनीपतौ ।
चकार कोपं तेजस्वी विश्वामित्रमृषिम्प्रति ॥ ४ ॥

वशिष्ठ उवाच ॥

मम पुत्रशतं तेन विश्वामित्रेण घातितं ।
तत्रापि नाभवत्क्रोधस्तादृशो यादृशोऽद्य मे ॥ ५ ॥
श्रुत्वा नराधिपमिमं स्वराज्यादवरोपितं ।
महात्मानं महाभागं देवब्राह्मणपूजकं ॥ ६ ॥
यस्मात् स सत्यवाक् शान्तः शत्रावपि विमत्सरः ।
अनागाश्चैव धर्म्मात्मा अप्रमत्तो मदाश्रयः ॥ ७ ॥
सपत्नीभृत्यपुत्रस्तु प्रापितोऽन्त्यां दशां नृपः ।
स राज्याच्च्यावितोऽनेन बहुशश्च खिलीकृतः ॥ ८ ॥
तस्माद्दुरात्मा ब्रह्मद्विट् प्राज्ञानामवरोपितः ।
मच्छापोपहतो मूढः स बकत्वमवाप्स्यति ॥ ९ ॥

पक्षिण ऊचुः ॥

श्रुत्वा शापं महातेजा विश्वामित्रोऽपि कौशिकः ।
त्वमप्याडिर्भवस्वेति प्रतिशापमयच्छत ॥ १० ॥
अन्योन्यशापात्तौ प्राप्तौ तिर्य्यक्त्वं परमद्युती ।
वशिष्ठः स महातेजा विश्वामित्रश्च कौशिकः ॥ ११ ॥
अन्यजातिसमायोगं गतावप्यमितौजसौ ।
युयुधातेऽतिसंरब्धौ महाबलपराक्रमौ ॥ १२ ॥

योजनानां सहस्रे द्वे प्रमाणेनाडिरुच्छ्रितः ।
यस्त्वभवत्यधिकं ब्रह्मन् सहस्त्रमितयं वकः ॥ १३ ॥
तौ तु पक्षप्रहाराभ्यामन्योन्यस्योरुविक्रमौ ।
प्रहरन्तौ भयं तीव्रं प्रजानामावहतुस्तदा ॥ १४ ॥
विधूय पक्षाणि वको रक्तोद्‌वृत्ताक्षिरानमत् ।
आडिं सोऽप्युन्नतग्रीवो वकं पद्भ्यामताडयत् ॥ १५ ॥
तयोः पक्षानिलापास्ताः प्रपेतुर्गिरयो भुवि ।
गिरिप्रपाताभिहता चकम्पे च वसुन्धरा ॥ १६ ॥
सा कम्पमाना जलधीनुद्‌वृत्ताम्बूंश्चकार च ।
ननाम चैकपार्श्वेन पातालगमनोन्मुखी ॥ १७ ॥
केचिद्गिरिनिपातेन केचिदम्भोधिवारिणा ।
केचिन्महीसञ्चलनात् प्रययुः प्राणिनः क्षयं ॥ १८ ॥
इति सर्व्वं परित्रस्तं हाहाभूतमचेतनं ।
जगदासीत्सुसम्भ्रान्तं पर्य्यस्तक्षितिमण्डलं ॥ १९ ॥
हा वत्स हा कान्त शिशो प्रयाह्येषोऽस्मि संस्थितः ।
हा प्रिये कान्त शैलोऽयं पतत्याशु पलायतां ॥ २० ॥
इत्याकुलीकृते लोके सन्त्रासविमुखे तदा ।
सुरैः परिवृतः सर्व्वैराजगाम पितामहः ॥ २१ ॥
प्रत्युवाच च विश्वेशस्तावुभावतिकोपितौ ।
युद्धं वां विरमत्वेतल्लोकाः स्वास्थ्यं व्रजन्तु च ॥ २२ ॥
शृण्वन्तावपि तौ वाक्यं ब्रह्मणोऽव्यक्तजन्मनः ।
कोपामर्षसमाविष्टौ युयुधाते न तस्थतुः ॥ २३ ॥

ततः पितामहो देवस्तं दृष्ट्वा लोकसंक्षयं ।
तयोश्च हितमन्विच्छन् तिर्य्यग्भावमपानुदत् ॥ २४ ॥
ततस्तौ पूर्व्वदेहस्थौ प्राह देवः प्रजापतिः ।
व्युदस्ते तामसे भावे वशिष्ठकौशिकर्षभौ ॥ २५ ॥
जहि वत्स वशिष्ठ त्वं त्वञ्च कौशिक सत्तम ।
तामसं भावमाश्रित्य ईदृग्युद्धं चिकीर्षितं ॥ २६ ॥
राजसूयविपाकोऽयं हरिश्चन्द्रस्य भूपतेः ।
युवयोर्विग्रहश्चायं पृथिवीक्षयकारकः ॥ २७ ॥
नचापि कौशिकश्रेष्ठस्तस्य राज्ञोऽपराध्यते ।
स्वर्गप्राप्तिकरो ब्रह्मन्नुपकारपदे स्थितः ॥ २८ ॥
तपोविघ्नस्य कर्त्तारौ कामक्रोधवशं गतौ ।
परित्यजत भद्रं वो ब्रह्म हि प्रचुरं बलं ॥ २९ ॥
एवमुक्तौ ततस्तेन लज्जितौ तावुभावपि ।
क्षमयामासतुः प्रीत्या परिष्वज्य परस्परं ॥ ३० ॥
ततः सुरैर्वन्द्यमानो ब्रह्मा लोकं निजं ययौ ।
वशिष्ठोऽप्यात्मनः स्थानं कौशिकोऽपि स्वमाश्रमं ॥ ३१ ॥
एतदाडिवकं युद्धं हरिश्चन्द्रकथान्तथा ।
कथयिष्यन्ति ये मर्त्याः सम्यक् श्रोष्यन्ति चैव ये ॥ ३२ ॥
तेषां पापापनोदन्तु श्रुतं ह्येव करिष्यति ।
नचैव विघ्नकार्य्याणि भविष्यन्ति कदाचन ॥ ३३ ॥

इति मार्कण्डेयपुराणे आडिवकयुद्धं ॥ ९ ॥

## दशमोऽध्यायः ।

जैमिनिरुवाच ।

संशयं द्विजशार्दूला: प्रब्रूत मम पृच्छतः ।
आविर्भावतिरोभावौ भूतानां यत्र संस्थितौ ॥ १ ॥
कथं सञ्जायते जन्तुः कथं वा स विवर्द्धते ।
कथं चोदरमध्यस्थस्तिष्ठत्यङ्गनिपीडितः ॥ २ ॥
निष्क्रान्तिमुदरात् प्राप्य कथं वा वृद्धिमृच्छति ।
उत्क्रान्तिकाले च कथं चिद्भावेन वियुज्यते ॥ ३ ॥
कृत्स्नो मृतस्तथाश्नाति उभे सुकृतदुष्कृते ।
कथन्ते च तथा तस्य फलं सम्पादयन्त्युत ॥ ४ ॥
कथं न जीर्य्यते तत्र पिण्डीकृत इवाशये ।
स्त्रीकोष्ठे यत्र जीर्य्यन्ते भुक्तानि सुगुरूण्यपि ॥
भक्ष्याणि तत्र नो जन्तुर्जीर्य्यते कथमल्पकः ॥ ५ ॥
एतन्मे ब्रूत सकलं सन्देहोक्तिविवर्जितं ।
तदेतत् परमं गुह्यं यत्र मुह्यन्ति जन्तवः ॥ ६ ॥

पक्षिण ऊचुः ॥

प्रश्नभारोऽयमतुलस्त्वयास्मासु निवेशितः ।
दुर्भाव्यः सर्व्वभूतानां भावाभावसमाश्रितः ॥ ७ ॥
तं शृणुष्व महाभाग यथा प्राह पितुः पुरा ।
पुत्त्रः परमधर्म्मात्मा समतिर्नाम नामतः ॥ ८ ॥
ब्राह्मणो भार्गवः कश्चित् सुतमाह महामतिः ।

कृतोपनयनं शान्तं सुमतिं जडरूपिणं ॥ ९ ॥
वेदानधीस्व सुमते यथानुक्रममादितः ।
गुरुशुश्रूषणे व्यग्रो भैक्षान्नकृतभोजनः ॥ १० ॥
ततो गार्हस्थ्यमास्थाय चेष्ट्वा यज्ञाननुत्तमान् ।
इष्टमुत्पादयापत्यमाश्रयेथा वनन्ततः ॥ ११ ॥
वनस्थश्च ततो वत्स परिव्राट निष्परिग्रहः ।
एवमाप्स्यसि तद्ब्रह्म यत्र गत्वा न शोचसि ॥ १२ ॥

पक्षिण ऊचुः ॥

इत्येवमुक्तो बहुशो जडत्वान्नाह किञ्चन ।
पितापि तं सुबहुशः प्राह प्रीत्या पुनः पुनः ॥ १३ ॥
इति पित्रा सुतस्नेहात् प्रलोभि मधुराक्षरं ।
स चोद्यमानो बहुशः प्रहस्येदमथाब्रवीत् ॥ १४ ॥
तातैतत् बहुशोऽभ्यस्तं यत्त्वयाद्योपदिश्यते ।
तथैवऽन्यानि शास्त्राणि शिल्पानि विविधानि च ॥ १५ ॥
जन्मनामयुतं साग्रं मम स्मृतिपथं गतं ।
निर्वेदाः परितोषाश्च क्षयवृद्ध्युदये रताः ॥ १६ ॥
शत्रुमित्रकलत्राणां वियोगाः सङ्गमास्तथा ।
मातरो विविधा दृष्टाः पितरो विविधास्तथा ॥ १७ ॥
अनुभूतानि सौख्यानि दुःखानि च सहस्रशः ।
बान्धवा बहवः प्राप्ताः पितरश्च पृथग्विधाः । १८ ॥
विष्मूत्रपिच्छिले स्त्रीणां तथा कोष्ठे मयोषितं ।
पीडाश्च सुभृशं प्राप्ता रोगाणाञ्च सहस्रशः ॥ १९ ॥

गर्भदुःखान्यनेकानि बाल्ये यौवने तथा ।
वृद्धतायां तथाप्तानि तानि सर्व्वाणि संसारे ॥ २० ॥
ब्राह्मणक्षत्रियविशां शूद्राणाञ्चापि योनिषु ।
पुनश्च पशुकीटानां मृगाणामथ पक्षिणां ॥ २१ ॥
तथैव राजभृत्यानां राज्ञाञ्चाहवशालिनाम् ।
समुत्पन्नोऽस्मि गेहेषु तथैव तव वेश्मनि ॥ २२ ॥
भृत्यतां दासताञ्चैव गतोऽस्मि बहुशो नृणां ।
स्वामित्वमीश्वरत्वञ्च दरिद्रत्वं तथा गतः ॥ २३ ॥
हतं मया हतश्चान्यैर्हतं मे घातितं तथा ।
दत्तं ममान्यैरन्येभ्यो मया दत्तमनेकशः ॥ २४ ॥
पितृमातृसुहृद्भ्रातृकलत्रादिकृतेन च ।
तुष्टोऽसकृत्तथा दैन्यमश्रुधौताननो गतः ॥ २५ ॥
एवं संसारचक्रेऽस्मिन् भ्रमता तात सङ्कटे ।
ज्ञानमेतन्मया प्राप्तं मोक्षसम्प्राप्तिकारकं ॥ २६ ॥
विज्ञाते यत्र सर्व्वोऽयमृग्यजुःसामसंज्ञितः ।
क्रियाकलापो विगुणो न सम्यक् प्रतिभाति मे ॥ २७ ॥
तस्मादुत्पन्नबोधस्य वेदैः किं मे प्रयोजनं ।
गुरुविज्ञानतृप्तस्य निरीहस्य सदात्मनः ॥ २८ ॥
षट्प्रकारक्रियादुःखसुखहर्षरसैश्च यत् ।
गुणैश्च वर्ज्जितं ब्रह्म तत्प्राप्स्यामि परं पदं ॥ २९ ॥
रसहर्षभयोद्वेगक्रोधामर्षजरातुरां ।
विज्ञातां स्वस्त्रगम्याढितकृपाश्रयताकुलां ॥ ३० ॥

तस्मात् यास्याम्यहं तात त्यक्त्वेमां दुःखसन्ततिं ।
त्रयोधर्म्ममधर्म्माख्यं किम्पाकफलसन्निभं ॥ ३१ ॥

पक्षिण ऊचुः ॥

तस्य तद्वचनं श्रुत्वा हर्षविस्मयगद्गदं ।
पिता प्राह महाभागः स्वसुतं हृष्टमानसः ॥ ३२ ॥

पितोवाच ॥

किमेतद्वदसे वत्स कुतस्ते ज्ञानसम्भवः ।
केन ते जडता पूर्व्वमिदानीञ्च प्रबुद्धता ॥ ३३ ॥
किन्नु शापविकारोऽयं मुनिदेवकृतस्तव ।
यत्ते ज्ञानं तिरोभूतमाविर्भावमुपागतं ॥ ३४ ॥

पुत्र उवाच ॥

शृणु तात यथा वृत्तं ममेदं सुखदुःखदं ।
यश्चाहमासमन्यस्मिन् जन्मन्यस्मात्परन्तु यत् ॥ ३५ ॥
अहमासं पुरा विप्रो न्यस्तात्मा परमात्मनि ।
आत्मविद्याविचारेषु परां निष्ठामुपागतः ॥ ३६ ॥
सततं योगयुक्तस्य सतताभ्याससङ्क्रमात् ।
सत्संयोगात् स्वस्वभावाद् विचारविधिशोधनात् ॥ ३७ ॥
तस्मिन्नेव परा प्रीतिर्ममासीत् युञ्जतः सदा ।
आचार्य्यताञ्च सम्प्राप्तः शिष्यसन्देहकृत्तमः ॥ ३८ ॥
ततः कालेन महता ऐकान्तिकमुपागतः ।
अज्ञानान्नष्टसद्भावो विपन्नश्च प्रमादतः ॥ ३९ ॥

उत्क्रान्तिकालादारभ्य स्मृतिलोपो न मेऽभवत् ।
यावदद्यकृतस्यैव जन्मनां स्मृतिमागतं ॥ ४० ॥
पूर्व्वाभ्यासेन तेनैव सोऽहं तात जितेन्द्रियः ।
यतिष्यामि तथा कर्त्तुं न भविष्ये यथा पुनः ॥ ४१ ॥
ज्ञानदानफलं ह्येतद्यज्जातिस्मरणं मम ।
नह्येतत्प्राप्यते तात त्रयीधर्म्माश्रितैर्नरैः ॥ ४२ ॥
सोऽहं पूर्व्वाश्रमादेव निष्ठाधर्म्ममुपाश्रितः ।
एकान्तित्वमुपागम्य यतिष्याम्यात्ममोक्षणे ॥ ४३ ॥
तद्ब्रूहि त्वं महाभाग यत्ते सांशयिकं हृदि ।
एतावतापि ते प्रीतिमुत्पाद्यानृण्यमाप्नुयां ॥ ४४ ॥

पक्षिण ऊचुः ॥

पिता प्राह ततः पुत्रं श्रद्दधत्तस्य तद्वचः ।
भवता यद्वयं पृष्टाः संसारभ्रमणाश्रयं ॥ ४५ ॥

पुत्र उवाच ।

शृणु तात यथा तत्त्वमनुभूतं मयाऽसकृत् ।
संसारचक्रमजरं स्थितिर्यस्य न विद्यते ॥ ४६ ॥
सोऽहं वदामि ते सर्व्वं तवैवानुज्ञया पितः ।
उत्क्रान्तिकालादारभ्य यथा नान्यो वदिष्यति ॥ ४७ ॥
उष्मा प्रकुपितः काये तीव्रवायुसमीरितः ।
भिनत्ति मर्म्मस्थानानि दीप्यमानो निरिन्धनः ॥ ४८ ॥
उदानो नाम पवनस्ततश्चोर्द्धं प्रवर्त्तते ।
भुक्तानामम्बुभक्ष्याणामधोगतिनिरोधकृत् ॥ ४९ ॥

ततो येनाम्बुदानानि कृतान्यकरसान्यथा ।
दत्ताः स तस्य आह्लादमापदि प्रतिपद्यते ॥ ५० ॥
अन्नानि येन दत्तानि श्रद्धापूतेन चेतसा ।
सोऽपि तृप्तिमवाप्नोति विनाप्यन्नेन वै तदा ॥ ५१ ॥
येनान्वतानि नोक्तानि प्रीतिभेदः कृतो न च ।
आस्तिकः श्रद्दधानश्च स सुखं मृत्युमृच्छति ॥ ५२ ॥
देवब्राह्मणपूजायां ये रता नानुसूयवः ।
शुक्ला वदान्या ह्रीमन्तस्ते नराः सुखमृत्यवः ॥ ५३ ॥
यो न कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ।
यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति ॥ ५४ ॥
अवारिदायिनो दाहं क्षुधाञ्चानन्नदायिनः ।
प्राप्नुवन्ति नराः काले तस्मिन्मृत्यावुपस्थिते ॥ ५५ ॥
शीतं जयन्तीन्धनदास्तापं चन्दनदायिनः ।
प्राणघ्नीं वेदनां कष्टां ये चानुद्वेगकारिणः ॥ ५६ ॥
मोहाज्ञानप्रदातारः प्राप्नुवन्ति महद्भयं ।
वेदनाभिरुदग्राभिः प्रपीड्यन्तेऽधमा नराः ॥ ५७ ॥
कूटसाक्षी मृषावादी यश्चासदनुशास्ति वै ।
ते मोहमृत्यवः सर्व्वे तथा वेदविनिन्दकाः ॥ ५८ ॥
विभीषणाः पूतिगन्धाः कूटमुद्गरपाणयः ।
आगच्छन्ति दुरात्मानो यमस्य पुरुषास्तदा ॥ ५९ ॥
प्राप्तेषु दृक्पथं तेषु जायते तस्य वेपथुः ।
क्रन्दत्यविरतं सोऽथ भ्रातृमातृसुतानथ ॥ ६० ॥

सास्य वागस्फुटा तात एकवर्णा विभाव्यते ।
दृष्टिश्च भ्राम्यते चासाच्चासाच्छुष्यतश्चाननं ॥ ६१ ॥
ऊर्द्ध्वश्वासान्वितः सोऽथ दृष्टिभङ्गसमन्वितः ।
ततः स वेदनाविष्टस्तच्छरीरं विमुञ्चति ॥ ६२ ॥
वायुग्रसारी तद्रूपं देहमन्यत् प्रपद्यते ।
तत्कर्म्मजं यातनार्थं न मातृपितृसम्भवं ॥
तत्प्रमाणवयोवस्थासंस्थानैः प्राग्भवं यथा ॥ ६३ ॥
ततो दूतो यमस्याशु पाशैर्बध्नाति दारुणैः ।
दण्डप्रहारसम्भ्रान्तं कर्षते दक्षिणां दिशं ॥ ६४ ॥
कुशकण्टकवल्मीकशङ्कुपाषाणकर्कशे ।
तथा प्रदीप्तज्वलने क्वचिच्छ्वभ्रशतोत्कटे ॥ ६५ ॥
प्रदीप्तादित्यतप्ते च दह्यमाने तदंशुभिः ।
कृष्यते यमदूतैश्चाशिवसन्नादभीषणैः ॥ ६६ ॥
विकृष्यमाणस्तैर्घोरैर्भक्ष्यमाणः शिवाशतैः ।
प्रयाति दारुणे मार्गे पापकर्म्मा यमक्षयं ॥ ६७ ॥
छत्रोपानत्प्रदातारो ये च वस्त्रप्रदा नराः ।
ते यान्ति मनुजा मार्गं तं सुखेन तथान्नदाः ॥ ६८ ॥
एवं क्लेशाननुभवन्नवशः पापपीडितः ।
नीयते द्वादशाहेन धर्म्मराजपुरं नरः ॥ ६९ ॥
कलेवरे दह्यमाने महान्तं दाहमृच्छति ।
ताड्यमाने तथैवार्त्तिं छिद्यमाने च दारुणां ॥ ७० ॥
क्लिद्यमाने चिरतरं जन्तुर्दुःखमवाप्नुते ।

स्वेन कर्म्मविपाकेन देहान्तरगतोऽपि सन् ॥ ७१ ॥
तत्र यद्बान्धवास्तोयं प्रयच्छन्ति तिलैः सह ।
यच्च पिण्डं प्रयच्छन्ति नीयमानस्तदश्नुते ॥ ७२ ॥
तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनञ्च यत् ।
तेन चाप्याय्यते जन्तुर्यच्चाश्नन्ति स बान्धवाः ॥ ७३ ॥
भूमौ स्वपद्भिर्नात्यन्तं क्लेशमाप्नोति बान्धवैः ।
दानं ददद्भिश्च तथा जन्तुराप्याय्यते मृतः ॥ ७४ ॥
नीयमानः स्वकं गेहं द्वादशाहं स पश्यति ।
उपभुङ्क्ते तथा दत्तं तोयपिण्डादिकं भुवि ॥ ७५ ॥
द्वादशाहात्परं घोरमायसं भीषणाकृतिं ।
याम्यं पश्यत्यथो जन्तुः कृष्यमाणः पुरं ततः ॥ ७६ ॥
गतमात्रोऽतिरक्ताक्षं भिन्नाञ्जनचयप्रभं ।
मृत्युकालान्तकादीनां मध्ये पश्यति वै यमं ॥ ७७ ॥
दंष्ट्राकरालवदनं भ्रुकुटीदारुणाकृतिं ।
विरूपैर्भीषणैर्व्वक्रैर्वृतं व्याधिशतैः प्रभुं ॥ ७८ ॥
दण्डासक्तं महाबाहुं पाशहस्तं सुभैरवं ।
तन्निर्दिष्टां ततो याति गतिं जन्तुः शुभाशुभां ॥ ७९ ॥
रौरवे कूटसाक्षी तु याति यश्चानृतो नरः ।
तस्य स्वरूपं गदतो रौरवस्य निशामय ॥ ८० ॥
योजनानां सहस्रे द्वे रौरवो हि प्रमाणतः ।
जानुमात्रप्रमाणश्च ततः श्वभ्रः सुदुस्तरः ॥ ८१ ॥
तत्राङ्गारचयोपेतं कृतञ्च धरणीसमं ।

आज्वल्यमानस्तीक्ष्णेन तापिताङ्गारभूमिना ॥ ८२ ॥
तन्मध्ये पापकर्म्माणं विमुञ्चन्ति यमानुगाः ।
स दह्यमानस्तीक्ष्णेन वह्निना तत्र धावति ॥ ८३ ॥
पदे पदे च पादोऽस्य शीर्य्यते जीर्य्यते पुनः ।
अहोरात्रेणोद्धरत्नं पादन्यासं च गच्छति ॥ ८४ ॥
एवं सहस्रमुत्तीर्णो योजनानां विमुच्यते ।
ततोऽन्यं पापशुद्ध्यर्थं तादृङ्निरयमृच्छति ॥ ८५ ॥
ततः सर्व्वेषु निस्तीर्णः पापी तिर्य्यक्त्वमश्नुते ।
कृमिकीटपतङ्गेषु श्वापदे मशकादिषु ॥ ८६ ॥
गत्वा गजद्रुमाद्येषु गोष्वश्वेषु तथैव च ।
अन्यासु चैव पापासु दुःखदासु च योनिषु ॥ ८७ ॥
मानुषं प्राप्य कुब्जो वा कुत्सितो वामनोऽपि वा ।
चण्डालपुक्कषाद्यासु नरो योनिषु जायते ॥ ८८ ॥
अवशिष्टेन पापेन पुण्येन च समन्वितः ।
ततश्चारोहणीं जातिं शूद्रवैश्यनृपादिकाम् ॥ ८९ ॥
विप्रदेवेन्द्रताञ्चापि कदाचिदवरोहणीं ।
एवन्तु पापकर्म्माणो नरकेषु पतन्त्यधः ॥ ९० ॥
यथा पुण्यकृतो यान्ति तन्मे निगदतः शृणु ।
ते यमेन विनिर्दिष्टां यान्ति पुण्यां गतिं नराः ॥ ९१ ॥
प्रगीतगन्धर्व्वगणाः प्रनृत्ताप्सरसां गणाः ।
हारनूपुरमाधुर्य्यशोभितान्युत्तमानि च ॥ ९२ ॥
प्रयान्त्याशु विमानानि नानादिव्यस्रगुज्ज्वलाः ।

तस्माच्च प्रच्युता राज्ञामन्येषाञ्च महात्मनां ॥ ९३ ॥
जायन्ते च कुले तत्र सद्‌वृत्तपरिपालकाः ।
भोगान् सम्प्राप्नुवन्त्युग्रांस्ततो यान्त्यूर्द्ध्वमन्यथा ॥ ९४ ॥
अवरोहणीञ्च सम्प्राप्य पूर्व्ववद्यान्ति मानवाः ।
एतत्ते सर्व्वमाख्यातं यथा जन्तुर्विपद्यते ॥
अतः शृणुष्व विप्रर्षे यथा गर्भं प्रपद्यते ॥ ९५ ॥

इति मार्कण्डेयपुराणे पितापुत्रसंवादे ॥ १० ॥

---

एकादशोऽध्यायः ॥

पुत्र उवाच ॥

निषेकं मानवं स्त्रीणां वीजं प्रोक्तं रजस्यथ ।
विमुक्तमात्रो नरकात् स्वर्गाद्वापि प्रपद्यते ॥ १ ॥
तेनाभिभूतं तत् स्थैर्य्यं याति वीजद्वयं पितः ।
कललत्वं बुद्बुदत्वं ततः पेशित्वमेव च ॥ २ ॥
पेश्यां यथाणुवीजं स्यादङ्कुरस्तद्वदुच्यते ।
अङ्गानाञ्च तथोत्पत्तिः पञ्चानामनुभागशः ॥ ३ ॥
उपाङ्गान्यङ्गुलीनेत्रनासास्यश्रवणानि च ।
प्ररोहं यान्ति चाङ्गेभ्यस्तद्वत्तेभ्यो नखादिकं ॥ ४ ॥
त्वचि रोमाणि जायन्ते केशाश्चैव ततः परं ।
समं सद्दृद्धिमायाति तेनैवोल्वकोषकं ॥ ५ ॥

नारिकेलफलं यद्वत् सकोषं वृद्धिमृच्छति ।
तद्वत् प्रयात्यसौ वृद्धिं स कोषोऽधोमुखः स्थितः ॥ ६ ॥
तले तु जानुपार्श्वाभ्यां करौ न्यस्य स वर्द्धते ।
अङ्गुष्ठौ चोपरि न्यस्तौ जान्वोरग्रे तथाङ्गुली ॥ ७ ॥
जानुपृष्ठे तथा नेत्रे जानुमध्ये च नासिका ।
स्फिचौ पार्ष्णिद्वयस्थे च बाहुजङ्घे बहिःस्थिते ॥ ८ ॥
एवं वृद्धिं क्रमाद्याति जन्तुः स्त्रीगर्भसंस्थितः ।
अन्यसत्त्वोदरे जन्तोर्यथा रूपं तथा स्थितिः ॥ ९ ॥
काठिन्यमग्निना याति भुक्तपीतेन जीवति ।
पुण्या पुण्याश्रयमयी स्थितिर्जन्तोस्तथोदरे ॥ १० ॥
नाडी चाप्यायनी नाम नाभ्यां तस्य निबध्यते ।
स्त्रीणां तथान्त्रसुषिरे सा निबद्धोपजायते ॥ ११ ॥
क्रामन्ति भुक्तपीतानि स्त्रीणां गर्भोदरे यथा ।
तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति वै ॥ १२ ॥
स्मृतीस्तस्य प्रयान्त्यस्य बह्वीः संसारभूमयः ।
ततो निर्वेदमायाति पीड्यमान इतस्ततः ॥ १३ ॥
पुनर्नैवं करिष्यामि मुक्तमात्र इहोदरात् ।
तथा तथा यतिष्यामि गर्भं नाप्स्याम्यहं यथा ॥ १४ ॥
इति चिन्तयते स्मृत्वा जन्मदुःखशतानि वै ।
यानि पूर्वानुभूतानि दैवभूतानि यानि वै ॥ १५ ॥
ततः कालक्रमाज्जन्तुः परिवर्त्तत्यधोमुखः ।
नवमे दशमे वापि मासि सञ्जायते ततः ॥ १६ ॥

निष्क्राम्यमाणो वातेन प्राजापत्येन पीड्यते ।
निष्क्राम्यते च विलपन् हृदि दुःखनिपीडितः ॥ १७ ॥
निष्क्रान्तश्चोदरान्मूर्च्छामसह्यां प्रतिपद्यते ।
प्राप्नोति चेतनां चासौ वायुस्पर्शसमन्वितः ॥ १८ ॥
ततस्तं वैष्णवी माया समास्कन्दति मोहिनी ।
तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्नुते ॥ १९ ॥
भ्रष्टज्ञानो बालभावं ततो जन्तुः प्रपद्यते ।
ततः कौमारकावस्थां यौवनं वृद्धतामपि ॥ २० ॥
पुनश्च मरणं तद्वज्जन्म चाप्नोति मानवः ।
ततः संसारचक्रेऽस्मिन् भ्राम्यते घटियन्त्रवत् ॥ २१ ॥
कदाचित्स्वर्गमाप्नोति कदाचिन्निरयं नरः ।
नरकञ्चैव स्वर्गञ्च कदाचिच्च मृतोऽश्नुते ॥ २२ ॥
कदाचिदत्रैव पुनर्जातः स्वं कर्म सोऽश्नुते ।
कदाचिद्भुक्तकर्मा च मृतः स्वल्पेन गच्छति ॥ २३ ॥
कदाचिदल्पैश्च ततो जायतेऽत्र शुभाशुभैः ।
स्वर्लोके नरके चैव भुक्तप्रायो द्विजोत्तम ॥ २४ ॥
नरकेषु महद्दुःखमेतद्यत् स्वर्गवासिनः ।
दृश्यन्ते तात मोदन्ते पात्यमानाश्च नारकाः ॥ २५ ॥
स्वर्गेऽपि दुःखमतुलं यदारोहणकालतः ।
प्रभृत्यहं पतिष्यामीत्येतन्मनसि वर्त्तते ॥ २६ ॥
नारकांश्चैव संप्रेक्ष्य महद्दुःखमवाप्यते ।
एतां गतिमहं गन्तेत्यहर्निशमनिर्वृतः ॥ २७ ॥

गर्भवासे महद्दुःखं जायमानस्य योनितः ।
जातस्य बालभावे च वृद्धत्वे दुःखमेव च ॥ २८ ॥
कामेर्ष्याक्रोधसम्बन्धं यौवने चातिदुःसहं ।
दुःखप्राया वृद्धता च मरणे दुःखमुत्तमं ॥ २९ ॥
कृष्यमाणस्य याम्यैश्च नरकेषु च पात्यतः ।
पुनश्च गर्भो जन्माथ मरणं नरकस्तथा ॥ ३० ॥
एवं संसारचक्रेऽस्मिन् जन्तवो घटियन्त्रवत् ।
भ्राम्यन्ते प्राकृतैर्बन्धैर्बद्धा बध्यन्ति चासकृत् ॥ ३१ ॥
नास्ति तात सुखं किञ्चिदत्र दुःखशताकुले ।
तस्मान्मोक्षाय यतता कथं सेव्या मया त्रयी ॥ ३२ ॥

इति मार्कण्डेयपुराणे पितापुत्रसंवादे ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

पितोवाच ।

साधु वत्स त्वयाख्यातं संसारगहनं परं ।
ज्ञानप्रदानसम्भूतं समाश्रित्य महाफलं ॥ १ ॥
तत्र ते नरकाः सर्व्वे यथा वै रौरवस्तथा ।
वर्णितास्तान् समाचक्ष्व विस्तरेण महामते ॥ २ ॥

पुत्र उवाच।

रौरवस्ते समाख्यातः प्रथमं नरको मया।
महारौरवसञ्ज्ञन्तु शृणुष्व नरकं पितः॥ ३॥
योजनानां सहस्राणि सप्त पञ्च समन्ततः।
तत्र ताम्रमयी भूमिरधस्तस्य हुताशनः॥ ४॥
तत्तापतप्ता सर्व्वाशा प्रोद्यदिन्दुसमप्रभा।
विभात्यतिमहारौद्रा दर्शनस्पर्शनादिषु॥ ५॥
तस्यां बद्धः कराभ्याञ्च पद्भ्याञ्चैव यमानुगैः।
मुच्यते पापकृन्मध्ये लुठमानः स गच्छति॥ ६॥
काकैर्वकैर्वृकोलूकैर्वृश्चिकैर्मशकैस्तथा।
भक्ष्यमाणस्तथा गृध्रैर्द्रुतं मार्गे विकृष्यते॥ ७॥
दह्यमानः पितर्मातर्भ्रातस्तातेति चाकुलः।
वदत्यसकृदुद्विग्नो न शान्तिमधिगच्छति॥ ८॥
एवं तस्मान्नरैर्मोक्षो मतिभ्रान्तैरवाप्यते।
वर्षायुतायुतैः पापं यैः कृतं दुष्टबुद्धिभिः॥ ९॥
तथान्यस्तु तमो नाम सोऽतिशीतः स्वभावतः।
महारौरववद्दीर्घस्तथा स तमसा वृतः॥ १०॥
शीतार्त्तास्तत्र धावन्तो नरास्तमसि दारुणे।
परस्परं समासाद्य परिरभ्याश्रयन्ति च॥ ११॥
दन्तास्तेषाञ्च भज्यन्ते शीतार्त्तिपरिकम्पिताः।
क्षुत्तृष्णाप्रबलास्तत्र तथैवान्येऽप्युपद्रवाः॥ १२॥
हिमखण्डवहो वायुर्भिनत्त्यस्थीनि दारुणः।

मज्जासृग्गलितन्तस्मादश्नुवन्ति क्षुधान्विताः ॥ १३ ॥
लेलिह्यमाना भ्राम्यन्ते परस्परसमागमे ।
एवं तत्रापि सुमहान् क्लेशस्तमसि मानवैः ॥ १४ ॥
प्राप्यते ब्राह्मणश्रेष्ठ यावद्दुष्कृतसंक्षयः ।
निकृन्तन इति ख्यातस्ततोऽन्यो नरकोत्तमः ॥ १५ ॥
तस्मिन् कुलालचक्राणि भ्राम्यन्त्यविरतं पितः ।
तेष्वारोप्य निकृत्यन्ते कालसूत्रेण मानवाः ॥ १६ ॥
यमानुगाङ्गुलिस्थेन आपादतलमस्तकम् ।
न चैषां जीवितभ्रंशो जायते द्विजसत्तम ॥ १७ ॥
छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्ति च ।
एवं वर्षसहस्राणि छिद्यन्ते पापकर्म्मिणः ॥ १८ ॥
तावद्यावदशेषं वै तत्पापं हि क्षयं गतं ।
अप्रतिष्ठञ्च नरकं शृणुष्व गदतो मम ॥ १९ ॥
यत्रस्थैर्नारकैर्दुःखमसह्यमनुभूयते ।
तान्येव तत्र चक्राणि घटीयन्त्राणि चान्यतः ॥ २० ॥
दुःखस्य हेतुभूतानि पापकर्म्मकृतां नृणां ।
चक्रेष्वारोपिताः केचिद्भ्राम्यन्ते तत्र मानवाः ॥ २१ ॥
यावद्वर्षसहस्राणि न तेषां स्थितिरन्तरा ।
घटीयन्त्रेषु चैवान्ये बद्धास्तोये यथा घटी ॥ २२ ॥
भ्राम्यन्ते मानवा रक्तमुद्गिरन्तः पुनः पुनः ।
अन्त्रैर्मुखविनिक्रान्तैर्नेत्रैरश्रुविलम्बिभिः ॥ २३ ॥
दुःखानि ते प्राप्नुवन्ति यान्यसह्यानि जन्तुभिः ।

असिपत्रवनं नाम नरकं शृणु चापरं ॥ २४ ॥
योजनानां सहस्रं यो ज्वलदग्न्यास्तृतावनिः ।
तप्ताः सूर्य्यकरैश्चण्डैर्यत्रातीव सुदारुणैः ॥ २५ ॥
प्रपतन्ति सदा तत्र प्राणिनो नरकौकसः ।
तन्मध्ये च वनं रम्यं स्निग्धपत्रं विभाव्यते ॥ २६ ॥
पत्राणि तत्र खड्गानां फलानि द्विजसत्तम ।
श्वानश्च तत्र सबलाः स्वनन्त्ययुतशोभिताः ॥ २७ ॥
महावक्त्रा महादंष्ट्रा व्याघ्रा इव भयानकाः ।
ततस्तद्वनमालोक्य शिशिरच्छायमग्रतः ॥ २८ ॥
प्रयान्ति प्राणिनस्तत्र तीव्रतृट्परिपीडिताः ।
हा मातर्हा तात इति क्रन्दन्तोऽतीव दुःखिताः ॥ २९ ॥
दह्यमानाङ्घ्रियुगला धरणीस्थेन वह्निना ।
तेषां गतानां तत्रासिपत्रपाती समीरणः ॥ ३० ॥
प्रवाति तेन पात्यन्ते तेषां खड्गान्यथोपरि ।
ततः पतन्ति ते भूमौ ज्वलत्पावकसञ्चये ॥ ३१ ॥
लेलिह्यमाने चान्यत्र व्याप्ताशेषमहीतले ।
सारमेयास्ततः शीघ्रं शातयन्ति शरीरतः ॥ ३२ ॥
तेषामङ्गानि रुदतामनेकान्यतिभीषणाः ।
असिपत्रवनं तात मयैतत् कीर्त्तितं तव ॥ ३३ ॥
अतः परं भीमतरं तप्तकुम्भं निबोध मे ।
समन्ततस्तप्तकुम्भा वह्निज्वालासमावृताः ॥ ३४ ॥
ज्वलदग्निचयोद्‌वृत्ततैलायश्चूर्णपूरिताः ।

तेषु दुष्कृतकर्म्माणो याम्यैः क्षिप्ता ह्यधोमुखाः ॥ ३५ ॥
क्वाथ्यन्ते विस्फुटद्गात्रगलन्मज्जजलाविलाः ।
स्फुटत्कपालनेत्रास्थिच्छिद्यमाना विभीषणैः ॥ ३६ ॥
गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगिभिः ।
पुनः सिमसिमायन्ते तैलेनैक्यं व्रजन्ति च ॥ ३७ ॥
द्रवीभूतैः शिरोगात्रस्नायुमांसत्वगस्थिभिः ।
ततो याम्यैर्नरैराशु दर्व्या घट्टनघट्टिताः ॥ ३८ ॥
कृतावर्त्ते महातैले मथ्यन्ते पापकर्म्मिणः ।
एष ते विस्तरेणोक्तस्तप्तकुम्भो मया पितः ॥ ३९ ॥

इति मार्कण्डेयपुराणे पितापुत्रसंवादे महारौरवादिनरकाख्यानं ॥ १२ ॥

### त्रयोदशोऽध्यायः ॥

पुत्र उवाच ॥

अहं वैश्यकुले जातो जन्मन्यस्मात्तु सप्तमे ।
समतीते गवां रोधं निपाने कृतवान् पुरा ॥ १ ॥
विपाकात् कर्म्मणस्तस्य नरकं भृशदारुणं ।
संप्राप्तोऽग्निशिखाघोरमयोमुखखगाकुलं ॥ २ ॥
यन्त्रपीडनगात्रोत्थरक्तप्रवाहोद्भूतकर्दमं ।
विशस्यमानदुष्कर्म्मिनिपातरवाकुलं ॥ ३ ॥
पात्यमानस्य मे तत्र साग्रं वर्षशतं गतं ।
महातापार्त्तितप्तस्य तृष्णादाहान्वितस्य च ॥ ४ ॥

ततश्चाह्लादकरः सद्यः पवनः सुखशीतलः ।
करम्भवालुकाकुम्भमध्यस्थो मे समागतः ॥ ५ ॥
तत्सम्पर्कादपेतार्त्ता मामवस्थानना भृशां ।
मम चापि यथा स्वर्गे स्वर्गिणां निर्वृतिः परा ॥ ६ ॥
किमेतदिति चाह्लादविस्तारस्तिमितेक्षणैः ।
दृष्टमस्माभिरासन्नं नररत्नमनुत्तमं ॥ ७ ॥
याम्यश्च पुरुषो घोरो दण्डहस्तोऽशनिप्रभः ।
पुरतो दर्शयन्मार्गमितएहीति चागय ॥ ८ ॥
पुरुषः स तदा दृष्ट्वा यातनाशतसङ्कुलं ।
नरकं प्राह तं याम्यं किङ्करं कृपयान्वितः ॥ ९ ॥

पुरुष उवाच ॥

भो याम्य पुरुषाचक्ष्व किं मया दुष्कृतं कृतं ।
येनेदं यातनाभीमं प्राप्तोऽस्मि नरकं परं ॥ १० ॥
विपश्चिदिति विख्यातो जनकानामहं कुले ।
जातो विदेहविषये सम्यक्प्रजापालकः ॥ ११ ॥
यज्ञैर्मयेष्टं बहुभिर्धर्म्मतः पालिता मही ।
नोत्सृष्टश्चैव संग्रामो नातिथिर्विमुखो गतः ॥ १२ ॥
पितृदेवर्षिभृत्याश्च न चापचरिता मया ।
कृता स्पृहा च न मया परस्त्रीविभवादिषु ॥ १३ ॥
पर्व्वकालेषु पितरस्तिथिकालेषु देवताः ।
पुरुषं स्वयमायान्ति निपानमिव धेनवः ॥ १४ ॥
यतस्ते विमुखा यान्ति निश्वस्य गृहमेधिनः ।

तस्मादिष्टस्य पूर्त्तस्य धर्म्मौ यावन्ति मत्कृतः ॥ १५ ॥
पितृनिश्वासविध्वस्तं सप्तजन्मार्जितं शुभं ।
त्रिजन्मप्रभवं दैवं निश्वासो हन्त्यसंशयं ॥ १६ ॥
तस्माद्दैवे च पित्र्ये च नित्यमेव स्थितोऽभवं ।
सोऽहं कथमिमं प्राप्तो नरकं भृशदारुणं ॥ १७ ॥

इति मार्कण्डेयपुराणे पितापुत्रसंवादे ॥ २१ ॥

चतुर्दशोऽध्यायः ।

पुत्र उवाच ।

इति पृष्टस्तदा तेन शृण्वतां नो महात्मना ।
उवाच पुरुषो याम्यो घोरोऽपि प्रश्रितं वचः ॥ १ ॥

यमकिङ्कर उवाच ।

महाराज यथात्थ त्वं तथैतन्नात्र संशयः ।
किन्तु स्वल्पं कृतं पापं भवता स्मारयामि तत् ॥ २ ॥
वैदर्भी तव या पत्नी पीवरी नाम नामतः ।
ऋतुमत्या ऋतुर्वन्ध्यस्त्वया तस्याः कृतः पुरा ॥ ३ ॥
सुशोभनायां कैकेय्यामासक्तेन ततो भवान् ।
ऋतुव्यतिक्रमात् प्राप्तो नरकं घोरमीदृशं ॥ ४ ॥
होमकाले यथा वह्निराज्यपातमवेक्षते ।
ऋतौ प्रजापतिस्तद्वद्वीजपातमवेक्षते ॥ ५ ॥

यस्त्वमुल्लंघ्य धर्म्मात्मा कामेष्वासक्तिमान् भवेत् ।
स तु पित्र्याहरणात् पापमवाप्य नरकं पतेत् ॥ ६ ॥
एतावदेव ते पापं नान्यत् किञ्चन विद्यते ।
तदेहि गच्छ पुण्यानामुपभोगाय पार्थिव ॥ ७ ॥

राजोवाच ॥

यास्यामि देवानुचर यत्र त्वं मां नयिष्यसि ।
किञ्चित् पृच्छामि तन्मे त्वं यथावद्वक्तुमर्हसि ॥ ८ ॥
वज्रतुण्डास्त्वमी काकाः पुंसां नयनहारिणः ।
पुनः पुनश्च नेत्राणि तद्वदेषां भवन्ति हि ॥ ९ ॥
किं कर्म्म कृतवन्तश्च कथयैतज्जुगुप्सितं ।
हरन्त्येषां तथा जिह्वां जायमानां पनर्नवां ॥ १० ॥
करपत्रेण पाट्यन्ते कस्मादेतेऽतिदुःखिताः ।
करम्भवालुकास्वेते पच्यन्ते तैलगोचराः ॥ ११ ॥
अयोमुखैः खगैश्चैते कृष्यन्ते किंविधा वद ।
विश्लिष्टदेहबन्धार्त्तिमहारावविराविणः ॥ १२ ।
अयश्चञ्चुनिपातेन सर्व्वाङ्गक्षतदुःखिताः ।
किमेतेऽनिष्टकर्त्तारस्तुद्यन्तेऽहर्निशं नराः ॥ १३ ॥
एताश्चान्याश्च दृश्यन्ते यातनाः पापकर्म्मिणां ।
येन कर्म्मविपाकेन तन्ममाशेषतो वद ॥ १४ ॥

यमकिङ्कर उवाच ॥

यन्मां पृच्छसि भूपाल पापकर्म्मफलोदयं ।
तत्तेऽहं संप्रवक्ष्यामि संक्षेपेण यथातथं ॥ १५ ॥

पुण्यापुण्ये हि पुरुषः पर्य्यायेण समश्नुते ।
भुञ्जतश्च क्षयं याति पापं पुण्यमथापि वा ॥ १६ ॥
नतु भोगादृते पुण्यं किञ्चिद्वा कर्म्म मानवं ।
पापकं वा पुनात्याशु क्षयो भोगात् प्रजायते ॥ १७ ॥
परित्यजति भोगाच्च पुण्यापुण्ये निबोध मे ।
दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयं ॥ १८ ॥
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्म्मिणः ।
गतिं नानाविधां यान्ति जन्तवः कर्म्मबन्धनात् ॥ १९ ॥
उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखं ।
श्रद्दधानाश्च शान्ताश्च धनदाः शुभकारिणः ॥ २० ॥
व्यालकुञ्जरदुर्गाणि सर्पचौरभयानि तु ।
हताः पापेन गच्छन्ति पापिनः किमतःपरं ॥ २१ ॥
सुगन्धिमाल्यसद्वस्त्रसाधुयानासनाशनाः ।
स्तूयमानाः सदा यान्ति पुण्यैः पुण्याटवीष्वपि ॥ २२ ॥
अनेकशतसाहस्रजन्मसञ्चयसञ्चितं ।
पुण्यापुण्यं नृणां तद्वत् सुखदुःखाङ्कुरोद्भवं ॥ २३ ॥
यथा बीजं हि भूपाल पयांसि समवेक्षते ।
पुण्यापुण्ये तथा कालदेशान्यकर्म्मकारकं ॥ २४ ॥
स्वल्पं पापं कृतं पुंसा देशकालोपपादितं ।
पादन्यासकृतं दुःखं कण्टकोत्थं प्रयच्छति ॥ २५ ॥
तत् प्रभूततरं स्थूलं शूलकीलकसम्भवं ।
दुःखं यच्छति तद्वच्च शिरोरोगादि दुःसहं ॥ २६ ॥

अपथ्याशनशीतोष्णश्रमतापादिकारकं ।
तथान्योन्यमपेक्षन्ते पापानि फलसङ्गमे ॥ २७ ॥
एवं महान्ति पापानि दीर्घरोगादिविक्रियां ।
तद्वच्छस्त्राग्निजञ्चार्त्तिबन्धनादिफलाय वै ॥ २८ ॥
स्वल्पं पुण्यं शुभं गन्धं वेलया सम्प्रयच्छति ।
स्पर्शं वाप्यथवा शब्दं रसं रूपमथापि वा ॥ २९ ॥
चिरात्गुरुतरं तद्वन्महान्तमपि कालजं ।
एवञ्च सुखदुःखानि पुण्यापुण्योद्भवानि वै ॥ ३० ॥
भुञ्जानोऽनेकसंसारसम्भवानीह तिष्ठति ।
जातिदेशावरुद्धानि ज्ञानाज्ञानफलानि च ॥ ३१ ॥
तिष्ठन्ति तत्र युक्तानि लिङ्गमात्रेण चात्मनि ।
वपुषा मनसा वाचा न कदाचित् कश्चिन्नरः ॥ ३२ ॥
अकुर्व्वन् पापकं कर्म्म पुण्यं वाप्यवतिष्ठते ।
यद्यत्प्राप्नोति पुरुषो दुःखं सुखमथापि वा ॥ ३३ ॥
प्रभूतमथवा स्वल्पं विक्रियाकारि चेतसः ।
तावता तस्य पुण्यं वा पापं वाप्यथ चेतरत् ॥ ३४ ॥
उपभोगात् क्षयं याति भुज्यमानमिवाशनं ।
एवमेते महापापं यातनाभिरहर्निशं ॥ ३५ ॥
क्षपयन्ति नरा घोरं नरकान्तर्विवर्त्तिनः ।
तथैव राजन् पुण्यानि स्वर्गलोकेऽमरैः सह ॥ ३६ ॥
गन्धर्व्वसिद्धाप्सरसां गीताद्यैरुपभुञ्जते ।
देवत्वे मानुषत्वे च तिर्य्यक्त्वे च शुभाशुभं ॥ ३७ ॥

पुण्यपापोद्भवं भुङ्क्ते सुखदुःखोपलक्षणं ।
यत्त्वं पृच्छसि मां राजन् यातनाः पापकर्म्मिणां ॥
केन केनेति पापेन तत्ते वक्ष्याम्यशेषतः ॥ ३८ ॥
दुष्टेन चक्षुषा दृष्टाः परदारा नराधमैः ।
मानसेन च दुष्टेन परद्रव्यञ्च सस्पृहैः ॥ ३९ ॥
वज्रतुण्डाः खगास्तेषां हरन्त्येते विलोचने ।
पुनःपुनश्च सम्भूतिरक्ष्णोरेषां भवत्यथ ॥ ४० ॥
यावतोऽक्षिनिमेषांस्तु पापमेभिर्नृभिः कृतं ।
तावद्वर्षसहस्राणि नेत्रार्त्तिं प्राप्नुवन्त्युत ॥ ४१ ॥
असच्छास्त्रोपदेशास्तु यैर्दत्ता यैश्च मन्त्रिताः ।
सम्यग्दृष्टेर्विनाशाय रिपूणामपि मानवैः ॥ ४२ ॥
यैः शास्त्रमन्यथा प्रोक्तं यैरसद्वागुदाहृता ।
वेददेवद्विजातीनां गुरोर्निन्दा च यैः कृता ॥ ४३ ॥
हरन्ति तेषां जिह्वाञ्च जायमानाः पुनःपुनः ।
तावतो वत्सरानेते वज्रतुण्डाः सुदारुणाः ॥ ४४ ॥
मित्रभेदन्तथा पित्रा पुत्रस्य स्वजनस्य च ।
याज्योपाध्याययोर्म्मात्रा सुतस्य सहचारिणः ॥ ४५ ॥
भार्य्यापत्योश्च ये केचिद्भेदं चक्रुर्नराधमाः ।
त इमे पश्य पाट्यन्ते करपत्रेण पार्थिव ॥ ४६ ॥
परोपतापका ये च ये चाह्लादनिषेधकाः ।
तालवृन्तानिलस्थानचन्दनोशीरहारिणः ॥ ४७ ॥
प्राणान्तिकं ददुस्तापमदुष्टानाञ्च येऽधमाः ।

करम्भबालुकासंस्थास्तइमे पापभागिनः॥ ४८ ॥
भुङ्क्ते श्राद्धं तु योऽन्यस्य नरोऽन्येन निमन्त्रितः।
दैवे वाप्यथवा पित्र्ये स द्विधा छद्यते खगैः॥ ४९ ॥
मर्म्माणि यस्तु साधूनामसद्वाग्भिर्निकृन्तति।
तमिमे तुदमानास्तु खगास्तिष्ठन्त्यवारिताः॥ ५० ॥
यः करोति च पैशुन्यमन्यवागन्यथामतिः।
पाट्यते हि द्विधा जिह्वा तस्येत्थं निशितैः क्षुरैः॥ ५१ ॥
मातापित्रोर्गुरूणाञ्च येऽवज्ञां चक्रुरुद्धताः।
त इमे पूयविण्मूत्रगर्त्ते मज्जन्त्यधोमुखाः॥ ५२ ॥
देवतातिथिभूतेषु भृत्येष्वभ्यागतेषु च।
अभुक्तवत्सु येऽश्नन्ति तद्वत् पित्रग्निपक्षिषु॥ ५३ ॥
दुष्टास्ते पूयनिर्यासभुजः सूचीमुखास्तु ते।
जायन्ते गिरिवर्ष्माणः पश्यैते यादृशा नराः॥ ५४ ॥
एकपङ्क्त्या तु ये विप्रमथवेतरवर्णजं।
विषमं भोजयन्तीह विड्भुजस्त इमे यथा॥ ५५ ॥
एकसार्थप्रयातं ये निःस्वमर्थार्थिनं नरं।
अपास्य स्वान्नमश्नन्ति त इमे श्लेष्मभोजिनः॥ ५६ ॥
गोब्राह्मणाग्नयः स्पृष्टा यैरुच्छिष्टैर्नरेश्वर।
तेषामेतेऽग्निकुम्भेषु क्षिप्यन्त्याहिताः कराः॥ ५७ ॥
सूर्य्येन्दुतारका दृष्टा यैरुच्छिष्टैस्तु कामतः।
तेषां याम्यैर्नरैर्नेत्रे न्यस्तो वह्निः समेध्यते॥ ५८॥
गावोऽग्निर्जननी विप्रो ज्येष्ठभ्राता पिता स्वसा।

[illegible]मयो गुरवो दृष्टा यैः स्पृष्टास्तु पदा च भिः ॥ ५९ ॥
[illegible]दाक्रुवन्ते निगडैर्लौहैरग्निप्रतापितैः ।
[illegible]ङ्गाररराशिमध्यस्थास्तिष्ठन्त्याजानुदाहिनः ॥ ६० ॥
पायसं कृसरं छागो देवान्नानि च यानि वै ।
भुक्तानि यैरसंस्कृत्य तेषां नेत्राणि पापिनां ॥ ६१ ॥
निपातितानां भूपृष्ठे उद्वृत्ताक्षिं निरीक्षतां ।
सन्दंशैः पश्य कृष्यन्ते नरैर्याम्यैर्मुखात्ततः ॥ ६२ ॥
गुरुदेवद्विजातीनां वेदानाञ्च नराधमैः ।
निन्दा निशामिता यैश्च पापानामभिनन्दतां ॥ ६३ ॥
तेषामयोमयान् कीलानग्निवर्णान् पुनःपुनः ।
कर्णेषु प्रेरयन्त्येते याम्या विलपतामपि ॥ ६४ ॥
यैः प्रपादेवविप्रौकोदेवालयसभाः शुभाः ।
भङ्क्त्वा विध्वंसमानीताः क्रोधलोभानुवर्त्तिभिः ॥ ६५ ॥
तेषामेतैः शितैः शस्त्रैर्मुहुर्विलपतां त्वचः ।
पृथक् कुर्व्वन्ति वै याम्याः शरीरादतिदारुणाः ॥ ६६ ॥
गोब्राह्मणार्कमार्गांस्तु येऽवमेहन्ति मानवाः ।
तेषामेतानि कृष्यन्ते गुदेनान्त्राणि वायसैः ॥ ६७ ॥
दत्वा कन्यां यश्च कस्मै द्वितीयाय प्रयच्छति ।
स त्वेवं नैकधा छिन्नः क्षारनद्यां प्रवाह्यते ॥ ६८ ॥
स्वपोषणपरो यस्तु परित्यजति मानवः ।
पुत्रभृत्यकलत्रादिबन्धुवर्गमकिञ्चनं ॥ ६९ ॥
दुर्भिक्षे सम्भ्रमे वापि सोऽप्येवं यमकिङ्करैः ।

उत्कृत्य दत्तानि मुखे स्वमांसान्यश्नुते क्षुधा ॥ ७० ॥
शरणागतान् यस्त्यजति लोभाद्दस्युपजीविनः ।
सोऽप्येवं यन्त्रपीडाभिः पीड्यते यमकिङ्करैः ॥ ७१ ॥
सुकृतं ये प्रयच्छन्ति यावज्जन्म कृतं नराः ।
ते पिष्यन्ते शिलापेषैर्यथैते पापकर्म्मिणः ॥ ७२ ॥
न्यासापहारिणो बद्धाः सर्व्वगात्रेषु बन्धनैः ।
कृमिवृश्चिककाकोलैर्भुज्यन्तेऽहर्निशं नराः ॥ ७३ ॥
क्षुत्क्षामास्तृट्पतज्जिह्वाताल्वो वेदनातुराः ।
दिवामैथुनिनः पापाः परदारभुजश्च ये ॥ ७४ ॥
तथैव कण्टकैर्दीर्घैरायसैः पश्य शाल्मलिं ।
आरोपिता विभिन्नाङ्गाः प्रभूतासृक्स्रवाविलाः ॥ ७५ ॥
मूषायामपि पश्यैतान् नाश्यमानान् यमानुगैः ।
पुरुषैः पुरुषव्याघ्र परदारावमर्षिणः ॥ ७६ ॥
उपाध्यायमधःकृत्वा स्तब्धो योऽध्ययनं नरः ।
गृह्णाति शिल्पमथवा सोऽप्येवं शिरसा शिलां ॥ ७७ ॥
बिभ्रत् क्लेशमवाप्नोति जनमार्गेऽतिपीडितः ।
क्षुत्क्षामोऽहर्निशं भारपीडाव्यथितमस्तकः ॥ ७८ ॥
मूत्रश्लेष्मपुरीषाणि यैरुत्सृष्टानि वारिणि ।
त इमे श्लेष्मविण्मूत्रदुर्गन्धं नरकं गताः ॥ ७९ ॥
परस्परञ्च मांसानि भक्षयन्ति क्षुधान्विताः ।
भुक्तं नातिथ्यविधिना पूर्व्वमेभिः परस्परं ॥ ८० ॥
अपविद्धास्तु यैर्वेदा वह्नयश्चाहिताग्निभिः ।

तदूर्ध्वे शैलशृङ्गाग्रात् पात्यन्तेऽधः पुनःपुनः ॥ ८१ ॥
पुनर्भूपतयो जीर्णा यावज्जीवन्ति वै नराः ।
इमे कृमित्वमापन्ना भक्ष्यन्तेऽत्र पिपीलिकैः ॥ ८२ ॥
पतितप्रतिग्रहादानाद्याजनान्नित्यसेवनात् ।
पाषाणमध्यकीटत्वं नरः सततमश्नुते ॥ ८३ ॥
पश्यतो भृत्यवर्गस्य मित्राणामतिथेस्तथा ।
एको मिष्टान्नभुग्भुङ्क्ते ज्वलदङ्गारसञ्चयं ॥ ८४ ॥
वृकैर्भयङ्करैः पृष्ठन्नित्यमस्योपभुज्यते ।
पृष्ठमांसं नृपैतेन यतो लोकस्य भक्षितं ॥ ८५ ॥
अन्धोऽय बधिरो मूको भ्राम्यतेऽयं क्षुधातुरः ।
अकृतज्ञोऽधमः पुंसामुपकारेषु वर्त्तता ॥ ८६ ॥
अयं कृतघ्नो मित्राणामपकारी सुदुर्मतिः ।
तप्तकुम्भे निपतति ततो यास्यति पेषणं ॥ ८७ ॥
करम्भवालुकां तस्मात्ततो यन्त्रावपीडनं ।
असिपत्रवनं तस्मात् करपत्रेण पाटनं ॥ ८८ ॥
कालसूत्रे तथा छेदमनेकाश्चैव यातनाः ।
प्राप्य निष्कृतिमेतस्मान्न वेद्मि कथमेष्यति ॥ ८९ ॥
श्राद्धसङ्करिणो विप्राः समुत्पत्य परस्परं ।
दृष्टा हि निःसृतं फेनं सर्व्वाङ्गेभ्यः पिबन्ति वै ॥ ९० ॥
सुवर्णस्तेयी विप्रघ्नः सुरापो गुरुतल्पगः ।
अधश्चोर्द्ध्वञ्च दीप्ताग्नौ दह्यमानाः समन्ततः ॥ ९१ ॥
तिष्ठन्त्यब्दसहस्राणि सुबहूनि ततः पुनः ।

जायन्ते मानवाः कुष्ठक्षयरोगादिचिह्निताः ॥ ९२ ॥
मृताः पुनश्च नरकं पुनर्जाताश्च तादृशं ।
व्याधिमृच्छन्ति कल्पान्तपरिमाणं नराधिप ॥ ९३ ॥
गोघ्नो न्यूनतरं याति नरकोऽथ त्रिजन्मनि ।
तथोपपातकानाञ्च सर्व्वेषामिति निश्चयः ॥ ९४ ॥
नरकप्रच्युता यानि यैर्यैर्व्विहितपातकैः ।
प्रयान्ति योनिजातानि तन्मे निगदतः शृणु ॥ ९५ ॥

इति श्रीमार्कण्डेयपुराणे जडोपाख्याने यमकिङ्करसंवादे ॥ १४ ॥

पञ्चदशोऽध्यायः ॥



यमकिङ्कर उवाच ॥

पतितात्प्रतिगृह्यार्थं खरयोनिं व्रजेद्द्विजः ।
नरकात् प्रतिमुक्तस्तु कृमिः पतितयाजकः ॥ १ ॥
उपाध्यायव्यलीकन्तु कृत्वा श्वा भवति द्विजः ।
तज्जायां मनसा वाञ्छन् तद्द्रव्यं चाप्यसंशयं ॥ २ ॥
गर्द्दभो जायते जन्तुः पित्रोश्चाप्यवमानकः ।
मातापितरावाक्रुश्य शारिका सम्प्रजायते ॥ ३ ॥
भ्रातुः पत्नीमवमन्ता च कपोतत्वं प्रपद्यते ।
तामेव पीडयित्वा तु कच्छपत्वं प्रपद्यते ॥ ४ ॥
भर्तृपिण्डमुपाश्नन् यस्तदिष्टं न निषेवते ।

सोऽपि मोहसमायुक्तो जायते वानरो मृतः ॥ ५ ॥
न्यासापहर्त्ता नरकाद्विमुक्तो जायते कृमिः ।
असूयकश्च नरकान्मुक्तो भवति राक्षसः ॥ ६ ॥
विश्वासहन्ता च नरो मीनयोनौ प्रजायते ।
धान्यं यवांस्तिलान्माषान् कुलत्थान् सर्षपांश्चणान् ॥ ७ ॥
कलायान् कलमान्मुद्गान् गोधूमानतसीस्तथा ।
सस्यान्यन्यानि वा हृत्वा मोहाज्जन्तुरचेतनः ॥ ८ ॥
सञ्जायते महावक्त्रो मूषिको बभ्रुसन्निभः ।
परदाराभिमर्षात्तु वृको घोरोऽभिजायते ॥ ९ ॥
श्वा शृगालो वको गृध्रो व्याडः कङ्कस्तथा क्रमात् ।
भ्रातृभार्य्याञ्च दुर्बुद्धिर्यो धर्षयति पापकृत् ॥ १० ॥
पुंस्कोकिलत्वमाप्नोति स चापि नरकाच्च्युतः ।
सखिभार्य्यां गुरोर्भार्य्यां राजभार्य्याञ्च पापकृत् ॥ ११ ॥
प्रधर्षयित्वा कामात्मा शूकरो जायते नरः ।
यज्ञदानविवाहानां विघ्नकर्त्ता भवेत् कृमिः ॥ १२ ॥
पुनर्द्दाता च कन्यायाः कृमिरेवोपजायते ।
देवतापितृविप्राणामदत्वा योऽन्नमश्नुते ॥ १३ ॥
प्रमुक्तो नरकात् सोऽपि वायसः सम्प्रजायते ।
ज्येष्ठं पितृसमं वापि भ्रातरं योऽवमन्यते ॥ १४ ॥
नरकात् सोऽपि विभ्रष्टः क्रौञ्चयोनौ प्रजायते ।
शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ॥ १५ ॥
तस्यामपत्यमुत्पाद्य काष्ठान्तःकीटको भवेत् ।

शूकरः कृमिको मद्गुश्चण्डालश्च प्रजायते ॥ १६ ॥
अकृतघ्नोऽधमः पुंसां विमुक्तो नरकात्ररः ।
कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा ॥ १७ ॥
मत्स्यस्तु वायसः कूर्म्मः पुक्कशो जायते ततः ।
अशस्त्रं पुरुषं हत्वा नरः संजायते खरः ॥ १८ ॥
कृमिः स्त्रीबधकर्त्ता च बालहन्ता च जायते ।
भोजनं चोरयित्वा तु मक्षिका जायते नरः ॥ १९ ॥
तत्राप्यस्ति विशेषो वै भोजनस्य शृणुष्व तत् ।
हृत्वान्नन्तु स मार्जारो जायते नरकाच्च्युतः ॥ २० ॥
तिलपिण्याकसंमिश्रमन्नं हृत्वा तु मूषिकः ।
घृतं हृत्वा च नकुलः काको मद्गुरजामिषं ॥ २१ ॥
मत्स्यमांसापहृत् काकः श्येनो मार्गामिषापहृत् ।
वीचीकाकस्त्वपहृते लवणे दधनि कृमिः ॥ २२ ॥
चोरयित्वा पयश्चापि बलाका सम्प्रजायते ।
यस्तु चोरयते तैलं तैलपायी स जायते ॥ २३ ॥
मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलिकः ।
चोरयित्वा तु निष्पावान् जायते गृहगोलकः ॥ २४ ॥
आसवञ्चोरयित्वा तु तित्तिरित्वमवाप्नुयात् ।
अयो हृत्वा तु पापात्मा वायसः सम्प्रजायते ॥ २५ ॥
हृते कांस्ये च हारीतः कपोतो रूप्यभाजने ।
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ॥ २६ ॥
पत्रोर्णं चोरयित्वा तु क्रकरत्वञ्च गच्छति ।

कोषकारश्च कौशेये हृते वस्त्रेऽभिजायते ॥ २७ ॥
दुकूले शार्ङ्गिको पापो हृते पैत्रांशुके शुकः ।
तथैवाजाविकं हृत्वा वस्त्रं क्षौमञ्च जायते ॥ २८ ॥
कार्पासिके हृते क्रौञ्चो वाल्कवर्णा बकस्तथा ।
मयूरो वर्णकान् हृत्वा शाकपत्रञ्च जायते ॥ २९ ॥
जीवञ्जीवकतां याति रक्तवस्त्रापहृन्नरः ।
छुछुन्दरिः शुभान् गन्धान् वासो हृत्वा शशो भवेत् ॥ ३० ॥
शण्डः फलापहरणात् काष्ठस्य घुणकीटकः ।
पुष्पापहृद्दरिद्रस्य पङ्गुर्यानापहृन्नरः ॥ ३१ ॥
शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः ।
भूहर्त्ता नरकान् गत्वा रौरवादीन् सुदारुणान् ॥ ३२ ॥
तृणगुल्मलतावल्लित्वक्सारतरुतां क्रमात् ।
प्राप्य क्षीणाल्पपापस्तु नरो भवति वै ततः ॥ ३३ ॥
कृमिः कीटः पतङ्गोऽथ पक्षी तोयचरो मृगः ।
गोत्वं प्राप्य च चण्डालपुक्कशादि जुगुप्सितं ॥ ३४ ॥
पङ्ग्वन्धो बधिरः कुष्ठी यक्ष्मणा च प्रपीडितः ।
मुखरोगाक्षिरोगैश्च गुदरोगैश्च बाध्यते ॥ ३५ ॥
अपस्मारी च भवति शूद्रत्वं च स गच्छति ।
एष एव क्रमो दृष्टो गोसुवर्णापहारिणां ॥ ३६ ॥
विद्यापहारिणश्चोग्रा निष्क्रयभ्रंसिनो गुरोः ।
आयामन्यस्य पुरुषः पारक्यां प्रतिपादयन् ॥ ३७ ॥
प्राप्नोति षण्ढतां मूढो यातनाभ्यः परिच्युतः ।

यः करोति नरो होममसमिद्धे विभावसौ ॥ ३८ ॥
सोऽजीर्णव्याधिदुःखार्त्तो मन्दाग्निः संप्रजायते ।
परनिन्दा कृतघ्नत्वं परमर्म्मावघट्टनं ॥ ३९ ॥
नैष्ठुर्य्यं निर्घृणत्वञ्च परदारोपसेवनं ।
परस्वहरणाशौचं देवतानाञ्च कुत्सनं ॥ ४० ॥
निकृत्या वञ्चनं नृणां कार्पण्यञ्च नृणां बधः ।
यानि च प्रतिषिद्धानि तत्प्रवृत्तिश्च सन्तता ॥ ४१ ॥
उपलक्ष्याणि जानीयान्मुक्तानां नरकादनु ।
दया भूतेषु संवादः परलोकप्रतिक्रिया ॥ ४२ ॥
सत्यं भूतहितार्थोक्तिर्वेदप्रामाण्यदर्शनं ।
गुरुदेवर्षिसिद्धर्षिपूजनं साधुसङ्गमः ॥ ४३ ॥
सत्क्रियाभ्यसनं मैत्रीमिति बुध्येत पण्डितः ।
अन्यानि चैव सद्धर्म्मक्रियाभूतानि यानि च ॥ ४४ ॥
स्वर्गच्युतानां लिङ्गानि पुरुषाणामपापिनां ।
एतदुद्देशतो राजन् भवतः कथितं मया ॥ ४५ ॥
स्वकर्म्मफलभोक्तॄणां पुण्यानां पापिनान्तथा ।
तदेह्यन्यत्र गच्छामो दृष्टं सर्व्वं त्वयाधुना ॥
त्वया दृष्टो हि नरकस्तदेह्यन्यत्र गम्यतां ॥ ४६ ॥

पुत्र उवाच ॥

ततस्तमग्रतः कृत्वा स राजा गन्तुमुद्यतः ।
ततश्च सर्व्वैरुत्क्रुष्टं यातनास्थायिभिर्न्नृभिः ॥ ४७ ॥
प्रसादं कुरु भूपेति तिष्ठ तावन्मुहूर्त्तकं ।

त्वदङ्गसङ्गी पवनो मनो ह्लादयते हि नः ॥ ४८ ॥
परितापश्च गात्रेभ्यः पीडाबाधाश्च कृत्स्नशः ।
अपहन्ति नरव्याघ्र दयां कुरु महीपते ॥ ४९ ॥
एतच्छ्रुत्वा वचस्तेषां तं याम्यपुरुषं नृपः ।
पप्रच्छ कथमेतेषामाह्लादो मयि तिष्ठति ॥ ५० ॥
किं मया कर्म्म तत् पुण्यं मर्त्यलोके महत् कृतं ।
आह्लाददायिनी दृष्टिर्येनेयं तदुदीरय ॥ ५१ ॥

यमपुरुष उवाच ॥

पितृदेवातिथिप्रेष्यशिष्टेनान्नेन ते तनुः ।
पुष्टिमभ्यागता यस्मात्तद्गतञ्च मनो यतः ॥ ५२ ॥
ततस्त्वद्गात्रसंसर्गी पवनो ह्लाददायकः ।
पापकर्म्मकृतो राजन् यातना न प्रबाधते ॥ ५३ ॥
अश्वमेधादयो यज्ञास्त्वयेष्टा विधिवद्यतः ।
ततस्त्वद्दर्शनाद्याम्या यन्त्रशस्त्राग्निवायसाः ॥ ५४ ॥
पीडनच्छेददाहादिमहादुःखस्य हेतवः ।
मृदुत्वमागता राजन् तेजसापहतास्तव ॥ ५५ ॥

राजोवाच ॥

न स्वर्गे ब्रह्मलोके वा तत्सुखं प्राप्यते नरैः ।
यदार्त्तजन्तुनिर्व्वाणदानोत्थमिति मे मतिः ॥ ५६ ॥
यदि मत्सन्निधावेतान् यातना न प्रबाधते ।
ततो भद्रमुखात्राहं स्थास्ये स्थाणुरिवाचलः ॥ ५७ ॥

यमपुरुष उवाच।

एहि राजन् प्रगच्छामो निजपुण्यसमर्ज्जितान्।
भुङ्क्ष्व भोगानपास्येह यातनाः पापकर्म्मणां॥ ५८॥

राजोवाच॥

तस्मान्न तावद्यास्यामि यावदेते सुदुःखिताः।
मत्सन्निधानात् सुखिनो भवन्ति नरकौकसः॥ ५९॥
धिक् तस्य जीवनं पुंसः शरणार्थिनमातुरं।
यो नार्त्तमनुगृह्णाति वैरिपक्षमपि ध्रुवं॥ ६०॥
यज्ञदानतपांसीह परत्र च न भूतये।
भवन्ति तस्य यस्यार्त्तपरित्राणे न मानसं॥ ६१॥
नरस्य यस्य कठिनं मनो बालातुरादिषु।
वृद्धेषु च न तं मन्ये मानुषं राक्षसो हि सः॥ ६२॥
एतेषां सन्निकर्षात्तु यद्वह्निपरितापजं।
तथोग्रगन्धजं वापि दुःखं नरकसम्भवं॥ ६३॥
क्षुत्पिपासाभवं दुःखं यच्च मूर्च्छाप्रदं महत्।
एतेषां त्राणदानन्तु मन्ये स्वर्गसुखात् परं॥ ६४॥
प्राप्स्यन्त्यार्त्ता यदि सुखं बहवो दुःखिते मयि।
किन्नु प्राप्तं मया न स्यात्तस्मात्त्वं व्रज मा चिरं॥ ६५॥

यमपुरुष उवाच॥

एष धर्म्मश्च शक्रश्च त्वां नेतुं समुपागतौ।
अवश्यमस्माद्गन्तव्यं तस्मात् पार्थिव गम्यतां॥ ६६॥

धर्म्म उवाच ।

नयामि त्वामहं स्वर्गं त्वया सम्यगुपासितः ।
विमानमेतदारुह्य मा विलम्बस्व गम्यताम् ॥ ६७ ॥

राजोवाच ।

नरके मानवा धर्म्म पीड्यन्तेऽत्र सहस्रशः ।
त्राहीति चार्त्ताः क्रन्दन्ति मामतो न व्रजाम्यहम् ॥ ६८ ॥

इन्द्र उवाच ।

कर्म्मणा नरकप्राप्तिरेतेषां पापकर्म्मिणाम् ।
स्वर्गस्त्वयापि गन्तव्यो नृप पुण्येन कर्म्मणा ॥ ६९ ॥

राजोवाच ।

यदि जानासि धर्म्म त्वं त्वं वा शक्र शचीपते ।
मम यावत्प्रमाणन्तु शुभं तद्वक्तुमर्हथः ॥ ७० ॥

धर्म्म उवाच ।

अब्बिन्दवो यथाम्भोधौ यथा वा दिवि तारकाः ।
यथा वा वर्षतो धारा गङ्गायां सिकता यथा ॥ ७१ ॥
असंख्येया महाराज यथा विन्द्वादयो ह्यपाम् ।
तथा तवापि पुण्यस्य संख्या नैवोपपद्यते ॥ ७२ ॥
अनुकम्पामिमामद्य नारकेष्विह कुर्व्वतः ।
तदेवं शतसाहस्रं संख्यामुपगतं तव ॥ ७३ ॥
तद्गच्छ त्वं नृपश्रेष्ठ तल्लोकममरालयम् ।
एतेऽपि पापन्नरके क्षपयन्तु स्वकर्म्मजम् ॥ ७४ ॥

राज्ञोवाच ।

कथं स्पृहां करिष्यन्ति मत्सम्पर्केषु मानवाः ।
यदि मत्सन्निधावेषामुत्कर्षो नोपजायते ॥ ७५ ॥
तस्मात् यत् सुकृतं किञ्चिन्ममास्ति त्रिदशाधिप ।
तेन मुच्यन्तु नरकात् पापिनो यातनां गताः ॥ ७६ ।

इन्द्र उवाच ॥

एवमूर्द्धतरं स्थानं त्वयावाप्तं महीपते ।
एतांश्च नरकात् पश्य विमुक्तान् पापकारिणः ॥ ७७

पुत्र उवाच ॥

ततोऽपतत् पुष्पवृष्टिस्तस्योपरि महीपतेः ।
विमानञ्चाधिरोप्यैनं स्वर्लोकमनयद्धरिः ॥ ७८ ॥
अहञ्चान्ये च ये तत्र यातनाभ्यः परिच्युताः ।
स्वकर्म्मफलनिर्दिष्टं ततो जात्यन्तरं गताः ॥ ७९ ॥
एवमेते समाख्याता नरका द्विजसत्तम ।
येन येन च पापेन यां यां योनिमुपैति वै ॥ ८० ॥
तत्तत् सर्व्वं समाख्यातं यथा दृष्टं मया पुरा ।
पुरानुभवजं ज्ञानमवाप्यावितथं तव ॥
अतःपरं महाभाग किमन्यत् कथयामि ते ॥ ८१ ॥

इति श्री मार्कण्डेयपुराणे पितापुत्रसंवादे ॥ १५ ॥

षष्ठोऽध्यायः ॥

पितोवाच ॥

कथितं मे त्वया वत्स संसारस्य व्यवस्थितं ।
स्वरूपमतिहेयस्य घटीयन्त्रवदव्ययं ॥ १ ॥
तदेवमेतदखिलं मयावगतमीदृशं ।
किम्मया वद कर्त्तव्यमेवमस्मिन् व्यवस्थिते ॥ २ ॥

पुत्र उवाच ॥

यदि मद्वचनं तात श्रद्धास्यविशङ्कितः ।
तत्परित्यज्य गार्हस्थ्यं वानप्रस्थपरो भव ॥ ३ ॥
तमनुष्ठाय विधिवद् विहायाग्निपरिग्रहं ।
आत्मन्यात्मानमाधाय निर्द्वन्द्वो निष्परिग्रहः ॥ ४ ॥
एकान्तराशी वश्यात्मा भव भिक्षुरतन्द्रितः ।
तत्र योगपरो भूत्वा बाह्यस्पर्शविवर्जितः ॥ ५ ॥
ततः प्राप्स्यसि तं योगं दुःखसंयोगभेषजं ।
मुक्तिहेतुमनौपम्यमनाख्येयमसङ्गिनं ॥
यत्संयोगान्न ते योगो भूयो भूतैर्भविष्यति ॥ ६ ॥

पितोवाच ॥

वत्स योगं ममाचक्ष्व मुक्तिहेतुमतःपरं ।
येन भूतैः पुनर्भूतो नेदृग्दुःखमवाप्नुयां ॥ ७ ॥
यत्रासक्तिपरस्यात्मा मम संसारबन्धनैः ।
नैति योगमयोगोऽपि तं योगमधुना वद ॥ ८ ॥

संसारादित्यतापार्त्तिविक्षुब्धहृदयमानसं।
ब्रह्मज्ञानाम्बुशीतेन सिञ्च मां वाक्यवारिणा॥ ९॥
अविद्याकृष्णसर्पेण दष्टं तद्विषपीडितं।
स्ववाक्यामृतपानेन मां जीवय पुनर्मृतं॥ १०॥
पुत्रदारगृहक्षेत्रममत्वनिगडार्दितं।
मां मोचयेष्टसद्भावविज्ञानोद्घाटनैस्त्वरन्॥ ११

पुत्र उवाच॥

शृणु तात यथा योगो दत्तात्रेयेण धीमता।
अलर्काय पुरा प्रोक्तः सम्यक् पृष्टेन विस्तरात्॥ १२॥

पितोवाच॥

दत्तात्रेयः सुतः कस्य कथं वा योगमुक्तवान्।
कश्चालर्को महाभागो यो योगं परिपृष्टवान्॥ १३॥

पुत्र उवाच॥

कौशिको ब्राह्मणः कश्चित् प्रतिष्ठानेऽभवत्पुरे।
सोऽन्यजन्मकृतैः पापैः कुष्ठरोगातुरोऽभवत्॥ १४॥
तं तथा व्याधितं भार्य्या पतिं देवमिवार्च्चयत्।
पादाभ्यङ्गाङ्गसंवाहस्नानाच्छादनभोजनैः॥ १५॥
श्लेष्ममूत्रपुरीषासृक्प्रवाहक्षालनेन च।
रहश्चैवोपचारेण प्रियसम्भाषणेन च॥ १६॥
स तया पूज्यमानोऽपि सदातीव विनीतया।
अतीवतीव्रकोपत्वान्निर्भर्त्सयति निष्ठुरः॥ १७

तथापि प्रणता भार्य्या तममन्यत दैवतं ।
तं तथाप्यतिबीभत्सं सर्व्वश्रेष्ठममन्यत ॥ १८ ॥
अचंक्रमणशीलोऽपि स कदाचिद्द्विजोत्तमः ।
प्राह भार्य्यां नयस्वेति त्वं मां तस्या निवेशनं ॥ १९ ॥
या सा वेश्या मया दृष्टा राजमार्गे गृहोषिता ।
तां मां प्रापय धर्म्मज्ञे सैव मे हृदि वर्त्तते ॥ २० ॥
दृष्टा सूर्य्योदये बाला रात्रिश्चेयमुपागता ।
दर्शनानन्तरं सा मे हृदयान्नापसर्पति ॥ २१ ॥
यदि सा चारुसर्व्वाङ्गी पीनश्रोणिपयोधरा ।
नोपगूहति तन्वङ्गी तन्मां द्रक्ष्यसि वै मृतं ॥ २२ ॥
वामः कामो मनुष्याणां बहुभिः प्रार्थ्यते च सा ।
ममाशक्तिश्च गमने संकुलं प्रतिभाति मे ॥ २३ ॥
ततस्तदा वचनं श्रुत्वा भर्त्तुः कामातुरस्य सा ।
तत्पत्नी सत्कुलोत्पन्ना महाभागा पतिव्रता ॥ २४ ॥
गाढं परिकरं बद्ध्वा शुल्कमादाय चाधिकं ।
स्कन्धे भर्त्तारमादाय जगाम मृदुगामिनी ॥ २५ ॥
निशि मेघास्तृते व्योम्नि चलद्विद्युत्प्रदर्शिते ।
राजमार्गे प्रियं भर्त्तुश्चिकीर्षन्ती द्विजाङ्गना ॥ २६ ॥
पथि शूले तथा प्रोतमचौरं चौरशङ्कया ।
माण्डव्यमतिदुःखार्त्तमन्धकारेऽथ स द्विजः ॥ २७ ॥
पत्नीस्कन्धे समारूढश्चालयामास कौशिकः ।
पादावमर्षणात् क्रुद्धो माण्डव्यस्तमुवाच ह ॥ २८ ॥

येनाहमेवमत्यर्थं दुःखितश्चालितः पदा ।
दशां कष्टामनुप्राप्तः स पापात्मा नराधमः ॥ २९ ॥
सूर्य्योदयेऽवशः प्राणैर्विमोक्ष्यति न संशयः ।
भास्करालोकनादेव स विनाशमवाप्स्यति ॥ ३० ॥
तस्य भार्य्या ततः श्रुत्वा तं शापमतिदारुणं ।
प्रोवाच व्यथिता सूर्य्यो नैवोदयमुपैष्यति ॥ ३१ ॥
ततः सूर्य्योदयाभावादभवत् सन्तता निशा ।
बहून्यहःप्रमाणानि ततो देवा भयं ययुः ॥ ३२ ॥
निःस्वाध्यायवषट्कारस्वधास्वाहाविवर्जितं ।
कथं नु खल्विदं सर्व्वं न गच्छेत् संक्षयं जगत् ॥ ३३ ॥
अहोरात्रव्यवस्थाया विना मासर्त्तुसंक्षयः ।
तत्संक्षयात्त्वयने ज्ञायेते दक्षिणोत्तरे ॥ ३४ ॥
विना चायनविज्ञानात् कालः संवत्सरः कुतः ।
संवत्सरं विना नान्यत् कालज्ञानं प्रवर्त्तते ॥ ३५ ॥
पतिव्रताया वचसा नोद्गच्छति दिवाकरः ।
सूर्य्योदयं विना नैव स्नानदानादिकाः क्रियाः ॥ ३६ ॥
नाग्नेर्विहरणञ्चैव क्रतुभावश्च लक्ष्यते ।
नैवाप्यायनमस्माकं विना होमेन जायते ॥ ३७ ॥
वयमाप्यायिता मर्त्यैर्यज्ञभागैर्यथोचितैः ।
वृष्ट्याताननुगृह्णीमो मर्त्यान् सस्यादिसिद्धये ॥ ३८ ॥
निष्पादितास्वोषधीषु मर्त्या यज्ञैर्यजन्ति नः ।
तेषां वयं प्रयच्छामः कामान् यज्ञादिपूजिताः ॥ ३९ ॥

अधो हि वर्षाम वयं मर्त्त्याश्चोर्द्ध्वप्रवर्षिणः ।
तोयवर्षेण हि वयं हविर्वर्षेण मानवाः ॥ ४० ॥
ये नास्माकं प्रयच्छन्ति नित्यनैमित्तिकीः क्रियाः ।
क्रतुभागं दुरात्मानः स्वयं चाश्नन्ति लोलुपाः ॥ ४१ ॥
विनाशाय वयं तेषां तोयसूर्य्याग्निमारुतान् ।
क्षितिञ्च सन्दूषयामः पापानामपकारिणां ॥ ४२ ॥
दुष्टतोयादिभोगेन तेषां दुष्कृतकर्म्मिणां ।
उपसर्गाः प्रवर्त्तन्ते मरणाय सुदारुणाः ॥ ४३ ॥
ये त्वस्मान् प्रीणयित्वा तु भुञ्जते शेषमात्मना ।
तेषां पुण्यान् वयं लोकान् विदधाम महात्मनां ॥ ४४ ॥
तन्नास्ति सर्व्वमेवैतद् विनैषां व्युष्टिसंस्थितिं ।
कथन्नु दिनसर्गः स्यादन्योन्यमवदन् सुराः ॥ ४५ ॥
तेषामेव समेतानां यज्ञव्युच्छित्तिशङ्किनां ।
देवानां वचनं श्रुत्वा प्राह देवः प्रजापतिः ॥ ४६ ॥
तेजः परं तेजसैव तपसा च तपस्तथा ।
प्रशाम्यतेऽमरास्तस्माच्छृणुध्वं वचनं मम ॥ ४७ ॥
पतिव्रताया माहात्म्यान्नोद्गच्छति दिवाकरः ।
तस्य चानुदयाद्धानिर्मर्त्त्यानां भवतां तथा ॥ ४८ ॥
तस्मात् पतिव्रतामत्रेरनसूयां तपस्विनीं ।
प्रसादयत वै पत्नीं भानोरुदयकाम्यया ॥ ४९ ॥

पुत्र उवाच ।

तैः सा प्रसादिता गत्वा प्राहेष्टं व्रियतामिति ।

अयाचन्त दिनं देवा भवत्विति यथा पुरा ॥ ५० ॥

अनसूयोवाच ॥

पतिव्रताया माहात्म्यं न हीयेत कथन्त्विति ।
सम्मान्य तस्मात्तां साध्वीमहः स्रक्ष्याम्यहं सुराः ॥ ५१ ॥
यथा पुनरहोरात्रसंस्थानमुपजायते ।
यथा च तस्याः स्वपतिर्न साध्व्या नाशमेष्यति ॥ ५२ ॥

पुत्र उवाच ॥

एवमुक्त्वा सुरांस्तस्या गत्वा सा मन्दिरं शुभा ।
उवाच कुशलं पृष्टा धर्म्मं भर्त्तुस्तथात्मनः ॥ ५३ ॥

अनसूयोवाच ॥

कच्चिन्नन्दसि कल्याणि स्वभर्त्तुर्मुखदर्शनात् ।
कच्चिच्चाखिलदेवेभ्यो मन्यसेऽभ्यधिकं पतिं ॥ ५४ ॥
भर्तृशुश्रूषणादेव मया प्राप्तं महत् फलं ।
सर्व्वकामफलावाप्त्या प्रत्यूहाः परिवर्त्तिताः ॥ ५५ ॥
पञ्चर्णानि मनुष्येण साध्वि देयानि सर्व्वदा ।
तथात्मवर्णधर्म्मेण कर्त्तव्यो धनसञ्चयः ॥ ५६ ॥
प्राप्तश्चार्थस्ततः पात्रे विनियोज्यो विधानतः ।
सत्यार्जवतपोदानैर्दयायुक्तो भवेत् सदा ॥ ५७ ॥
क्रियाश्च शास्त्रनिर्द्दिष्टा रागद्वेषविवर्जिताः ।
कर्त्तव्या अन्वहं श्रद्धापुरस्कारेण शक्तितः ॥ ५८ ॥
स्वजातिविहितानेव लोकानाप्नोति मानवः ।
क्लेशेन महता साध्वि प्राजापत्यादिकान् क्रमात् ॥ ५९ ॥

स्त्रियस्त्वेवं समस्तस्य नरैर्दुःखार्जितस्य वै ।
पुण्यस्यार्द्धापहारिण्यः पतिशुश्रूषयैव हि ॥ ६० ॥
नास्ति स्त्रीणां पृथग्यज्ञो न श्राद्धं नाप्युपोषितं ।
भर्तृशुश्रूषयैवैतान् लोकानिष्टान् व्रजन्ति हि ॥ ६१ ॥
तस्मात् साध्वि महाभागे पतिशुश्रूषणं प्रति ।
त्वया मतिः सदा कार्य्या यतो भर्त्ता परा गतिः ॥ ६२ ॥

यद्देवेभ्यो यच्च पित्रागतेभ्यः
कुर्य्याद्भर्त्ताभ्यर्च्चनं सत्क्रियातः ।
तस्याप्यर्द्धं केवलानन्यचित्ता
नारी भुङ्क्ते भर्तृशुश्रूषयैव ॥ ६३ ॥

पुत्र उवाच ॥

तस्यास्तद्वचनं श्रुत्वा प्रतिपूज्य तथादरात् ।
प्रत्युवाचात्रिपत्नीं तामनसूयामिदं वचः ॥ ६४ ॥
धन्यास्म्यनुगृहीतास्मि देवैश्चाप्यवलोकिता ।
यन्मे प्रकृतिकल्याणि श्रद्धां वर्द्धयसे पुनः ॥ ६५ ॥
जानाम्येतच्च नारीणां काचित् पतिसमागतिः ।
तत्प्रीतिश्चोपकाराय इह लोके परत्र च ॥ ६६ ॥
पतिप्रसादादिह च प्रेत्य चैव यशस्विनि ।
नारी सुखमवाप्नोति नार्य्या भर्त्ता हि देवता ॥ ६७ ॥
सा त्वं ब्रूहि महाभागे प्राप्ताया मम मन्दिरं ।
आर्य्याया यन्मया कार्य्यमथार्य्येणापि वा शुभे ॥ ६८ ॥

अनसूयोवाच ।

एते देवाः सहेन्द्रेण मामुपागम्य दुःखिताः ।
त्वद्वाक्यापास्तसत्कर्मदिननक्तनिरूपणाः ॥ ६९ ॥
याचन्तेऽहर्निशासंस्थां यथावदविखण्डितां ।
अहं तदर्थमायाता शृणु चैतद्वचो मम ॥ ७० ॥
दिनाभावात् समस्तानामभावो यागकर्मणां ।
तदभावात् सुराः पुष्टिं नोपयान्ति तपस्विनि ॥ ७१ ॥
अह्नश्चैव समुच्छेदादुच्छेदः सर्वकर्मणां ।
तदुच्छेदादनावृष्ट्या जगदुच्छेदमेष्यति ॥ ७२ ॥
तत्त्वमिच्छसि चेदेतत् जगदुद्धर्तुमापदः ।
प्रसीद साध्वि लोकानां पूर्ववद्वर्त्ततां रविः ॥ ७३ ॥

ब्राह्मण्युवाच ॥

माण्डव्येन महाभागे शप्तो भर्त्ता ममेश्वरः ।
सूर्योदये विनाशं त्वं प्राप्स्यसीत्यतिमन्युना ॥ ७४ ॥

अनसूयोवाच ॥

यदि वा रोचते भद्रे ततस्त्वद्वचनादहं ।
करोमि पूर्ववद्देहं भर्त्तारञ्च नवं तव ॥ ७५ ॥
मया हि सर्वथा स्त्रीणां माहात्म्यं वरवर्णिनि ।
पतिव्रतानामाराध्यमिति सम्मानयामि ते ॥ ७६ ॥

पुत्र उवाच ॥

तथेत्युक्ते तया सूर्य्यमाजुहाव तपस्विनी ।
अनसूयार्घ्यमुद्यम्य दशरात्रे तदा निशि ॥ ७७ ॥

ततो विवस्वान् भगवान् फुल्लपद्मारुणाकृतिः ।
शैलराजानमुदयमारुरोहोरुमण्डलः ॥ ७८ ॥
समनन्तरमेवास्या भर्त्ता प्राणैर्व्ययुज्यत ।
पपात च महीपृष्ठे पतन्तं जगृहे च सा ॥ ७९ ॥

अनसूयोवाच ॥

न विषादस्त्वया भद्रे कर्त्तव्यः पश्य मे बलं ।
पतिशुश्रूषयावाप्तं तपसः किञ्चिरेण ते ॥ ८० ॥
यथा भर्तृसमं नान्यमपश्यं पुरुषं क्वचित् ।
रूपतः शीलतो बुद्ध्या वाङ्माधुर्य्यादिभूषणैः ॥ ८१ ॥
तेन सत्येन विप्रोऽयं व्याधिमुक्तः पुनर्युवा ।
प्राप्नोतु जीवितं भार्य्यासहायः शरदां शतं ॥ ८२ ॥
यथा भर्तृसमं नान्यमहं पश्यामि दैवतं ।
तेन सत्येन विप्रोऽयं पुनर्जीवत्वनामयः ॥ ८३ ॥
कर्म्मणा मनसा वाचा भर्त्तुराराधनं प्रति ।
यथा ममोद्यमो नित्यं तथायं जीवतां द्विजः ॥ ८४ ॥

पुत्र उवाच ॥

ततो विप्रः समुत्तस्थौ व्याधिमुक्तः पुनर्युवा ।
स्वभाभिर्भासयन् वेश्म वृन्दारक इवाजरः ॥ ८५ ॥
ततोऽपतत् पुष्पवृष्टिर्देववाद्यादिनिस्वनः ।
लेभिरे च मुदं देवा अनसूयामथाब्रुवन् ॥ ८६ ॥

देवा ऊचुः ।

वरं वृणीष्व कल्याणि देवकार्य्यं महत् कृतं ।

त्वया यस्मात्ततो देवा वरदास्ते तपस्विनि ॥ ८७ ॥

अनसूयोवाच ।

यदि देवाः प्रसन्ना मे पितामहपुरोगमाः ।
वरदा वरयोग्या च यद्यहं भवतां मता ॥ ८८ ॥
तद्यान्तु मम पुत्रत्वं ब्रह्मविष्णुमहेश्वराः ।
योगञ्च प्राप्नुयां भर्तृसहिता क्लेशमुक्तये ॥ ८९ ॥
एवमस्त्विति तां देवा ब्रह्मविष्णुशिवादयः ।
प्रोक्ता जग्मुर्यथान्यायमनुमान्य तपस्विनीं ॥ ९० ॥

इति मार्कण्डेयपुराणे पितापुत्रसंवादे अनसूयावरप्राप्तिः ॥ १६ ॥

सप्तदशोऽध्यायः ॥



पुत्र उवाच ॥

ततः काले बहुतिथे द्वितीयो ब्रह्मणः सुतः ।
स्वभार्य्यां भगवानत्रिरनसूयामपश्यत ॥ १ ॥
ऋतुस्नातां सुचार्व्वङ्गीं लोभनीयोत्तमाकृतिं ।
सकामो मनसा भेजे स मुनिस्तामनिन्दितां ॥ २ ॥
तस्याभिध्यायतस्तान्तु विकारो योऽभ्यजायत ।
तमेवोवाह पवनस्तिरश्चोर्द्ध्वञ्च वेगवान् ॥ ३ ॥
ब्रह्मरूपञ्च शुक्लाभं पतमानं समन्ततः ।
सोमरूपं रजोपेतं दिशस्तं जगृहुर्दश ॥ ४ ॥

स सोमो मानसो जज्ञे तस्यामत्रेः प्रजापतेः ।
पुत्रः समस्तसत्वानामायुराधार एवच ॥ ५ ॥
तुष्टेन विष्णुना जज्ञे दत्तात्रेयो महात्मना ।
स्वशरीरात् समुत्पाद्य सत्वोद्रिक्तो द्विजोत्तमः ॥ ६ ॥
दत्तात्रेय इति ख्यातः सोऽनुसूयास्तनं पपौ ।
विष्णुरेवावतीर्णोऽसौ द्वितीयोऽत्रेः सुतोऽभवत् ॥ ७ ॥
सप्ताहात् प्रच्युतो मातुरुदरात् कुपितो यतः ।
हैहयेन्द्रमुपावृत्तमपराध्यन्तमुद्धतं ॥ ८ ॥
दृष्ट्वात्रौ कुपितः सद्यो दग्धुकामः स हैहयं ।
गर्भवासमहायासदुःखामर्षसमन्वितः ॥ ९ ॥
दुर्व्वासास्तमसोद्रिक्तो रुद्रांशः समजायत ।
इति पुत्रत्रयं तस्या जज्ञे ब्रह्मेशवैष्णवं ॥ १० ॥
सोमो ब्रह्माभवद्विष्णुर्दत्तात्रेयो व्यजायत ।
दुर्व्वासाः शङ्करो जज्ञे वरदानाद्दिवौकसां ॥ ११ ॥
सोमः स्वरश्मिभिः शीतैर्वीरुधौषधिमानवान् ।
आप्याययन् सदा स्वर्गे वर्त्तते स प्रजापतिः ॥ १२ ॥
दत्तात्रेयः प्रजां पाति दुष्टदैत्यनिबर्हणात् ।
शिष्टानुग्रहकृच्चेति ज्ञेयस्त्वंशः स वैष्णवः ॥ १३ ॥
निर्दहत्यवमन्तारं दुर्व्वासा भगवानजः ।
रौद्रं समाश्रित्य वपुर्दृङ्मनोवाग्भिरुद्धतः ॥ १४ ॥
सोमत्वं भगवानत्रिः पुनश्चक्रे प्रजापतिः ।
दत्तात्रेयोऽपि विषयान् योगस्थो बुभुजे हरिः ॥ १५ ॥

दुर्व्वासाः पितरं हित्वा मातरं चोत्तमं व्रतं ।
उन्मत्ताख्यं समाश्रित्य परिबभ्राम मेदिनीं ॥ १६ ॥
मुनिपुत्त्रस्ततो योगी दत्तात्रेयोऽप्यसङ्गितां ।
अभीप्सुमानः सरसि निममज्ज चिरं प्रभुः ॥ १७ ॥
तथापि तं महात्मानमतीव प्रियदर्शनं ।
तत्यजुर्न्न कुमारास्ते सरसस्तीरमाश्रिताः ॥ १८ ॥
दिव्ये वर्षशते पूर्णे यदा ते न त्यजन्ति तं ।
तत्प्रीत्या सरसस्तीरं सर्व्वे मुनिकुमारकाः ॥ १९ ॥
ततो दिव्याम्बरधरां चारुपीननितम्बिनीं ।
नारीमादाय कल्याणीमुत्ततार जलान्मुनिः ॥ २० ॥
स्त्रीसन्निकर्षाद्यदेते परित्यक्ष्यन्ति मामिति ।
मुनिपुत्त्रास्ततोऽसङ्गी स्थास्यामीति विचिन्तयन् ॥ २१ ॥
तथापि तं मुनिसुता न त्यजन्ति यदा मुनिं ।
ततः सह तया नार्य्या मद्यपानमथापिवत् ॥ २२ ॥
सुरापानरतं ते न सभार्य्यं तत्यजुस्ततः ।
गीतवाद्यादिवनिताभोगसंसर्गदूषितं ॥ २३ ॥
मन्यमाना महात्मानं तया सह वहिष्क्रियं ।
नावाप दोषं योगीशो वारुणीं स पिवन्नपि ॥ २४ ॥
अन्त्यावसायिवेश्मान्तर्मातरिश्वा वसन्निव ।
सुरां पिवन् सपत्नीकस्तपस्तेपे स योगवित् ॥
योगीश्वरश्चिन्त्यमानो योगिभिर्मुक्तिकाङ्क्षिभिः ॥ २५ ॥

इति श्रीमार्कण्डेयपुराणे दत्तात्रेयोत्पत्तिः ॥ १७ ॥

अष्टादशोऽध्यायः ॥

पुत्र उवाच ॥

कस्यचित्त्वथ कालस्य कृतवीर्य्यात्मजोऽर्जुनः ।
कृतवीर्य्ये दिवं याते मन्त्रिभिः सपुरोहितैः ॥ १ ॥
पौरैश्चात्माभिषेकार्थं समाहूतोऽब्रवीदिदं ।
नाहं राज्यं करिष्यामि मन्त्रिणो नरकोत्तरं ॥ २ ॥
यदर्थं गृह्यते शुल्कं तदनिष्पादयन् वृथा ।
पण्यानां द्वादशं भागं भूपालाय वणिग्जनः ॥ ३ ॥
दत्वार्थरक्षिभिर्म्मार्गे रक्षितो याति दस्युतः ।
गोपाश्च घृततक्रादेः षड्भागञ्च कृषीबलाः ॥ ४ ॥
दत्वान्यद्भुजे दद्युर्यदि भागं ततोऽधिकं ।
पण्यादीनामशेषाणां वणिजो गृह्णतस्ततः ॥ ५ ॥
इष्टापूर्त्तविनाशाय तद्राज्ञश्चौरधर्म्मिणः ।
यद्यन्यैः पाल्यते लोकस्तद्वृत्त्यन्तरसंश्रितः ॥ ६ ॥
गृह्णतो बलिषड्भागं नृपतेर्नरको ध्रुवं ।
निरूपितमिदं राज्ञः पूर्व्वैरक्षणवेतनं ॥ ७ ॥
अरक्षंश्चौरतश्चौर्य्यन्तदेनो नृपतेर्भवत् ।
तस्माद्यदि तपस्तप्त्वा प्राप्तो योगित्वमीप्सितं ॥ ८ ॥
भुवः पालनसामर्थ्ययुक्त एको महीपतिः ।
पृथिव्यां शस्त्रधृङ्मान्यस्त्वहमेवर्द्धिसंयुतः ॥
ततो भविष्ये नात्मानं करिष्ये पापभागिनं ॥ ९ ॥

पुत्र उवाच ॥

तस्य तन्निश्चयं ज्ञात्वा मन्त्रिमध्ये स्थितोऽब्रवीत् ।
गर्गो नाम महाबुद्धिर्मुनिश्रेष्ठो वयोऽतिगः ॥ १० ॥
यद्येवं कर्त्तुकामस्त्वं राज्यं सम्यक् प्रशासितुं ।
ततः शृणुष्व मे वाक्यं कुरुष्व च नृपात्मज ॥ ११ ॥
दत्तात्रेयं महाभागं सह्यद्रोणीकृताश्रयं ।
तमाराधय भूपाल पाति यो भुवनत्रयं ॥ १२ ॥
योगयुक्तं महाभागं सर्व्वत्र समदर्शिनं ।
विष्णोरंशं जगद्धातुरवतीर्णं महीतले ॥ १३ ॥
यमाराध्य सहस्राक्षः प्राप्तवान् पदमात्मनः ।
हृतं दुरात्मभिर्दैत्यैर्जघान च दितेः सुतान् ॥ १४ ॥

अर्जुन उवाच ॥

कथमाराधितो देवैर्दत्तात्रेयः प्रतापवान् ।
कथञ्चापहृतं दैत्यैरिन्द्रत्वं प्राप वासवः ॥ १५ ॥

गर्ग उवाच ॥

देवानां दानवानाञ्च युद्धमासीत् सुदारुणं ।
दैत्यानामीश्वरो जम्भो देवानाञ्च शचीपतिः ॥ १६ ॥
तेषाञ्च युद्ध्यमानानान्दिव्यः संवत्सरो गतः ।
ततो देवाः पराभूता दैत्या विजयिनोऽभवन् ॥ १७ ॥
विप्रचित्तिमुखैर्देवा दानवैस्ते पराजिताः ।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ १८ ॥

बृहस्पतिमुपागम्य दैत्यसैन्यबधेप्सवः ।
अमन्त्रयन्त सहिता बालिखिल्यैस्तथर्षिभिः ॥ १९ ॥

बृहस्पतिरुवाच ॥

दत्तात्रेयं महात्मानमत्रेः पुत्रं तपोधनं ।
विकृताचरणं भक्त्या सन्तोषयितुमर्हथ ॥ २० ॥
स वो दैत्यविनाशाय वरदो दास्यते वरं ।
ततो हनिष्यथ सुरा सहिता दैत्यदानवान् ॥ २१ ॥

गर्ग उवाच ॥

इत्युक्तास्ते तदा जग्मुर्दत्तात्रेयाश्रमं सुराः ।
ददृशुश्च महात्मानं तं ते लक्ष्म्या समन्वितं ॥ २२ ॥
उद्गीयमानं गन्धर्व्वैः सुरापानरतं मुनिं ।
ते तस्य गत्वा प्रणतिमवदन् साध्यसाधनं ॥ २३ ॥
चक्रुः स्तवं चोपजह्रुर्भक्ष्यभोज्यस्रगादिकं ।
तिष्ठन्तमनुतिष्ठन्ति यान्तं यान्ति दिवौकसः ॥ २४ ॥
आराधयामासुरधः स्थितास्तिष्ठन्तमासने ।
स प्राह प्रणतान्देवान्दत्तात्रेयः किमिष्यते ॥
मत्तो भवद्भिर्येनेयं शुश्रूषा क्रियते मम ॥ २५ ॥

देवा ऊचुः ॥

दानवैर्मुनिशार्दूल जम्भाद्यैर्भूर्भुवादिकं ।
हृतं त्रैलोक्यमाक्रम्य क्रतुभागाश्च कृत्स्नशः ॥ २६ ॥
तद्वधे कुरु बुद्धिं त्वं परित्राणाय नोऽनघ ।
त्वत्प्रसादादभीप्सामः पुनः प्राप्तं त्रिपिष्टपं ॥ २७ ॥

दत्तात्रेय उवाच ॥

मद्यासक्तोऽहमुच्छिष्टो नचैवाहं जितेन्द्रियः ।
कथमिच्छथ मत्तोऽपि देवाः शत्रुपराभवं ॥ २८ ॥

देवा ऊचुः ॥

अनघस्त्वं जगन्नाथ न लेपस्तव विद्यते ।
विद्याक्षालनशुद्धान्तर्न्निविष्टज्ञानदीधिते ॥ २९ ॥

दत्तात्रेय उवाच ॥

सत्यमेतत् सुरा विद्या ममास्ति समदर्शिनः ।
अस्यास्तु योषितः सङ्गादहमुच्छिष्टतां गतः ॥ ३० ॥
स्त्रीसम्भोगो हि दोषाय सातत्येनोपसेवितः ।
एवमुक्तास्ततो देवाः पुनर्व्वचनमब्रुवन् ॥ ३१ ॥

देवा ऊचुः ॥

अनघेयं द्विजश्रेष्ठ जगन्माता न दुष्यते ।
यथांशुमाला सूर्य्यस्य द्विजचण्डालसङ्गिनी ॥ ३२ ॥

गर्ग उवाच ॥

एवमुक्तस्ततो देवैर्द्दत्तात्रेयोऽब्रवीदिदं ।
प्रहस्य त्रिदशान् सर्व्वान् यद्येतद्भवतां मतं ॥ ३३ ॥
तदाहूयासुरान् सर्व्वान् युद्धाय सुरसत्तमाः ।
इहानयत मद्दृष्टिगोचरं मा विलम्बत ॥ ३४ ॥
मद्दृष्टिपातहुतभुक्प्रक्षीणबलतेजसः ।
येन नाशमशेषास्ते प्रयान्ति मम दर्शनात् ॥ ३५ ॥

गर्ग उवाच ॥

तस्य तद्वचनं श्रुत्वा देवैर्दैत्या महाबलाः ।
आहवाय समाहूता जग्मुर्द्देवगणान् रुषा ॥ ३६ ॥
ते हन्यमाना दैतेयैर्द्देवाः शीघ्रं भयातुराः ।
दत्तात्रेयाश्रमं जग्मुः समेताः शरणार्थिनः ॥ ३७ ॥
तमेव विविशुर्द्दैत्याः कालयन्तो दिवौकसः ।
ददृशुश्च महात्मानं दत्तात्रेयं महाबलं ॥ ३८ ॥
वामपार्श्वस्थितामिष्टामशेषजगतां शुभां ।
भार्य्याञ्चास्य सुचार्व्वङ्गीं लक्ष्मीमिन्दुनिभाननां ॥ ३९ ॥
नीलोत्पलाभनयनां पीनश्रोणिपयोधरां ।
गदन्तीं मधुरां भाषां सर्व्वैर्योषिद्गुणैर्युतां ॥ ४० ॥
ते तां दृष्ट्वाग्रतो दैत्याः साभिलाषा मनोभवं ।
न शेकुरुद्धतं धैर्य्यान्मनसा वोढुमातुराः ॥ ४१ ॥
त्यक्त्वा देवान् स्त्रियं तान्तु हर्त्तुकामा हतौजसः ।
तेन पापेन मुह्यन्तः संसक्तास्ते ततोऽब्रुवन् ॥ ४२ ॥
स्त्रीरत्नमेतत् त्रैलोक्ये सारं नो यदि वै भवेत् ।
कृतकृत्यास्ततः सर्व्वं इति नो भावितं मनः ॥ ४३ ॥
तस्मात् सर्व्वे समुत्क्षिप्य शिबिकायां सुरार्द्दनाः ।
आरोप्य स्वमधिष्ठानं नयाम इति निश्चिताः ॥ ४४ ॥

गर्ग उवाच ॥

सानुरागास्ततस्ते तु प्रोक्त्वाश्चेत्थं परस्परं ।
तस्य तां योषितं साध्वीं समुत्क्षिप्य सुरार्द्दिताः ॥ ४५ ॥

शिविकायां समारोप्य सहिता दैत्यदानवाः ।
शिरःसु शिविकां कृत्वा स्वस्थानाभिमुखं ययुः ॥ ४६ ॥
दत्तात्रेयस्ततो देवान् विहस्येदमथाब्रवीत् ।
दिष्ट्या वर्द्धथ दैत्यानामेषा लक्ष्मीः शिरोगता ॥
सप्त स्थानान्यतिक्रान्ता नवमन्यमुपैष्यति ॥ ४७ ॥

देवा ऊचुः ॥

कथयस्व जगन्नाथ केषु स्थानेष्ववस्थिता ।
पुरुषस्य फलं किं वा प्रयच्छत्यथ नश्यति ॥ ४८ ॥

दत्तात्रेय उवाच ॥

नृणां पदे स्थिता लक्ष्मीर्निलयं संप्रयच्छति ।
सक्थ्नोश्च संस्थिता वस्त्रं तथा नानाविधं वसु ॥ ४९ ॥
कलत्रञ्च गुह्यसंस्था क्रोडस्थापत्यदायिनी ।
मनोरथान् पूरयति पुरुषाणां हृदि स्थिता ॥ ५० ॥
लक्ष्मीर्लक्ष्मीवतां श्रेष्ठा कण्ठस्था कण्ठभूषणं ।
अभीष्टबन्धुदारैश्च तथाश्लेषं प्रवासिभिः ॥ ५१ ॥
मृष्टानुवाक्यलावण्यमाज्ञामवितथां तथा ।
मुखसंस्था कवित्वञ्च यच्छत्युदधिसम्भवा ॥ ५२ ॥
शिरोगता सन्त्यजति ततोऽन्यं याति चाश्रयं ।
सेयं शिरोगता चैतान् परित्यक्ष्यति साम्प्रतं ॥ ५३ ॥
प्रगृह्यास्त्राणि वध्यन्तां तस्मादेते सुरारयः ।
न भेतव्यं भृशं चैते मया निस्तेजसः कृताः ॥
परदारावमर्षाच्च दग्धपुण्या हतौजसः ॥ ५४ ॥

गर्ग उवाच ॥

ततस्ते विविधैरस्त्रैर्बध्यमानाः सुरारयः ।
मूर्ध्नि लक्ष्म्या समाक्रान्ता विनेशुरिति नः श्रुतं ॥ ५५ ॥
लक्ष्मीश्चोत्पत्य संप्राप्ता दत्तात्रेयं महामुनिं ।
स्तूयमाना सुरैः सर्व्वैर्दैत्यनाशान्मुदान्वितैः ॥ ५६ ॥
प्रणिपत्य ततो देवा दत्तात्रेयं मनीषिणं ।
नाकपृष्ठमनुप्राप्ता यथापूर्व्वं गतज्वराः ॥ ५७ ॥
तथा त्वमपि राजेन्द्र यदीच्छसि यथेप्सितं ।
प्राप्तुमैश्वर्य्यमतुलं तूर्णमाराधयस्व तं ॥ ५८ ॥

इति श्रीमार्कण्डेयपुराणे गर्गवाक्यं ॥ १८ ॥

ऊनविंशोऽध्यायः ॥



पुत्र उवाच ॥

इत्यृषेर्व्वचनं श्रुत्वा कार्त्तवीर्य्यो नरेश्वरः ।
दत्तात्रेयाश्रमं गत्वा तं भक्त्या समपूजयत् ॥ १ ॥
पादसंवाहनाद्येन मध्वाद्याहरणेन च ।
स्रक्चन्दनादिगन्धाम्बुफलाद्यानयनेन च ॥ २ ॥
तथान्नसाधनैस्तस्य उच्छिष्टापोहनेन च ।
परितुष्टो मुनिर्भूपं तमुवाच तथैव सः ॥ ३ ॥
यथैवोक्ताः पुरा देवा मद्यभोगादिकुत्सनं ।

स्त्री चेयं मम पार्श्वस्थेत्येतद्भोगाच्च कुत्सितं ॥ ४ ॥
सदैवाहं न मामेवमुपरोद्धुं त्वमर्हसि ।
अशक्तमुपकाराय शक्तमाराधयस्व भोः ॥ ५ ॥

जड उवाच ॥

तेनैवमुक्तो मुनिना स्मृत्वा गर्गवचश्च तत् ।
प्रत्युवाच प्रणम्यैनं कार्त्तवीर्य्यार्जुनस्तदा ॥ ६ ॥

अर्जुन उवाच ॥

किं मां मोहयसे देव स्वां मायां समुपाश्रितः ।
अनघस्त्वं तथैवेयं देवी सर्व्वभवारणिः ॥ ७ ॥
इत्युक्तः प्रीतिमान् देवस्ततस्तं प्रत्युवाच ह ।
कार्त्तवीर्य्यं महाभागं वशीकृतमहीतलं ॥ ८ ॥
वरं वृणीष्व गुह्यं मे यत् त्वया समुदीरितं ।
तेन तुष्टिः परा जाता त्वय्यद्य मम पार्थिव ॥ ९ ॥
ये च मां पूजयिष्यन्ति गन्धमाल्यादिभिर्न्नराः ।
मांसमद्योपहारैश्च मिष्टान्नैश्चाज्यसंयुतैः ॥ १० ॥
लक्ष्मीसमेतं गीतैश्च ब्राह्मणानान्तथार्च्चनैः ।
वाद्यैर्मनोरमैर्व्वीणावेणुशङ्खादिभिस्तथा ॥ ११ ॥
तेषामहं परां तुष्टिं पुत्त्रदारधनादिकं ।
प्रदास्याम्यवघातञ्च हनिष्याम्यव मन्यतां ॥ १२ ॥
स त्वं वरय भद्रं ते वरं यन्मनसेप्सितं ।
प्रसादसुमुखस्तेऽहं गुह्यनामप्रकीर्त्तनात् ॥ १३ ॥

कार्त्तवीर्य्य उवाच ॥

यदि देव प्रसन्नस्त्वं तत्प्रयच्छर्द्धिमुत्तमां ।
यया प्रजाः पालयेऽहं नचाधर्म्ममवाप्नुयां ॥ १४ ॥
परानुस्मरणे ज्ञानमप्रतिद्वन्द्वतां रणे ।
सहस्रमाप्तुमिच्छामि बाहूनां लघुतागुणं ॥ १५ ॥
असङ्गा गतयः सन्तु शैलाकाशाम्बुभूमिषु ।
पातालेषु च सर्व्वेषु बधश्चाप्यधिकान्नरात् ॥ १६ ॥
तथोन्मार्गप्रवृत्तस्य चास्तु सन्मार्गदेशकः ।
सन्तु मेऽतिथयः श्लाघ्या वित्तदाने तथाक्षये ॥ १७ ॥
अनष्टद्रव्यता राष्ट्रे ममानुस्मरणेन च ।
त्वयि भक्तिर्म्ममैवास्तु नित्यमव्यभिचारिणी ॥ १८ ॥

दत्तात्रेय उवाच ॥

यच्च ते कीर्त्तिताः सर्व्वे तान् वरान् समवाप्स्यसि ।
मत्प्रसादाच्च भविता चक्रवर्त्ती त्वमीश्वरः ॥ १९ ॥

जड उवाच ॥

प्रणिपत्य ततस्तस्मै दत्तात्रेयाय सोऽर्जुनः ।
आनाय्य प्रकृतीः सम्यगभिषेकमगृह्णत ॥ २० ॥
आघोषयामास तदा स्थितो राज्ये स हैहयः ।
दत्तात्रेयात् परामृद्धिमवाप्यातिबलान्वितः ॥ २१ ॥
अद्य प्रभृति यः शस्त्रं मामृतेऽन्यो ग्रहीष्यति ।
हन्तव्यः स मया दस्युः परहिंसारतोऽपि वा ॥ २२ ॥
इत्याज्ञप्ते न तद्राष्ट्रे कश्चिदायुधधृङ्नरः ।

तस्मै ते पुरुषव्याघ्रं बभूवोरुपराक्रमं ॥ २३ ॥
सएव ग्रामपालोऽभूत् पशुपालः स एव च ।
क्षेत्रपालः स एवासीद्द्विजातीनाञ्च रक्षिता ॥ २४ ॥
तपस्विनां पालयिता सार्थपालस्तु सोऽभवत् ।
दस्युव्यालाग्निशस्त्रादिभयेष्वब्धौ निमज्जतां ॥ २५ ॥
अन्यासु चैव मग्नानामापत्सु परवीरहा ।
स एव संस्मृतः सद्यः समुद्धर्त्ताभवन्नृणां ॥ २६ ॥
अनष्टद्रव्यता चासीत्तस्मिन् शासति पार्थिवे ।
तेनेष्टं बहुभिर्यज्ञैः समाप्तवरदक्षिणैः ॥ २७ ॥
तेनैव च तपस्तप्तं संग्रामेष्वभिचेष्टितं ।
तस्यर्द्धिमतिमानञ्च दृष्ट्वा प्राहाङ्गिरा मुनिः ॥ २८ ॥
न नूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञैर्दानैस्तपोभिर्व्वा संग्रामे चातिचेष्टितैः ॥ २९ ॥
दत्तात्रेयाद्दिने यस्मिन् स प्रापर्द्धिं नरेश्वरः ।
तस्मिंस्तस्मिन् दिने यागं दत्तात्रेयस्य सोऽकरोत् ॥ ३० ॥
तत्रैव च प्रजाः सर्व्वास्तस्मिन्नहनि भूपतेः ।
तस्यर्द्धिं परमां दृष्ट्वा यागञ्चक्रुः समाधिना ॥ ३१ ॥
इत्येतत्तस्य माहात्म्यं दत्तात्रेयस्य धीमतः ।
विष्णोश्चराचरगुरोरनन्तस्य महात्मनः ॥ ३२ ॥
प्रादुर्भावाः पुराणेषु कथ्यन्ते शार्ङ्गधन्विनः ।
अनन्तस्याप्रमेयस्य शंखचक्रगदाभृतः ॥ ३३ ॥
एतस्य परमं रूपं यश्चिन्तयति मानवः ।

स सुखी स च संसारात् समुत्तीर्णोऽचिराद्भवेत् ॥ ३४ ॥
सदैव वैष्णवानाञ्च भक्त्याहं सुलभोऽस्मि भोः ।
इत्येवं यस्य वै वाचस्तं कथं नाश्रयेज्जनः ॥ ३५ ॥
अधर्म्मस्य विनाशाय धर्म्माचारार्थमेव च ।
अनादिनिधनो देवः करोति स्थितिपालनं ॥ ३६ ॥
तथैव जन्म चाख्यातमलर्कं कथयामि ते ।
तथा च योगः कथितो दत्तात्रेयेण तस्य वै ॥
पितृभक्तस्य राजर्षेरलर्कस्य महात्मनः ॥ ३७ ॥

इति श्रीमार्कण्डेयपुराणे दत्तात्रेयीयं समाप्तं ॥ १९ ॥

विंशोऽध्यायः ॥



जड उवाच ॥

प्राग्बभूव महावीर्य्यः शत्रुजिन्नाम पार्थिवः ।
तुतोष यस्य यज्ञेषु सोमावाप्त्या पुरन्दरः ॥ १ ॥
तस्यात्मजो महावीर्य्यो बभूवारिविदारणः ।
बुद्धिविक्रमलावण्यैर्गुरुशक्राश्विभिः समः ॥ २ ॥
स समानवयोबुद्धिसत्त्वविक्रमचेष्टितैः ।
नृपपुत्रो नृपसुतैर्नित्यमास्ते समावृतः ॥ ३ ॥
कदाचिच्छास्त्रसम्भारविवेककृतनिश्चयः ।
कदाचित् काव्यसंलापगीतनाटकसम्भवैः ॥ ४ ॥
तथैवाक्षविनोदैश्च शस्त्रास्त्रविनयेषु च ।

योग्यानि युद्धनागाश्वस्यन्दनाभ्यासतत्परः ॥ ५ ॥
रेमे नरेन्द्रपुत्रोऽसौ नरेन्द्रतनयैः सह ।
यथैव हि दिवा तद्वद्रात्रावपि मुदा युतः ॥ ६ ॥
तेषान्तु क्रीडतां तत्र द्विजभूपविशां सुताः ।
समानवयसः प्रीत्या रन्तुमायान्त्यनेकशः ॥ ७ ॥
कस्यचित्त्वथ कालस्य नागलोकान्महीतलं ।
कुमारावागतौ नागौ पुत्रावश्वतरस्य तु ॥ ८ ॥
ब्रह्मरूपप्रतिच्छन्नौ तरुणौ प्रियदर्शनौ ।
तौ तैर्नृपसुतैः सार्द्धं तथैवान्यैर्द्विजन्मभिः ॥ ९ ॥
विनोदैर्व्विविधैस्तत्र तस्थतुः प्रीतिसंयुतौ ।
सर्व्वे च ते नृपसुतास्ते च ब्रह्मविशां सुताः ॥ १० ॥
नागराजात्मजौ तौ च स्नानसंवाहनादिकं ।
वस्त्रगन्धानुसंयुक्तांश्चक्रुर्भोगभुजिक्रियां ॥ ११ ॥
अहन्यहन्यनुप्राप्ते तौ च नागकुमारकौ ।
आजग्मतुर्मुदा युक्तौ प्रीत्या सूनोर्महीपतेः ॥ १२ ॥
स च ताभ्यां नृपसुतः परं निर्व्वाणमाप्तवान् ।
विनोदैर्विविधैर्हास्यसंलापादिभिरेव च ॥ १३ ॥
विना ताभ्यां न बुभुजे न सस्नौ न पपौ मधु ।
न रराम न जग्राह शास्त्राण्यात्मगुणर्द्धये ॥ १४ ॥
रसातले च तौ रात्रिं विना तेन महात्मना ।
निश्वासपरमौ नीत्वा जग्मतुस्तं दिने दिने ॥ १५ ॥
मर्त्यलोके परा प्रीतिर्भवतोः केन पुत्रकौ ।

सद्वेति पप्रच्छ पिता तावुभौ नागदारकौ ॥ १६ ॥
दृष्टयोरत्र पाताले बहूनि दिवसानि मे ।
दिवा रजन्यामेवोभौ पश्यामि प्रियदर्शनौ ॥ १७ ॥

जड उवाच ॥

इति पित्रा स्वयं पृष्टौ प्रणिपत्य कृताञ्जली ।
प्रत्यूचतुर्महाभागावुरगाधिपतेः सुतौ ॥ १८ ॥

पुत्रावूचतुः ॥

पुत्रः शत्रुजितस्तात नाम्ना ख्यात ऋतध्वजः ।
रूपवानार्जवोपेतः शूरो मानी प्रियम्वदः ॥ १९ ॥
अनापृष्टकथो वाग्मी विद्वान् मैत्रो गुणाकरः ।
मान्यमानयिता धीमान् ह्रीमान् विनयभूषणः ॥ २० ॥
तस्योपचारसंप्रीतिसम्भोगापहृतं मनः ।
नागलोके भुवो लोके न रतिं विन्दते पितः ॥ २१ ॥
तद्वियोगेन नस्तात न पातालञ्च शीतलं ।
परितापाय तत्सङ्गादाह्लादाय रविर्दिवा ॥ २२ ॥

पितोवाच ॥

पुत्रः पुण्यवतो धन्यः स यस्यैवं भवद्विधैः ।
परोक्षस्यापि गुणिभिः क्रियते गुणकीर्त्तनं ॥ २३ ॥
सन्ति शास्त्रविदोऽशीलाः सन्ति मूर्खाः सुशीलिनः ।
शास्त्रशीलसमं मन्ये पुत्रौ धन्यतरं तु तं ॥ २४ ॥
यस्य मित्रं गुणान् मित्राण्यमित्राश्च पराक्रमं ।
कथयन्ति सदा सत्सु पुत्रवांस्तेन वै पिता ॥ २५ ॥

तस्योपकारिणः कश्चिद्भवद्भ्यामभिवाञ्छितं ।
किञ्चिन्निष्पादितं वत्सौ परितोषाय चेतसः ॥ २६ ॥
स धन्यो जीवितं तस्य तस्य जन्म सुजन्मनः ।
यस्यार्थिनो न विमुखा मित्रार्थो न च दुर्ब्बलः ॥ २७ ॥
मद्गृहे यत्सुवर्णादि रत्नं वाहनमासनं ।
यच्चान्यत्प्रीतये तस्य तद्देयमविशङ्कया २८ ॥
धिक् तस्य जीवितं पुंसो मित्राणामुपकारिणां ।
प्रतिरूपमकुर्व्वन् यो जीवामीत्यवगच्छति ॥ २९ ॥
उपकारं सुहृद्वर्गे योऽपकारञ्च शत्रुषु ।
न्नमेघो वर्षति प्राज्ञस्तस्येच्छन्ति सदोन्नतिं ॥ ३० ॥

पुत्रावूचतुः ॥

किन्तस्य कृतकृत्यस्य कर्त्तुं शक्येत केनचित् ।
यस्य सर्व्वार्थिनो गेहे सर्व्वकामैः सदार्च्चिताः ॥ ३१ ॥
यानि रत्नानि तद्गेहे पाताले तानि नः कुतः ।
वाहनासनयानानि भूषणान्यम्बराणि च ॥ ३२ ॥
विज्ञानं तच्च यच्चास्ति तदन्यच्च न विद्यते ।
प्राज्ञानामप्यसौ तात सर्व्वसन्देहहृत्तमः ॥ ३३ ॥
एकं तस्यास्ति कर्त्तव्यमसाध्यं तच्च नौ मतं ।
हिरण्यगर्भगोविन्दशर्व्वादीनीश्वरादृते ॥ ३४ ॥

पितोवाच ॥

तथापि श्रोतुमिच्छामि तस्य यत्कार्य्यमुत्तमं ।
असाध्यमथवा साध्यं किं वासाध्यं विपश्चितां ॥ ३५ ॥

देवत्वममरेशत्वं तत्पूज्यत्वञ्च मानवाः ।
प्रयान्ति वाञ्छितं वान्यद्दृढं ये व्यवसायिनः ॥ ३६ ॥
नाविज्ञातं नचागम्यं नाप्राप्यं दिवि चेह वा ।
उद्यतानां मनुष्याणां यतचित्तेन्द्रियात्मनां ॥ ३७ ॥
योजनानां सहस्राणि व्रजन् याति पिपीलिकः ।
अगच्छन् वैनतेयोऽपि पादमेकं न गच्छति ॥ ३८ ॥
क्व भूतलं क्व च ध्रौवं स्थानं यत्प्राप्तवान् ध्रुवः ।
उत्तानपादनृपतेः पुत्रः सन् भूमिगोचरः ॥ ३९ ॥
तत्कथ्यतां महाभाग कार्य्यवान् येन पुत्रकौ ।
स भूपालसुतः साधुर्येनानृण्यं भवेत वां ॥ ४० ॥

पुत्रावूचतुः ॥

तेनाख्यातमिदं तात पूर्व्ववृत्तं महात्मना ।
कौमारके यथा तस्य वृत्तं सद्वृत्तशालिनः ॥ ४१ ॥
तन्तु शत्रुजितं तात पूर्व्वं कश्चिद्द्विजोत्तमः ।
गालवोऽभ्यागमद्धीमान् गृहीत्वा तुरगोत्तमं ॥ ४२ ॥
प्रत्युवाच च राजानं समुत्पेत्याश्रमं मम ।
कोऽपि दैत्याधमो राजन् विध्वंसयति पापकृत् ॥ ४३ ॥
नानारूपं समास्थाय सिंहेभवनचारिणां ।
अन्येषाञ्चाल्पकायानामहर्न्निशमकारणात् ॥ ४४ ॥
समाधिध्यानयुक्तस्य मौनव्रतरतस्य च ।
तथा करोति विघ्नानि यथा चलति मे मनः ॥ ४५ ॥

दग्धुं कोपाग्निना सद्यः समर्थस्त्वं वयं न तु ।
दुःखार्जितस्य तपसो व्ययमिच्छामि पार्थिव ॥ ४६ ॥
एकदा तु मया राजन्नतिनिर्व्विण्णचेतसा ।
तत्क्लेशितेन निश्वासो निरीक्ष्यासुरमुज्झितः ॥ ४७ ॥
ततोऽम्बरतलात् सद्यः पतितोऽयं तुरङ्गमः ।
वाक् चाशरीरिणी प्राह नरनाथ शृणुष्व तां ॥ ४८ ॥
अश्रान्तः सकलं भूमेर्वलयं तुरगोत्तमः ।
समर्थः क्रान्तुमर्कण तवायं प्रतिपादितः ॥ ४९ ॥
पातालाम्बरतोयेषु न चास्य विहता गतिः ।
समस्तदिक्षु व्रजतो न भङ्गः पर्व्वतेष्वपि ॥ ५० ॥
यतो भूवलयं सर्व्वमश्रान्तोऽयं चरिष्यति ।
अतः कुवलयो नाम्ना ख्यातिं लोके प्रयास्यति ॥ ५१ ॥
क्लिश्यत्यहर्न्निशं पापी यश्च त्वां दानवाधमः ।
तमप्येनं समारुह्य द्विजश्रेष्ठ हनिष्यति ॥ ५२ ॥
शत्रुजिन्नाम भूपालस्तस्य पुत्त्र ऋतध्वजः ।
प्राप्यैतदश्वरत्नञ्च ख्यातिमेतेन यास्यति ॥ ५३ ॥
सोऽहं त्वां समनुप्राप्तस्तपसो विघ्नकारिणां ।
तं निवारय भूपाल भागभाङ्न्नृपतिर्यतः ५४ ॥
तदेतदश्वरत्नं ते मया भूप निवेदितं ।
पुत्त्रमाज्ञापय तथा यथा धर्म्मो न लुप्यते ॥ ५५ ॥
स तस्य वचनाद्राजा तं वै पुत्त्रमृतध्वजं ।
तमश्वरत्नमारोप्य कृतकौतुकमङ्गलं ॥ ५६ ॥

अप्रेषयत धर्म्मात्मा गालवेन समं तदा ।
स्वमाश्रमपदं सोऽपि तमादाय ययौ मुनिः ॥ ५७ ॥

इति श्रीमार्कण्डेयपुराणे कुवलाश्वीये । २० ।

एकविंशोऽध्यायः ।



पितोवाच ।

गालवेन समं गत्वा नृपपुत्रेण तेन यत् ।
कृतं तत्कथ्यतां पुत्रौ विचित्रा युवयोः कथा ॥ १ ॥

पुत्रावूचतुः ।

स गालवाश्रमे रम्ये तिष्ठन् भूपालनन्दनः ।
सर्व्वविघ्नोपशमनञ्चकार ब्रह्मवादिनां ॥ २ ॥
वीरं कुवलयाश्वं तं वसन्तं गालवाश्रमे ।
मदावलेपोपहतो नाजानाद्दानवाधमः ॥ ३ ॥
ततस्तं गालवं विप्रं सन्ध्योपासनतत्परं ।
शौकरं रूपमास्थाय प्रधर्षयितुमागमत् ॥ ४ ॥
मुनिशिष्यैरथोत्क्रुष्टे शीघ्रमारुह्य तं हयं ।
अन्वधावद्वराहं तं नृपपुत्रः शरासनी ॥ ५ ॥
आजघान च बाणेन चन्द्रार्द्धाकारवर्च्चसा ।
आकृष्य बलवच्चापश्चारुचित्रोपशोभितं ॥ ६ ॥
नाराचाभिहतः शीघ्रमात्मत्राणपरो मृगः ।
गिरिपादपसम्बाधां सोऽभ्यगच्छन्महाटवीं ॥ ७ ॥

तमन्वधावद्वेगेन तुरगोऽसौ मनोजवः ।
चोदितो राजपुत्रेण पितुरादेशकारिणा ॥ ८ ॥
अतिक्रम्याथ वेगेन योजनानि सहस्रशः ।
धरण्यां विवृते गर्त्ते निपपात लघुक्रमः ॥ ९ ॥
तस्यानन्तरमेवाशु सोऽप्यश्वी नृपतेः सुतः ।
निपपात महागर्त्ते तिमिरौघसमावृते ॥ १० ॥
ततो नादृश्यत मृगः स तस्मिन्राजसूनुना ।
प्रकाशञ्च स पातालमपश्यत्तत्र नापि तं ॥ ११ ॥
ततोऽपश्यत् स सौवर्णप्रासादशतसंकुलं ।
पुरन्दरपुरप्रख्यं पुरं प्राकारशोभितं ॥ १२ ॥
तत्प्रविश्य स नापश्यत्तत्र कञ्चिन्नरं पुरे ।
भ्रमता च ततो दृष्टा तत्र योषित्त्वरान्विता ॥ १३ ॥
सा पृष्टा तेन तन्वङ्गी प्रस्थिता केन कस्य वा ।
नोवाच किञ्चित् प्रासादमारुरोह च भाविनी ॥ १४ ॥
सोऽप्यश्वमेकतो बद्धा तामेवानुससार वै ।
विस्मयोत्फुल्लनयनो निःशङ्को नृपतेः सुतः ॥ १५ ॥
ततोऽपश्यत् सुविस्तीर्णे पर्य्यङ्के सर्व्वकाञ्चने ।
निषण्णां कन्यकामेकां कामयुक्तां रतीमिव ॥ १६ ॥
विस्पष्टेन्दुमुखीं सुभ्रूं पीनश्रोणिपयोधरां ।
विम्बाधरौष्ठीं तन्वङ्गीं नीलोत्पलविलोचनां ॥ १७ ॥
रक्ततुङ्गनखीं श्यामां मृद्वीं ताम्रकराङ्घ्रिकां ।
करभोरूं सुदशनां नीलसूक्ष्मस्थिरालकां ॥ १८ ॥

तां दृष्ट्वा चारुसर्व्वाङ्गीमनङ्गाङ्कलतामिव ।
सोऽमन्यत्पार्थिवसुतस्तां रसातलदेवतां ॥ १९ ॥
सा च दृष्ट्वैव तं बाला नीलकुञ्चितमूर्द्धजं ।
पीनोरुस्कन्धबाहुं तममंस्त मदनं शुभा ॥ २० ॥
उत्तस्थौ च महाभागा चित्तक्षोभमवाप्य सा ।
लज्जाविस्मयदैन्यानां सद्यस्तन्वी वशं गता ॥ २१ ॥
कोऽयं देवो नु यक्षो वा गन्धर्व्वो वोरगोऽपिवा ।
विद्याधरो वा संप्राप्तः क्षतपुण्यरतिर्नरः ॥ २२ ॥
एवं विचिन्त्य बहुधा निश्वस्य च महीतले ।
उपविश्य ततो भेजे सा मूर्च्छां मदिरेक्षणा ॥ २३ ॥
सोऽपि कामशराघातमवाप्य न्वपतेः सुतः ।
तां समाश्वासयामास न भेतव्यमिति ब्रुवन् ॥ २४ ॥
सा च स्त्री या तदा दृष्टा पूर्व्वं तेन महात्मना ।
तालवृन्तमुपादाय पर्य्यवीजयदाकुला ॥ २५ ॥
समाश्वास्य तदा पृष्टा तेन सम्मोहकारणं ।
किञ्चिल्लज्जान्विता बाला तस्याः सख्युर्न्यवेदयत् ॥ २६ ॥
सा चास्मै कथयामास न्वपपुत्राय विस्तरात् ।
मोहस्य कारणं सर्व्वं तद्दर्शनसमुद्भवं ॥
यथा तया समाख्यातं तद्वृत्तान्तञ्च भाविनी ॥ २७ ॥

कुण्डलोवाच ।

विश्वावसुरिति ख्यातो दिवि गन्धर्व्वराट् प्रभो ।
तस्येयमात्मजा सुभ्रूर्नाम्ना ख्याता मदालसा ॥ २८ ॥

वज्रकेतोः सुतश्चोग्रो दानवोऽरिविदारणः ।
पातालकेतुर्व्विख्यातः पातालान्तरसंश्रयः ॥ २९ ॥
तेनेयमुद्यानगता कृत्वा मायां तमोमयीं ।
अपहृत्य मया ज्ञाता बालानीता दुरात्मना ॥ ३० ॥
आगामिन्यां त्रयोदश्यामुद्वक्ष्यति किलासुरः ।
स तु नार्हति चार्व्वङ्गीं शूद्रो वेदश्रुतीमिव ॥ ३१ ॥
अतीते च दिने बालामात्मव्यापादनोद्यतां ।
सुरभिः प्राह नायं त्वां प्राप्स्यते दानवाधमः ॥ ३२ ॥
मर्त्यलोकमनुप्राप्तं य एनं छेत्स्यते शरैः ।
स ते भर्त्ता महाभागे अचिरेण भविष्यति ॥ ३३ ॥
अहञ्चास्याः सखी नाम्ना कुण्डलेति मनस्विनो ।
सुता बिन्ध्यवतः पत्नी वीर पुष्करमालिनः ॥ ३४ ॥
हते भर्त्तरि शुम्भेन तीर्थात्तीर्थमनुव्रता ।
चरामि दिव्यया गत्या परलोकार्थमुद्यता ॥ ३५ ॥
पातालकेतुर्दुष्टात्मा वाराहं वपुरास्थितः ।
केनापि विद्धो बाणेन मुनीनां त्राणकारणात् ॥ ३६ ॥
तच्चाहं तत्त्वतोऽन्विष्य त्वरिता समुपागता ।
सत्यमेव स केनापि ताडितो दानवाधमः ॥ ३७ ॥
इयञ्च मूर्च्छामगमत् कारणं यत् शृणुष्व तत् ।
त्वयि प्रीतिमती बाला दर्शनादेव मानद ॥ ३८ ॥
देवपुत्त्रोपमे चारुवाक्यादिगुणशालिनि ।
भार्य्या चान्यस्य बिहिता येन विद्धः स दानवः ॥ ३९ ॥

एतस्मात् कारणान्मोहं महान्तमियमागता ।
यावज्जीवञ्च तन्वङ्गी दुःखमेवोपभोक्ष्यते ॥ ४० ॥
त्वय्यस्या हृदयं राणि भर्त्ता चान्यो भविष्यति ।
यावज्जीवमतो दुःखं सुरभ्या नान्यथाऽव्ययः ॥ ४१ ॥
अहं त्वस्याः प्रभो प्रीत्या दुःखिताच समागता ।
यतो विशेषो नैवास्ति स्वसखीनिजदेहयोः ॥ ४२ ॥
यद्येषाभिमतं वीरं पतिमाप्नोति शोभना ।
ततस्तपस्त्वहं कुर्य्यां निर्व्यलीकेन चेतसा ॥ ४३ ॥
त्वन्तु को वा किमर्थं वा संप्राप्तोऽत्र महामते ।
देवो दैत्यो नु गन्धर्व्वः पन्नगः किन्नरोऽपिवा ॥ ४४ ॥
नह्यत्र मानुषगतिर्नचेदृङ्मानुषं वपुः ।
तत्त्वमाख्याहि कथितं यथैवावितथं मया ॥ ४५ ॥

कुवलयाश्व उवाच ॥

यन्मां पृच्छसि धर्म्मज्ञे कस्त्वं किं वा समागतः ।
तच्छृणुष्वामलप्रज्ञे कथयाम्यादितस्तव ॥ ४६ ॥
राज्ञः शत्रुजितः पुत्त्रः पित्रा संप्रेषितः शुभे ।
मुनिरक्षणमुद्दिश्य गालवाश्रममागतः ॥ ४७ ॥
कुर्व्वतो मम रक्षाञ्च मुनीनां धर्म्मचारिणां ।
विघ्नार्थमागतः कोऽपि शौकरं रूपमास्थितः ॥ ४८ ॥
मया स विद्धो बाणेन चन्द्रार्द्धाकारवर्च्चसा ।
अपक्रान्तोऽतिवेगेन तमश्वमनुगतो हयी ॥ ४९ ॥
पपात सहसा गर्त्ते सक्रोडोऽश्वश्च मामकः ।

सोऽहमश्वं समारूढस्तमस्येकः परिभ्रमन् ॥ ५० ॥
प्रकाशमासादितवान् दृष्टा च भवती मया ।
पृष्टया च न मे किञ्चिद्भवत्या दत्तमुत्तरं ॥ ५१ ॥
त्वाञ्चैवानुप्रविष्टोऽहमिमं प्रासादमुत्तमं ।
इत्येतत् कथितं सत्यं न देवोऽहं न दानवः ॥ ५२ ॥
न पन्नगो न गन्धर्व्वः किन्नरो वा शुचिस्मिते ।
समस्ताः पूज्यपक्षा वै देवाद्या मम कुण्डले ॥
मनुष्योऽस्मि विशङ्का ते न कर्त्तव्याच कर्हिचित् ॥ ५३ ॥

पुत्रावूचतुः ॥

ततः प्रहृष्टा सा कन्या सखीवदनमुत्तमं ।
लज्जाजडं वीक्षमाणा किञ्चिन्नोवाच भाविनी ॥ ५४ ॥
सा सखी पुनरप्येनं प्रहृष्टा प्रत्युवाच ह ।
यथावत् कथितं तेन सुरभ्या वचनानुगे ॥ ५५ ॥

कुण्डलोवाच ॥

वीर सत्यमसन्दिग्धं भवताभिहितं वचः ।
नान्यत्र हृदयं त्वस्या दृष्ट्वा स्थैर्य्यं प्रयास्यति ॥ ५६ ॥
चन्द्रमेवाधिका कान्तिः समुपैति रविं प्रभा ।
भूतिर्धन्यं धृतिर्धीरं क्षान्तिरभ्येति चोत्तमं ॥ ५७ ॥
त्वयैव विद्धोऽसंदिग्धं स पापो दानवाधमः ।
सुरभिः सा गवां माता कथं मिथ्या वदिष्यति ॥ ५८ ॥
तद्धन्येयं सभाग्या च त्वत्सम्बन्धं समेत्य वै ।
कुरुष्व वीर यत्कार्य्यं विधिनैव समाहितं ॥ ५९ ॥

पुत्रावूचतुः ॥

परवानहमित्याह राजपुत्रः स तां पितः ।
सा च तं चिन्तयामास तुम्बुरुं तत्कुले गुरुं ॥ ६० ॥
स चापि तत्क्षणात्प्राप्तः प्रगृहीतसमित्कुशः ।
मदालसायाः संप्रीत्या कुण्डलागौरवेण च ॥ ६१ ॥
प्रज्वाल्य पावकं हुत्वा मन्त्रवित् कृतमङ्गलां ।
वैवाहिकविधिं कन्यां प्रतिपाद्य यथागतं ॥ ६२ ॥
जगाम तपसे धीमान् स्वमाश्रमपदं तदा ।
सा चाह तां सखीं बालां कृतार्थास्मि वरानने ॥ ६३ ॥
संयुक्ताममुना दृष्ट्वा त्वामहं रूपशालिनीं ।
तपस्तप्स्येऽहमतुलं निर्व्यलीकेन चेतसा ॥ ६४ ॥
तीर्थाम्बुधूतपापा च भविष्ये नेदृशी यथा ।
तं चाह राजपुत्रं सा प्रश्रयावनता तदा ॥
गन्तुकामा निजसखीस्नेहविक्लवभाषिणी ॥ ६५ ॥.

कुण्डलोवाच ॥

पुंभिरप्यमितप्रज्ञ नोपदेश्यो भवद्विधे ।
दातव्यः किमुत स्त्रीभिरतो नोपदिशामि ते ॥ ६६ ॥
किं त्वस्यास्तनुमध्यायाः स्नेहाकृष्टेन चेतसा ।
त्वया विश्रम्भिता चास्मि स्मारयाम्यरिसूदन ॥ ६७ ॥
भर्त्तव्या रक्षितव्या च भार्य्या हि पतिना सदा ।
धर्म्मार्थकामसंसिद्ध्यै भार्य्या भर्तृसहायिनी ॥ ६८ ॥
यदा भार्य्या च भर्त्ता च परस्परवशानुगौ ।

तदा धर्म्मार्थकामानां त्रयाणामपि संगतं ॥ ६९ ॥
कथं भार्य्यामृते धर्म्ममर्थं वा पुरुषः प्रभो ।
प्राप्नोति काममथवा तस्यां त्रितयमाहितं ॥ ७० ॥
तथैव भर्त्तारमृते भार्य्या धर्म्मादिसाधने ।
न समर्था त्रिवर्गोऽयं दाम्पत्यं समुपाश्रितः ॥ ७१ ॥
देवतापितृभृत्यानामतिथीनाञ्च पूजनं ।
न पुंभिः शक्यते कर्त्तुमृते भार्य्यां नृपात्मज ॥ ७२ ॥
प्राप्तोऽपि चार्थो मनुजैरानीतोऽपि निजं गृहं ।
क्षयमेति विना भार्य्यां कुभार्य्यासंश्रयेऽपि वा ॥ ७३ ॥
कामस्तु तस्य नैवास्ति प्रत्यक्षेणोपलक्ष्यते ।
दम्पत्योः सहधर्म्मेण त्रयीधर्म्ममवाप्नुयात् ॥ ७४ ॥
पितॄन् पुत्रैस्तथैवान्नसाधनैरतिथीन्नरः ।
पूजाभिरमरांस्तद्वत् साध्वीं भार्य्यां नरोऽवति ॥ ७५ ॥
स्त्रियश्चापि विना भर्त्रा धर्म्मकामार्थसन्ततिः ।
नैव तस्मात्त्रिवर्गोऽयं दाम्पत्यमधिगच्छति ॥ ७६ ॥
एतन्मयोक्तं युवयोर्गच्छामि च यथेप्सितं ।
वर्द्ध त्वमनया सार्द्धं धनपुत्रसुखायुषा ॥ ७७ ॥

पुत्रावूचतुः ॥

इत्युक्ता सा परिष्वज्य स्वसखीं तं नमस्य च ।
जगाम दिव्यया गत्या यथाभिप्रेतमात्मनः ॥ ७८ ॥
सोऽपि शत्रुजितःपुत्रस्तामारोप्य तुरङ्गमं ।
निर्गन्तुकामः पातालाद्विज्ञातो दनुसंभवैः ॥ ७९ ॥

ततस्तैःसहसोत्कृष्टं ह्रियते ह्रियतेऽति वै ।
कन्यारत्नं यदानीतं दिवः पातालकेतुना ॥ ८० ॥
ततः परिघनिस्त्रिंशगदाशूलशरायुधं ।
दानवानां बलं प्राप्तं सह पातालकेतुना ॥ ८१ ॥
तिष्ठ तिष्ठेति जल्पन्तस्ते तदा दानवोत्तमाः ।
शरवर्षैस्तथा शूलैर्ववृषुर्नृपनन्दनं ॥ ८२ ॥
स च शत्रुजितः पुत्रस्तदस्त्राण्यतिवीर्य्यवान् ।
चिच्छेद शरजालेन प्रहसन्निव लीलया ॥ ८३ ॥
क्षणेन पातालतलमसिशक्त्यृष्टिशायकैः ।
छिन्नैः संछन्नमभवत्तत्स्वअशरोत्करैः ॥ ८४ ॥
ततोऽस्त्रं त्वाष्ट्रमादाय चिक्षेप प्रति दानवान् ।
तेन ते दानवाः सर्व्वे सह पातालकेतुना ॥ ८५ ॥
ज्वालामालातितीव्रेण स्फुटदस्थिचयाः कृताः ।
निर्द्दग्धाः कापिलं तेजः समासाद्येव सागराः ॥ ८६ ॥
ततः स राजपुत्रोऽश्वी निहत्यासुरसत्तमान् ।
स्त्रीरत्नेन समं तेन समागच्छत् पितुः पुरं ॥ ८७ ॥
प्रणिपत्य च तत्सर्व्वं स तु पित्रे न्यवेदयत् ।
पातालगमनञ्चैव कुण्डलायाश्च दर्शनं ॥ ८८ ॥
तदन्मदालसाप्राप्तिं दानवैश्चापि सङ्गरं ।
वधञ्च तेषामस्त्रेण पुनरागमनं तथा ॥ ८९ ॥
इति श्रुत्वा पिता तस्य चरितं चारुचेतसः ।
प्रीतिमानभवच्चेदं परिष्वज्याह चात्मजं ॥ ९० ॥

सत्पात्रेण त्वया पुत्र तारितोऽहं महात्मना ।
भयेभ्यो मनयस्त्राता येन सद्धर्म्मचारिणः ॥ ९१ ॥
मत्पूर्व्वैः ख्यातमानीतं मया विस्तारितं पुनः ।
पराक्रमवता वीर त्वया तद्बहुलीकृतं ॥ ९२ ॥
यदुपात्तं यशः पित्रा धनं वीर्य्यमथापि वा ।
तन्न ह्रापयते यस्तु स नरो मध्यमः स्मृतः ॥ ९३ ॥
तद्वीर्य्यादधिकं यस्तु पुनरन्यत् स्वशक्तितः ।
निष्पादयति तं प्राज्ञाः प्रवदन्ति नरोत्तमं ॥ ९४ ॥
यः पित्रा समुपात्तानि धनवीर्य्ययशांसि वै ।
न्यूनतां नयति प्राज्ञास्तमाहुः पुरुषाधमं ॥ ९५ ॥
तन्मया ब्राह्मणत्राणं कृतमासीद्यथा त्वया ।
पातालगमनं यच्च यच्चासुरविनाशनं ॥ ९६ ॥
एतदप्यधिकं वत्स तेन त्वं पुरुषोत्तमः ।
तद्धन्योऽस्यथ वाल त्वमहमेव गुणाधिकं ॥ ९७ ॥
त्वां पुत्रमीदृशं प्राप्य श्लाघ्यः पुण्यवतामपि ।
न स पुत्रकृतां प्रीतिं मन्ये प्राप्नोति मानवः ॥ ९८ ॥
पुत्रेण नातिशयितो यः प्रज्ञादानविक्रमैः ।
धिगजन्म तस्य यः पित्रा लोके विज्ञायते नरः ॥ ९९ ॥
यः पुत्रात् ख्यातिमभ्येति तस्य जन्म सुजन्मनः ।
आत्मना ज्ञायते धन्यो मध्यः पितृपितामहैः ॥ १०० ॥
मातृपक्षेण मात्रा च ख्यातिमेति नराधमः ।
तत् पुत्र धनवीर्य्यैस्त्वं विवर्द्धस्व सुखेन च ॥ १०१ ॥

गन्धर्व्वतनया चेयं मा त्वया वै वियुज्यताम् ।
इति पित्रा बहुविधं प्रियमुक्तः पुनः पुनः ॥ १०२ ॥
परिष्वज्य स्वमावासं सभार्य्यः स विसर्ज्जितः ।
स तया भार्य्यया सार्द्धं रेमे तत्र पितुः पुरे ॥ १०३ ॥
अन्येषु च तथोद्यानवनपर्व्वतसानुषु ।
श्वश्रूश्वशुरयोः पादौ प्रणिपत्य च सा शुभा ॥
प्रातः प्रातस्ततस्तेन सह रेमे सुमध्यमा ॥ १०४ ॥

इति श्रीमार्कण्डेयपुराणे कुवलयाश्वीये मदालसापरिणयनं ॥ २१ ॥

---

## द्वाविंशोऽध्यायः ॥



पुत्रा ऊचतुः ॥

ततः काले बहुतिथे गते राजा पुनः सुतम् ।
प्राह गच्छाशु विप्राणां त्राणाय चर मेदिनीम् ॥ १ ॥
अश्वमेनं समारुह्य प्रातः प्रातर्द्दिने दिने ।
अबाधा द्विजमुख्यानामन्वेष्टव्या सदैव हि ॥ २ ॥
दुर्वृत्ताः सन्ति शतशो दानवाः पापयोनयः ।
तेभ्यो न स्याद्यथा बाधा मुनीनां त्वं तथा कुरु ॥ ३ ॥
स यथोक्तस्ततः पित्रा तथा चक्रे नृपात्मजः ।
परिक्रम्य महीं सर्व्वां ववन्दे चरणौ पितुः ॥ ४ ॥
अहन्यहन्यनुप्राप्ते पूर्व्वाह्णे नृपनन्दनः ।
ततश्च शेषं दिवसं तया रेमे सुमध्यया ॥ ५ ॥

एकदा तु चरन् सोऽथ ददर्श यमुनातटे ।
पातालकेतोरनुजं तालकेतुं कृताश्रमं ॥ ६ ॥
मायावी दानवः सोऽथ मुनिरूपं समास्थितः ।
स प्राह राजपुत्रं तं पूर्व्ववैरमनुस्मरन् ॥ ७ ॥
राजपुत्र ब्रवीमि त्वां तत्कुरुष्व यदीच्छसि ।
न च ते प्रार्थनाभङ्गः कार्य्यः सत्यप्रतिश्रव ॥ ८ ॥
यक्ष्ये यज्ञेन धर्म्माय कर्त्तव्याश्च तथेष्टयः ।
चितयस्तत्र कर्त्तव्या नान्तरिक्षगता यतः ॥ ९ ॥
अतः प्रयच्छ मे वीर हिरण्यार्थं स्वभूषणं ।
यदेतत् कण्ठलग्नं ते रक्ष चेमं ममाश्रमं ॥ १० ॥
यावदन्तर्जले देवं वरुणं यादसां पतिं ।
वैदिकैर्व्वारुणैर्म्मन्त्रैः प्रजानां पुष्टिहेतुकैः ॥ ११ ॥
अभिष्टूय त्वरायुक्तः समभ्येमीति वादिनं ।
तं प्रणम्य ततःप्रादात् स तस्मै कण्ठभूषणं ॥ १२ ॥
प्राह चैनं भवान् यातु निर्व्यलीकेन चेतसा ।
स्थास्यामि तावदत्रैव तवाश्रमसमीपतः ॥ १३ ॥
तवादेशान्महाभाग यावदागमनं तव ।
न तेऽत्र कश्चिदाबाधां करिष्यति मयि स्थिते ॥
विस्रब्धस्त्वात्वरन् ब्रह्मन् कुरुष्व त्वं मनोगतं ॥ १४ ॥

पुत्रावूचतुः ॥

एवमुक्तस्ततस्तेन स ममज्ज नदीजले ।
ररक्ष सोऽपि तस्यैव मायाविहितमाश्रमं ॥ १५ ॥

गत्वा जलाशयात्तस्मात्तालकेतुश्च तत्पुरं ।
मदालसायाः प्रत्यक्षमन्येषाञ्चैतदुक्तवान् ॥ १६ ॥

तालकेतुरुवाच ॥

वीरः कुवलयाश्वोऽसौ ममाश्रमसमीपतः ।
केनापि दुष्टदैत्येन कुर्व्वन्रक्षां तपस्विनां ॥ १७ ॥
युध्यमानो यथाशक्ति निघ्नन् ब्रह्मद्विषो युधि ।
मायामाश्रित्य पापेन भिन्नः शूलेन वक्षसि ॥ १८ ॥
म्रियमाणेन तेनेदं दत्तं मे कण्ठभूषणं ।
प्रापितश्चाग्निसंयोगं स वने शूद्रतापसैः ॥ १९ ॥
कृतार्त्तहेषाशब्दो वै त्रस्तः साश्रुविलोचनः ।
नीतः सोऽश्वश्च तेनैव दानवेन दुरात्मना ॥ २० ॥
एतन्मया नृशंसेन दृष्टं दुष्कृतकारिणा ।
यदत्रानन्तरं कृत्यं क्रियतां तदकालिकं ॥ २१ ॥
हृदयाश्वासनञ्चैतद्गृह्यतां कण्ठभूषणं ।
नास्माकं हि सुवर्णेन कृत्यमस्ति तपस्विनां ॥ २२ ॥

पुत्रावूचतुः ॥

इत्युक्त्वोत्सृज्य तद्भूमौ स जगाम यथागतं ।
निपपात जनः सोऽथ शोकार्त्तो मूर्च्छयातुरः ॥ २३ ॥
तत्क्षणात् चेतनां प्राप्य सर्व्वास्ता नृपयोषितः ।
राजपत्न्यश्च राजा च विलेपुरतिदुःखिताः ॥ २४ ॥
मदालसा तु तद्दृष्ट्वा तदीयं कण्ठभूषणं ।
तत्याजाशु प्रियान् प्राणान् श्रुत्वा च निहतं पतिं ॥ २५ ॥

ततस्तथा महा क्रन्दः पौराणां भवनेष्वभूत् ।
यथैव तस्य नृपतेः स्वगेहे समवर्त्तत ॥ २६ ॥
राजा च तां मृतां दृष्ट्वा विना भर्त्रा मदालसां ।
प्रत्युवाच जनं सर्व्वं विमृष्य सुस्थमानसः ॥ २७ ॥
न रोदितव्यं पश्यामि भवतामात्मनस्तथा ।
सर्व्वेषामेव संचिन्त्य सम्बन्धानामनित्यतां ॥ २८ ॥
किन्नु शोचामि तनयं किन्नु शोचाम्यहं स्नुषां ।
विमृष्य कृतकृत्यत्वान्मन्येऽशोच्यावुभावपि ॥ २९ ॥
मच्छुश्रूषुर्म्मद्वचनाद्द्विजरक्षणतत्परः ।
प्राप्तो मे यः सुतो मृत्युं कथं शोच्यः स धीमतां ॥ ३० ॥
अवश्यं याति यद्देहं तद्द्विजानां कृते यदि ।
मम पुत्रेण संत्यक्तं नन्वभ्युदयकारि तत् ॥ ३१ ॥
इयञ्च सत्कुलोत्पन्ना भर्त्तर्य्येवमनुव्रता ।
कथन्नु शोच्या नारीणां भर्त्तुरन्यन्न दैवतं ॥ ३२ ॥
अस्माकं बान्धवानाञ्च तथान्येषां दयावतां ।
शोच्या ह्येषा भवेदेवं यदि भर्त्रा वियोगिनी ॥ ३३ ॥
या तु भर्त्तुर्व्वधं श्रुत्वा तत्क्षणादेव भामिनी ।
भर्त्तारमनुयातेयं न शोच्यातो विपश्चितां ॥ ३४ ॥
ताः शोच्या या वियोगिन्यो न शोच्या या मृताः सह ।
भर्त्रा वियोगस्त्वनया नानुभूतः कृतज्ञया ॥ ३५ ॥
दातारं सर्व्वसौख्यानामिह चामुत्र चोभयोः ।
लोकयोः का हि भर्त्तारं नारी मन्येत मानुषं ॥ ३६ ॥

नासौ शोच्यो नचैवेयं नाहं तज्जननी न च ।
त्यजता ब्राह्मणार्थाय प्राणान् सर्व्वे स्म तारिताः ॥ ३७ ॥
विप्राणां मम धर्म्मस्य गतः स हि महामतिः ।
आन्टण्यमर्हभुक्तस्य त्यागाद्देहस्य मे सुतः ॥ ३८ ॥
मातुः सतीत्वं मद्वंशवैमल्यं शौर्य्यमात्मनः ।
संग्रामे संत्यजन् प्राणान् नात्यजद्द्विजरक्षणे ॥ ३९ ॥

पुत्रावूचतुः ॥

ततः कुवलयाश्वस्य माता भर्त्तुरनन्तरं ।
श्रुत्वा पुत्रवधं तादृक् प्राह दृष्ट्वा तु तं पतिं ॥ ४० ॥

मातोवाच ॥

न मे माता न मे स्वसा प्राप्ता प्रीतिर्नृपेदृशी ।
श्रुत्वा मुनिपरित्राणे हतं पुत्रं यथा मया ॥ ४१ ॥
शोचतां बान्धवानां ये निःश्वसन्तोऽतिदुःखिताः ।
म्रियन्ते व्याधिना क्लिष्टास्तेषां माता वृथाप्रजा ॥ ४२ ॥
संग्रामे युध्यमाना येऽभीता गोद्विजरक्षणे ।
क्षुण्णाः शस्त्रैर्विपद्यन्ते तएव भुवि मानवाः ॥ ४३ ॥
अर्थिनां मित्रवर्गस्य विद्विषाञ्च पराङ्मुखः ।
यो न याति पिता तेन पुत्री माता च वीरसूः ॥ ४४ ॥
गर्भक्लेशः स्त्रियो मन्ये साफल्यं भजते तदा ।
यदारिविजयी वास्यात् संग्रामे वा हतः सुतः ॥ ४५ ॥

पुत्रावूचतुः ॥

ततः स राजा संस्कारं पुत्रपत्नीमलम्भयत् ।

निर्गम्य च वहिः स्नातो ददौ पुत्राय चोदकं ॥ ४६ ॥
तालकेतुश्च निर्गम्य तथैव यमुनाजलात् ।
राजपुत्रमुवाचेदं प्रणयान्मधुरं वचः ॥ ४७ ॥
गच्छ भूपालपुत्र त्वं कृतार्थोऽहं कृतस्त्वया ।
कार्य्यं चिराभिलषितं त्वय्यत्राविचले स्थिते ॥ ४८ ॥
वारुणं यज्ञकार्य्यञ्च जलेशस्य महात्मनः ।
तन्मया साधितं सर्व्वं यन्ममासीदभीप्सितं ॥ ४९ ॥
प्रणिपत्य स तं प्रायाद्राजपुत्रः पुरं पितुः ।
समारुह्य तमेवाश्वं सुपर्णानिलविक्रमं ॥ ५० ॥

इति श्रीमार्कण्डेयपुराणे कुवलयाश्वीये मदालसावियोगः ॥ २२ ॥

त्रयोविंशोऽध्यायः ॥



पुत्रावूचतुः ॥

स राजपुत्रः संप्राप्य वेगादात्मपुरं ततः ।
पित्रोर्विवन्दिषुः पादौ दिदृक्षुश्च मदालसां ॥ १ ॥
ददर्श जनमुद्विग्नमप्रहृष्टमुखं पुरः ।
पुनश्च विस्मिताकारं प्रहृष्टवदनं ततः ॥ २ ॥
अन्यमुत्फुल्लनयनं दिष्ट्या दिष्ट्येति वादिनं ।
परिष्वजन्तमन्योन्यमतिकौतूहलान्वितं ॥ ३ ॥
चिरं जीवोरुकल्याण हतास्ते परिपन्थिनः ।
पित्रोः प्रह्लादय मनस्तथास्माकमकण्टकं ॥ ४ ॥

पुत्र उवाच ॥

इत्येवं वादिभिः पौरैः पुरः पृष्ठे च संवृतः ।
तत्क्षणप्रभवानन्दः प्रविवेश पितुर्गृहं ॥ ५ ॥
पिता च तं परिष्वज्य माता चान्ये च बान्धवाः ।
चिरं जीवेति कल्याणीर्ददुस्तस्मै तदाशिषः ॥ ६ ॥
प्रणिपत्य ततः सोऽथ किमेतदिति विस्मितः ।
पप्रच्छ पितरं तात सोऽस्मै सम्यक् तदुक्तवान् ॥ ७ ॥
स भार्य्यां तां मृतां श्रुत्वा हृदयेष्टां मदालसां ।
पितरौ च पुरो दृष्ट्वा लज्जाशोकाब्धिमध्यगः ॥ ८ ॥
चिन्तयामास सा बाला मां श्रुत्वा निधनं गतं ।
तत्याज जीवितं साध्वी धिङ्मां निष्ठुरमानसं ॥ ९ ॥
नृशंसोऽहमनार्य्योऽहं विना तां मृगलोचनां ।
मत्कृते निधनं प्राप्तां यज्जीवाम्यतिनिर्घृणः ॥ १० ॥
पुनः स चिन्तयामास परिसंस्तभ्य मानसं ।
मोहोद्गममपास्याशु निःश्वस्योच्छ्वस्य चातुरः ॥ ११ ॥
मृतेति सा मन्निमित्तं त्यजामि यदि जीवितं ।
किं मयोपकृतं तस्याः श्लाघ्यमेतत्तु योषितां ॥ १२ ॥
यदि रोदिमि वा दीनो हा प्रियेति वदन्मुहुः ।
तथाप्यश्लाघ्यमेतन्नो वयं हि पुरुषाः किल ॥ १३ ॥
अथ शोकजडो दीनो स्रजा हीनो मलान्वितः ।
विपक्षस्य भविष्यामि ततः परिभवास्पदं ॥ १४ ॥
मयारिशातनं कार्य्यं राज्ञः शुश्रूषणं पितुः ।

जीवितं तस्य चायत्तं सन्त्यज्यं तत्कथं मया ॥ १५ ॥
किन्त्वत्र मन्ये कर्त्तव्यस्त्यागो भोगस्य योषितः ।
स चापि नोपकाराय तन्वङ्ग्याः किन्तु सर्व्वथा ॥ १६ ॥
मयान्नृशंस्यं कर्त्तव्यं नोपकार्य्यपकारि च ।
या मदर्थेऽत्यजत् प्राणांस्तदर्थेऽल्पमिदं मम ॥ १७ ॥

पुत्रावूचतुः ॥

इति कृत्वा मतिं सोऽथ निष्पाद्योदकदानिकं ।
क्रियाश्चानन्तरं कृत्वा प्रत्युवाच ऋतध्वजः ॥ १८ ॥

ऋतध्वज उवाच ॥

यदि सा मम तन्वङ्गी न स्याद्भार्य्या मदालसा ।
अस्मिन् जन्मनि नान्या मे भविची सहचारिणी ॥ १९ ॥
तामृते मृगशावाक्षीं गन्धर्व्वतनयामहं ।
न भोच्ये योषितं काञ्चिदिति सत्यं मयोदितं ॥ २० ॥
सद्धर्म्मचारिणीं पत्नीं तां मुक्त्वा गजगामिनीं ।
काञ्चिन्नाङ्गीकरिष्यामीत्येतत् सत्यं मयोदितं ॥ २१ ॥

पुत्रावूचतुः ॥

परित्यज्य च स्त्रीभोगान् तात सर्व्वांस्तया विना ।
क्रीडन्नास्ते समं तुल्यैर्वयस्यैः शीलसम्पदा ॥ २२ ॥
एतत्तस्य परं कार्य्यं तात तत् केन शक्यते ।
कर्त्तुमत्यर्थदुष्प्राप्यमीश्वरैः किमुतेतरैः ॥ २३ ॥

जड उवाच ॥

इति वाक्यं तयोः श्रुत्वा विमर्षमगमत्पिता ।

विसृज्य चाह तौ पुत्रौ नागराट् प्रहसन्निव ॥ २४ ॥

नागराडश्वतर उवाच ॥

यद्यशक्यमिति ज्ञात्वा न करिष्यन्ति मानवाः ।
कर्म्मण्युद्यममुद्योगहान्या हानिस्ततः परं ॥ २५ ॥
आरभेत नरः कर्म्म स्वपौरुषमहापयन् ।
निष्पत्तिः कर्म्मणो दैवे पौरुषे च व्यवस्थिता ॥ २६ ॥
तस्मादहं तथा यत्नं करिष्ये पुत्रकावितः ।
तपश्चर्य्यां समास्थाय यथैतत् साध्यते चिरात् ॥ २७ ॥

जड उवाच ॥

एवमुक्त्वा स नागेन्द्रः प्लक्षावतरणं गिरेः ।
तीर्थं हिमवतो गत्वा तपस्तेपे सुदुश्चरं ॥ २८ ॥
तुष्टाव गीर्भिश्च ततस्तत्र देवीं सरस्वतीं ।
तन्मना नियताहारो भूत्वा त्रिसवनाप्लुतः ॥ २९ ॥

अश्वतर उवाच ॥

जगद्धात्रीमहं देवीमारिराधयिषुः शुभां ।
स्तोष्ये प्रणम्य शिरसा ब्रह्मयोनिं सरस्वतीं ॥ ३० ॥
सदसद्देवि यत्किञ्चिन्मोक्षवच्चार्थवत्पदं ।
तत्सर्व्वं त्वय्यसंयोगं योगवद्देवि संस्थितं ॥ ३१ ॥
त्वमक्षरं परं देवि यत्र सर्व्वं प्रतिष्ठितं ।
अक्षरं परमं देवि संस्थितं परमाणुवत् ॥ ३२ ॥
अक्षरं परमं ब्रह्म विश्वञ्चैतत् क्षरात्मकं ।
दारुण्यवस्थितो वह्निर्भौमाश्च परमाणवः ॥ ३३ ॥

तथा त्वयि स्थितं ब्रह्म जगच्चेदमशेषतः ।
ओँकाराक्षरसंस्थानं यत्तु देवि स्थिरास्थिरं ॥ ३४ ॥
तत्र मात्रात्रयं सर्व्वमस्ति यद्देवि नास्ति च ।
त्रयो लोकास्त्रयो वेदास्त्रैविद्यं पावकत्रयं ॥ ३५ ॥
त्रीणि ज्योतींषि वर्णाश्च त्रयो धर्म्मागमास्तथा ।
त्रयो गुणास्त्रयः शब्दास्त्रयो वेदास्तथाश्रमाः ॥ ३६ ॥
त्रयः कालास्तथावस्थाः पितरोऽहर्निशादयः ।
एतन्मात्रात्रयं देवि तव रूपं सरस्वति ॥ ३७ ॥
विभिन्नदर्शिनामाद्या ब्रह्मणो हि सनातनाः ।
सोमसंस्था हविःसंस्थाः पाकसंस्थाश्च सप्त याः ॥ ३८ ॥
तास्त्वदुच्चारणाद्देवि क्रियन्ते ब्रह्मवादिभिः ।
अनिर्द्देश्यं तथा चान्यदर्द्धमात्रान्वितं परं ॥ ३९ ॥
अविकार्य्यक्षयं दिव्यं परिणामविवर्जितं ।
तवैतत्परमं रूपं यन्न शक्यं मयोदितुं ॥ ४० ॥
न चास्येन च तज्जिह्वा ताम्रोष्ठादिभिरुच्यते ।
इन्द्रोऽपि वसवो ब्रह्मा चन्द्रार्कौ ज्योतिरेव च ॥ ४१ ॥
विश्वावासं विश्वरूपं विश्वेशं परमेश्वरं ।
सांख्यवेदान्तवादोक्तं बहुशाखास्थिरीकृतं ॥ ४२ ॥
अनादिमध्यनिधनं सदसच्च सदेव यत् ।
एकन्त्वनेकं नाप्येकं भवभेदसमाश्रितं ॥ ४३ ॥
अनाख्यं षड्गुणाख्यञ्च वर्गाख्यं त्रिगुणाश्रयं ।
नानाशक्तिमतामेकं शक्तिवैभविकं परं ॥ ४४ ॥

सुखासुखं महासौख्यरूपं त्वयि विभाव्यते ।
एवं देवि त्वया व्याप्तं सकलं निष्कलञ्च यत् ॥
अद्वैतावस्थितं ब्रह्म यच्च द्वैते व्यवस्थितं ॥ ४५ ॥

येऽर्था नित्या ये विनश्यन्ति चान्ये
ये वा स्थूला ये च सूक्ष्मातिसूक्ष्माः ।
ये वा भूमौ येऽन्तरीक्षेऽन्यतो वा
तेषां तेषां त्वत्त एवोपलब्धिः ॥ ४६ ॥

यच्चामूर्त्तं यच्च मूर्त्तं समस्तं
यद्वा भूतेष्वेकमेकञ्च किञ्चित् ।
यद्दिव्यस्ति च्मातले खेऽन्यतो वा
त्वत्सम्बन्धं त्वत्स्वरैर्व्यञ्जनैश्च ॥ ४७ ॥

जड उवाच ॥

एवं स्तुता तदा देवी विष्णोर्जिह्वा सरस्वती ।
प्रत्युवाच महात्मानं नागमश्वतरं ततः ॥ ४८ ॥

सरस्वत्युवाच ॥

वरं ते कम्बलभ्रातः प्रयच्छाम्युरगाधिप ।
तदुच्यतां प्रदास्यामि यत्ते मनसि वर्त्तते ॥ ४९ ॥

अश्वतर उवाच ॥

सहायं देहि देवि त्वं पूर्व्वं कम्बलमेव मे ।
समस्तस्वरसम्बन्धमुभयोः संप्रयच्छ च ॥ ५० ॥

सरस्वत्युवाच ॥

सप्त स्वरा ग्रामरागाः सप्त पन्नगसत्तम ।

गीतकानि च सप्तैव तावतीश्चापि मूर्च्छनाः ॥ ५१ ॥
तालाश्चैकोनपञ्चाशत्तथा ग्रामत्रयञ्च यत्।
एतत्सर्व्वं भवान् गाता कम्बलश्च तयानघ ॥ ५२ ॥
ज्ञास्यसे मत्प्रसादेन भुजगेन्द्रापरं तथा।
चतुर्व्विधं पदं तालं त्रिःप्रकारं लयत्रयं ॥ ५३ ॥
यतित्रयं तथा तोद्यं मया दत्तं चतुर्व्विधं।
एतद्भवान् मत्प्रसादात् पन्नगेन्द्रापरञ्च यत् ॥ ५४ ॥
अस्यान्तर्गतमायत्तं स्वरव्यञ्जनसम्मितं।
तदशेषं मया दत्तं भवतः कम्बलस्य च ॥ ५५ ॥
तथा नान्यस्य भूर्लोके पाताले चापि पन्नग।
प्रणेतारौ भवन्तौ च सर्व्वस्यास्य भविष्यतः।
पाताले देवलोके च भूर्लोके चैव पन्नगौ ॥ ५६ ॥

जड उवाच ॥

इत्युक्ता सा तदा देवी सर्व्वजिह्वा सरस्वती।
जगामादर्शनं सद्यो नागस्य कमलेक्षणा ॥ ५७ ॥
तयोश्च तद्यथा वृत्तं भ्रात्रोः सर्व्वमजायत।
विज्ञानमुभयोरग्र्यं पदतालस्वरादिकं ॥ ५८ ॥
ततः कैलासशैलेन्द्रशिखरस्थितमीश्वरं।
गीतकैः सप्तभिर्नागौ तन्त्रीलयसमन्वितौ ॥ ५९ ॥
आरिराधयिषू देवमनङ्गाङ्गहरं हरं।
प्रचक्रतुः परं यत्नमुभौ संहतवाक्करौ ॥ ६० ॥
प्रातर्निशायां मध्याह्ने सन्ध्ययोश्चापि तत्परौ।

तयोः कालेन महता स्तूयमानो वृषध्वजः ॥ ६१ ॥
तुतोष गीतकैस्तौ च प्राह्वेशो गृह्यतां वरः ।
ततः प्रणम्याश्वतरः कम्बलेन समं तदा ॥ ६२ ॥
व्यज्ञापयन्महादेवं शितिकण्ठमुमापतिं ।
यदि नौ भगवान् प्रीतो देवदेवस्त्रिलोचनः ॥ ६३ ॥
ततो यथाभिलषितं वरमेनं प्रयच्छ नौ ।
मृता कुवलयाश्वस्य पत्नी देव मदालसा ॥ ६४ ॥
तेनैव वयसा सद्यो दुहितृत्वं प्रयातु मे ।
जातिस्मरा यथा पूर्व्वं तद्वत्कान्तिसमन्विता ॥
योगिनी योगमाता च मद्गेहे जायतां भव ॥ ६५ ॥

महादेव उवाच ॥

यथोक्तं पन्नगश्रेष्ठ सर्व्वमेतद्भविष्यति ।
मत्प्रसादादसन्दिग्धं शृणु चेदं भुजङ्गम ॥ ६६ ॥
श्राद्धे तु समनुप्राप्ते मध्यमं पिण्डमात्मना ।
भक्षयेथाः फणिश्रेष्ठ शुचिः प्रयतमानसः ॥ ६७ ॥
भक्षिते तु ततस्तस्मिन् भवतो मध्यमात् फणात् ।
समुत्पत्स्यति कल्याणी तथारूपा यथा मृता ॥ ६८ ॥
कामञ्चेममभिध्याय कुरु त्वं पितृतर्पणं ।
तत्क्षणादेव सा सुभ्रूः श्वसतो मध्यमात् फणात् ॥ ६९ ॥
समुत्पत्स्यति कल्याणी तथारूपा यथा मृता ।
एतच्छ्रुत्वा ततस्तौ तु प्रणिपत्य महेश्वरं ॥ ७० ॥
रसातलं पुनः प्राप्तौ परितोषसमन्वितौ ।

तथाच कृतवान् श्राद्धं स नागः कम्बलानुजः ॥ ७१ ॥
पिण्डञ्च मध्यमं तद्वद्यथावदुपभुक्तवान् ।
तञ्चापि ध्यायतः कामं ततः सा तनुमध्यमा ॥ ७२ ॥
यत्ने निश्वसतः सद्यस्तद्रूपा मध्यमात् फणात् ।
न चापि कथयामास कस्यचित् स भुजङ्गमः ॥ ७३ ॥
अन्तर्गृहे तां सुदतीं स्त्रीभिर्गुप्तामधारयत् ।
तौ चानुदिनमागम्य पुत्त्रौ नागपतेः सुखं ॥ ७४ ॥
ऋतध्वजेन सहितौ चिक्रीडातेऽमराविव ।
एकदा तु सुतौ प्राह नागराजो मुदान्वितः ॥ ७५ ॥
यन्मया पूर्व्वमुक्तन्तु क्रियते किं न तत्तथा ।
स राजपुत्त्रो युवयोरुपकारी ममान्तिकं ॥ ७६ ॥
कस्मान्नानीयते वत्सावुपकाराय मानदः ।
एवमुक्तौ ततस्तेन पित्रा स्नेहवता तु तौ ॥ ७७ ॥
गत्वा तस्य पुरं सख्यू रेमाते तेन धीमता ।
ततः कुवलयाश्वं तौ कृत्वा किञ्चित्कथान्तरं ॥ ७८ ॥
अब्रूतां प्रणयोपेतं स्वगेहगमनं प्रति ।
तावाह नृपपुत्त्रोऽसौ नन्विदं भवतोर्गृहं ॥ ७९ ॥
धनवाहनवस्त्रादि यन्मदीयं तदेव वां ।
यत्तु वां वाञ्छितं दातुं धनं रत्नमथापि वा ॥ ८० ॥
तद्दीयतां द्विजसुतौ यदि वां प्रणयो मयि ।
एतावताहं दैवेन वञ्चितोऽस्मि दुरात्मना ॥ ८१ ॥
यद्भवद्भ्यां ममत्वं नो मदीये क्रियते गृहे ।

यदि वां मत्प्रियं कार्य्यमनुग्राह्योऽस्मि वां यदि ॥ ८२ ॥
तद्वने मम गेहे च ममत्वमनुकल्प्यतां ।
युवयोर्यन्मदीयं तन्मामकं युवयोः स्वकं ॥ ८३ ॥
एतत् सत्यं विजानीतं युवां प्राणा बहिश्चराः ।
पुनर्नैवं विभिन्नार्थं वक्तव्यं द्विजसत्तमौ ॥ ८४ ॥
मत्प्रसादपरौ प्रीत्या स्थापितौ हृदयेन मे ।
ततः स्नेहार्द्रवदनौ तावुभौ नागनन्दनौ ॥ ८५ ॥
ऊचतुर्नृपतेः पुत्रं किञ्चित् प्रणयकोपितौ ।
ऋतध्वज न सन्देहो यथैवाह भवानिदं ॥ ८६ ॥
तथैव चास्मन्मनसि नाथ चिन्त्यमतोऽन्यथा ।
किन्त्वावयोः स्वयं पित्रा प्रोक्तमेतन्महात्मना ॥ ८७ ॥
द्रष्टुं कुवलयाश्वं तमिच्छामीति पुनः पुनः ।
ततः कुवलयाश्वोऽसौ समुत्थाय वरासनात् ॥
यथाह तातेति वदन् प्रणाममकरोद्भुवि ॥ ८८ ॥

कुवलयाश्व उवाच ।

धन्योऽहमतिपुण्योऽहं कोऽन्योऽस्ति सदृशो मया ।
यत्तातो माममिद्रष्टुं करोति प्रवणं मनः ॥ ८९ ॥
तदुत्तिष्ठत गच्छामस्तामाज्ञां क्षणमप्यहं ।
नातिक्रान्तुमिहेच्छामि पद्भ्यां तस्य शपाम्यहं ॥ ९० ॥

जड उवाच ।

एवमुक्त्वा ययौ सोऽथ सह ताभ्यां नृपात्मजः ।
प्राप्तश्च गोमतीं पुण्यां निर्गम्य नगराद्बहिः ॥ ९१ ॥

तन्मध्येन ययुस्ते वै नागेन्द्रनृपनन्दनाः ।
मेने च राजपुत्त्रोऽसौ पारे तस्यास्तयोर्गृहं ॥ ९२ ॥
ततश्चाकृष्य पातालं ताभ्यां नीतो नृपात्मजः ।
पाताले ददृशे चोभौ स पन्नगकुमारकौ ॥ ९३ ॥
फणामणिकृतोद्योतौ व्यक्तस्वस्तिकलक्षणौ ।
विलोक्य तौ सुरूपाङ्गौ विस्मयोत्फुल्ललोचनः ॥ ९४ ॥
विहस्य चाब्रवीत् प्रेम्णा साधु भो द्विजसत्तमौ ।
कथयामासतुस्तौ च पितरं पन्नगेश्वरं ॥ ९५ ॥
शान्तमश्वतरं नाम माननीयं दिवौकसां ।
रमणीयं ततोऽपश्यत् पातालं स नृपात्मजः ॥ ९६ ॥
कुमारैस्तरुणैर्वृद्धैरुरगैरुपशोभितं ।
तथैव नागकन्याभिः क्रीडन्तीभिरितस्ततः ॥ ९७ ॥
चारुकुण्डलहाराभिस्ताराभिर्गगणं यथा ।
गीतशब्दैस्तथान्यत्र वीणावेणुस्वनानुगैः ॥ ९८ ॥
मृदङ्गपणवातोद्यं हारिवेश्मशताकुलं ।
वीक्षमाणः स पातालं ययौ शत्रुजितः सुतः ॥ ९९ ॥
सह ताभ्यामभीष्टाभ्यां पन्नगाभ्यामरिन्दमः ।
ततः प्रविश्य ते सर्व्वे नागराजनिवेशनं ॥ १०० ॥
ददृशुस्ते महात्मानमुरगाधिपतिं स्थितं ।
दिव्यमाल्याम्बरधरं मणिकुण्डलभूषणं ॥ १०१ ॥
स्वच्छमुक्ताफललताहारिहारोपशोभितं ।
केयूरिणं महाभागमासने सर्व्वकाञ्चने ॥ १०२ ॥

मणिविद्रुमवैदूर्य्यजालान्तरितरूपकौ ।
स ताभ्यां दर्शितस्तस्य तातोऽस्माकमसाविति ॥ १०३ ॥
वीरः कुवलयाश्वोऽयं पित्रे चासौ निवेदितः ।
ततो ननाम चरणौ नागेन्द्रस्य कृतध्वजः ॥ १०४ ॥
समुत्थाप्य बलाद्गाढं नागेन्द्रः परिषस्वजे ।
मूर्द्धि चैनमुपाघ्राय चिरं जीवेत्युवाच सः ॥ १०५ ॥
निहतामित्रवर्गश्च पित्रोः शुश्रूषणं कुरु ।
वत्स धन्यस्य कथ्यन्ते परोक्षस्यापि ते गुणाः ॥ १०६ ॥
भवतो मम पुत्राभ्यामसामान्या निवेदिताः ।
त्वमेवानेन वर्द्धया मनोवाक्कायचेष्टितैः ॥ १०७ ॥
जीवितं गुणिनः श्लाघ्यं जीवन्नेव मृतोऽगुणः ।
गुणवान्निर्वृतिं पित्रोः शत्रूणां हृदयज्वरं ॥ १०८ ॥
करोत्यात्महितं कुर्व्वन् विश्वासञ्च महाजने ।
देवताः पितरो विप्रा मित्रार्थिविकलादयः ॥ १०९ ॥
बान्धवाश्च तथेच्छन्ति जीवितं गुणिनश्चिरं ।
परिवादनिवृत्तानां दुर्गतेषु दयावतां ॥
गुणिनां सफलं जन्म संश्रितानां विपत्कृतैः ॥ ११० ॥

जड उवाच ॥

एवमुक्त्वा स तं वीरं पुत्राविदमथाब्रवीत् ।
पूजां कुवलयाश्वस्य कर्त्तुकामो भुजङ्गमः ॥ १११ ॥
स्नानादिकक्रमं कृत्वा सर्व्वमेव यथाक्रमं ।
मधुपानादिसम्भोगमाहारञ्च यथेप्सितं ॥ ११२ ॥

ततः कुवलयाश्वेन हृदयोत्सवभूतया ।
कथया स्वल्पकं कालं स्थास्यामो हृष्टचेतसः ॥ ११३ ॥
अनुमेने च तन्मौनी वचः शत्रुजितः सुतः ।
तथा चकार नृपतिः पन्नगानामुदारधीः ॥ ११४ ॥
समेत्य तैरात्मजभूपनन्दनै
र्महोरगाणामधिपः स सत्यवाक् ।
मुदान्वितोऽन्नानि मधूनि चात्मवान्
यथोपयोगं बुभुजे स भोगभुक् ॥ ११५ ॥

इति श्रीमार्कण्डेयपुराणे मदालसोपाख्याने कुवलयाश्वपाताल-
गमनं ॥ २३ ॥

चतुर्विंशोऽध्यायः ॥



जड उवाच ॥

कृताहारं महात्मानमधिपं पवनाशिनां ।
उपासाञ्चक्रिरे पुत्रौ भूपालतनयस्तथा ॥ १ ॥
कथाभिरनुरूपाभिः स महात्मा भुजङ्गमः ।
प्रीतिं सञ्जनयामास पुत्रसख्युरुवाच च ॥ २ ॥
तव भद्र सुखं ब्रूहि गेहमभ्यागतस्य यत् ।
कर्त्तव्यमुत्सृजाशङ्कां पितरीव सुतो मयि ॥ ३ ॥
रजतं वा सुवर्णं वा वस्त्रं वाहनमासनं ।
यद्वाभिमतमत्यर्थं दुर्लभं तद्वृणुष्व मां ॥ ४ ॥

कुवलयाश्व उवाच ॥

॥ प्रसादाद्भगवन् सुवर्णादि गृहे मम ।
तुरस्ति ममाद्यापि न किञ्चित् कार्य्यमीदृशं ॥ ५ ॥
ते वर्षसहस्राणि शासतीमां वसुन्धरां ।
थैव त्वयि पातालं न मे याच्ञोन्मुखं मनः ॥ ६ ॥
स्वर्ग्याश्च सुपुण्याश्च येषां पितरि जीवति ।
णकोटिसमं वित्तं तारुण्याद्धितकोटिषु ॥ ७ ॥
रचाणि तुल्यशिष्टानि तद्दहेहमनामयं ।
निता ध्रियते वित्तं यौवनं किन्तु नास्ति मे ॥ ८ ॥
सत्यर्थे न्तृणां याच्ञा प्रवणं जायते मनः ।
त्यशेषे कथं याच्ञां मम जिह्वा करिष्यति ॥ ९ ॥
र्न चिन्त्यं धनं किञ्चिन्मम गेहेऽस्ति नास्ति वा ।
तृबाहुतरुच्छायां संश्रिताः सुखिनो हि ते ॥ १० ॥
तु बाल्यात् प्रभृत्येव विना पित्रा कुटुम्बिनः ।
सुखास्वादविभ्रंसान्मन्ये धात्रैव वञ्चिताः ॥ ११ ॥
द्दयं त्वत्प्रसादेन धनरत्नादिसञ्चयान् ।
पतृमुक्तान् प्रयच्छामः कामतो नित्यमर्थिनां ॥ १२ ॥
त्सर्व्वमिह संप्राप्तं यदङ्घ्रियुगलं तव ।
मच्चूडामणिना स्पृष्टं यच्चाङ्गस्पर्शमाप्तवान् ॥ १३ ॥

जड उवाच ॥

त्येवं प्रश्रितं वाक्यमुक्तः पन्नगसत्तमः ।
प्राह राजसुतं प्रीत्या पुत्रयोरुपकारिणं ॥ १४ ॥

नाग उवाच ॥

यदि रत्नसुवर्णादि मत्तोऽवाप्तुं न ते मनः ।
यदन्यम्मनसः प्रीत्यै तद्ब्रूहि त्वं ददाम्यहं ॥ १५ ॥

कुवलयाश्व उवाच ॥

भगवंस्त्वत्प्रसादेन प्रार्थितस्य गृहे मम ।
सर्व्वमस्ति विशेषेण संप्राप्तं तव दर्शनात् ॥ १६ ॥
कृतकृत्योऽस्मि चैतेन सफलं जीवितञ्च मे ।
यदङ्गसंश्लेषमितस्तव देवस्य मानुषः ॥ १७ ॥
ममोत्तमाङ्गे त्वत्पादरजसा यदिहास्पदं ।
कृतं तेनैव न प्राप्तं किं मया पन्नगेश्वर ॥ १८ ॥
यदि त्ववश्यं दातव्यो वरो मम यथेप्सितः ।
तत्पुण्यकर्म्मसंस्कारो हृदयान्मा व्यपैतु मे ॥ १९ ॥
सुवर्णमणिरत्नादि वाहनं गृहमासनं ।
स्त्रियोऽन्नपानं पुत्राश्च चारुमाल्यानुलेपनं ॥ २० ॥
एते च विविधाः कामा गीतवाद्यादिकञ्च यत् ।
सर्व्वमेतन्मम मतं फलं पुण्यवनस्पतेः ॥ २१ ॥
तस्मान्नरेण तन्मूलः कार्य्यो यत्नः कृतात्मना ।
कर्त्तव्यः पुण्यसक्तानां नकिञ्चिद्भुवि दुर्ल्लभं ॥ २२ ॥

अश्वतर उवाच ॥

एवं भविष्यति प्राज्ञ तव धर्म्माश्रिता मतिः ।
सत्यश्चैतत्फलं सर्व्वं धर्म्मस्योक्तं यथा त्वया ॥ २३ ॥
तथाप्यवश्यं मद्गेहमागतेन त्वयाधुना ।

ग्राह्यं यन्मानुषे लोके दुष्प्रापं भवतो मतं ॥ २४ ॥

जड उवाच ॥

तस्यैतद्वचनं श्रुत्वा स तदा नृपनन्दनः ।
मुखावलोकनञ्चक्रे पन्नगेश्वरपुत्रयोः ॥ २५ ॥
ततस्तौ प्रणिपत्योभौ राजपुत्रस्य यन्मतं ।
तत् पितुः सकलं वीरौ कथयामासतुः स्फुटं ॥ २६ ॥

पुत्रावूचतुः ॥

ततोऽस्य पत्नी दयिता श्रुत्वेमं विनिपातितं ।
अत्यजद्दयितान् प्राणान् विप्रलब्धा दुरात्मना ॥ २७ ॥
केनापि कृतवैरेण दानवेन कुबुद्धिना ।
गन्धर्व्वराजस्य सुता नाम्ना ख्याता मदालसा ॥ २८ ॥
कृतज्ञोऽयं ततस्तात प्रतिज्ञां कृतवानिमां ।
नान्या भार्य्या भवित्रीति वर्जयित्वा मदालसां ॥ २९ ॥
द्रष्टुं तां चारुसर्व्वाङ्गीमयं वीर ऋतध्वजः ।
तात वाञ्छति यद्येतत् क्रियते तत्कृतं भवेत् ॥ ३० ॥

अश्वतर उवाच ॥

भूतैर्वियोगिनो योगस्तादृशैरेव तादृशः ।
कथमेतद्विना स्वप्नं मायां वा शम्बरोदितां ॥ ३१ ॥

जड उवाच ॥

प्रणिपत्य भुजङ्गेशं पुत्रः शत्रुजित्स्ततः ।
प्रत्युवाच महात्मानं प्रेमलज्जासमन्वितः ॥ ३२ ॥
मायामयीमप्यधुना मम तात मदालसां ।

यदि दर्शय ते मन्ये परं कृतमनुग्रहं ॥ ३३ ॥

अश्वतर उवाच ॥

तस्मात् पश्येह वत्स त्वं मायाञ्चेद् द्रष्टुमिच्छसि।
अनुपाद्यो भवान् गेहं बालोऽप्यभ्यागतो गुरुः ॥ ३४ ॥

जड उवाच ॥

आनयामास नागेन्द्रो गृहगुप्तां मदालसां।
तेषां सम्मोहनार्थाय जजल्प च ततः स्फुटं ॥ ३५ ॥
दर्शयामास च तदा राजपुत्राय तां शुभां।
सेयं न वेति ते भार्य्या राजपुत्र मदालसा ॥ ३६ ॥

जड उवाच ॥

स दृष्ट्वा तां तदा तन्वीं तत्क्षणात् विगतत्रपः।
प्रियेति तामभिमुखं ययौ वाचमुदीरयन् ॥
निवारयामास च तं नागः सोऽश्वतरस्त्वरन् ॥ ३७ ॥

अश्वतर उवाच ॥

मायेयं पुत्र मास्प्राक्षीः प्रागेव कथितं तव।
अन्तर्द्धानमुपैत्याशु माया संस्पर्शनादिभिः ॥ ३८ ॥
ततः पपात मेदिन्यां स तु मूर्च्छापरिप्लुतः।
हा प्रियेति वदन् सोऽथ चिन्तयामास भाविनीं ॥ ३९ ॥
अहो स्नेहोऽस्य नृपतेर्म्ममोपर्य्यचलं मनः।
येनायं पातनोऽरीणां विना शस्त्रेण पातितः ॥ ४० ॥
मायेति दर्शिता तेन मिथ्या मायेति यत् स्फुटं।
वायम्बुतेजसां भूमेराकाशस्य च चेष्टया ॥ ४१ ॥

जड उवाच ॥

ततः कुवलयाश्वं तं समाश्वास्य भुजङ्गमः ।
कथयामास तत्सर्व्वं मृतसञ्जीवनादिकं ॥ ४२ ॥
ततः प्रहृष्टः प्रतिलभ्य कान्तां
प्रणम्य नागं निजगाम सोऽथ ।
सुशोभमानः स्वपुरं तमश्व-
मारुह्य संचिन्तितमभ्युपेतं ॥ ४३ ॥

इति श्रीमार्कण्डेयपुराणे मदालसा प्राप्तिः ॥ २४ ॥

पञ्चविंशोऽध्यायः ।



जड उवाच ।

आगम्य स्वपुरं सोऽथ पित्रोः सर्व्वमशेषतः ।
कथयामास तन्वङ्गी यथा प्राप्ता पुनर्म्मृता ॥ १ ॥
ननाम सा च चरणौ श्वश्रूश्वशुरयोः शुभा ।
स्वजनञ्च यथापूर्व्वं वन्दनाश्लेषणादिभिः ॥ २ ॥
पूजयामास तन्वङ्गी यथान्यायं यथावयः ।
ततो महोत्सवो जज्ञे पौराणां तत्र वै पुरे ॥ ३ ॥
ऋतध्वजश्च सुचिरं तया रेमे सुमध्यया ।
निर्झरेषु च शैलानां निम्नगापुलिनेषु च ॥ ४ ॥
काननेषु च रम्येषु तथैवोपवनेषु च ।
पुण्यक्षयं वाञ्छमाना सापि कामोपभोगतः ॥ ५ ॥

स तेनातिकान्तेन रेमे रम्यासु भूमिषु।
ततः कालेन महता शत्रुजित् स नराधिपः ॥ ६ ॥
सम्यक् प्रशास्य वसुधां कालधर्ममुपेयिवान्।
ततः पौरा महात्मानं पुत्रं तस्य ऋतध्वजं ॥ ७ ॥
अभ्यषिञ्चन्त राजानमुदाराचारचेष्टितं।
सम्यक् पालयतस्तस्य प्रजाः पुत्रानिवौरसान् ॥ ८ ॥
मदालसायाः सञ्जज्ञे पुत्रः प्रथमजस्ततः।
तस्य चक्रे पिता नाम विक्रान्त इति धीमतः ॥ ९ ॥
तुतुषुस्तेन वै भृत्या जहास च मदालसा।
सा वै मदालसा पुत्रं बालमुत्तानशायिनं ॥
उल्लापनच्छलेनाह रुदमानमविस्वरं ॥ १० ॥

शुद्धोऽसि रे तात न तेऽस्ति नाम
कृतं हि ते कल्पनयाधुनैव।
पञ्चात्मकं देहमिदं तवैत-
न्नैवास्य त्वं रोदिषि कस्य हेतोः ॥ ११ ॥
न वा भवान्रोदिति वै स्वजन्मा
शब्दोऽयमासाद्य महीशसूनुं।
विकल्प्यमाना विविधा गुणास्ते
ऽगुणाश्च भौताः सकलेन्द्रियेषु ॥ १२ ॥
भूतानि भूतैः परिदुर्ब्बलानि
वृद्धिं समायान्ति यथेह पुंसः।
अन्नाम्बुदानादिभिरेव कस्य

न तेऽस्तिवृद्धिर्न च तेऽस्ति हानिः ॥ ॥ १३ ॥
त्वं कञ्चुके शीर्य्यमाणे निजेऽस्मिं-
स्तस्मिंश्च देहे मूढतां मा व्रजेथाः ।
शुभाशुभैः कर्म्मभिर्देहमेत-
न्मदादिमूढैः कञ्चुकस्तेपि नद्धः ॥ १४ ॥
तातेति किञ्चित्तनयेति किञ्चि-
दम्बेति किञ्चिद्दयितेति किञ्चित् ।
ममेति किञ्चिन्न ममेति किञ्चित्
त्वं भूतसङ्घं बहु मानयेथाः ॥ १५ ॥
दुःखानि दुःखोपशमाय भोगान्
सुखाय जानाति विमूढचेताः ।
तान्येव दुःखानि पुनः सुखानि
जानात्यविद्वान् सुविमूढचेताः ॥ १६ ॥
हासोऽस्थिसन्दर्शनमक्षियुग्म-
मत्युज्ज्वलं तर्जनमङ्गनायाः ।
कुचादि पीनं पिशितं घनं तत्
स्थानं रतेः किं नरकं न योषित् ॥ १७ ॥
यानं क्षितौ यानगतश्च देहं
देहेऽपि चान्यः पुरुषो निविष्टः ।
ममत्वबुद्धिर्न तथा यथा स्वे
देहेऽतिमात्रं बत मूढतैषा ॥ १८ ॥

इति श्रीमार्कण्डेयपुराणे मदालसोपाख्याने ॥ २५ ॥

षड्विंशोऽध्यायः ।



जड उवाच ।

वर्द्धमानं सुतं सा तु राजपत्नी दिने दिने ।
तमुल्लापादिना बोधमनयन्निर्ममात्मकं ॥ १ ॥
यथायथं बलं लेभे यथा लेभे मतिं पितुः ।
तथा तथात्मबोधञ्च सोऽवाप मातृभाषितैः ॥ २ ॥
इत्थं तया स तनयो जन्मप्रभृति बोधितः ।
चकार न मतिं प्राज्ञो गार्हस्थ्यं प्रति निर्ममः ॥ ३ ॥
द्वितीयोऽस्याः सुतो जज्ञे तस्य नामाकरोत्पिता ।
सुबाहुरयमित्युक्ते सा जहास मदालसा ॥ ४ ॥
तमप्येवं यथापूर्वं बालमुल्लापनादिना ।
प्राह बाल्यात् स च प्राप तथा बोधं महामतिः ॥ ५ ॥
तृतीयं तनयं जातं स राजा शत्रुमर्द्दनं ।
यदाह तेन सा सुभ्रूर्जहासातिचिरं पुनः ॥ ६ ॥
तथैव सोऽपि तन्वङ्ग्या बालत्वादवबोधितः ।
क्रियाश्चकार निष्कामो न किञ्चिदुपकारकं ॥ ७ ॥
चतुर्थस्य सुतस्याथ चिकीर्षुर्नाम भूमिपः ।
ददर्श तां शुभाचारामीषद्धासां मदालसां ॥
तामाह राजा हसतीं किञ्चित् कौतूहलान्वितः ॥ ८ ॥

राजोवाच ।

क्रियमाणे सकृन्नाम्नि कथ्यतां हास्यकारणं ।

विक्रान्तश्च सुबाहुश्च तथान्यः शत्रुमर्द्दनः ॥ ९ ॥
शोभनानीति नामानि मया मन्ये कृतानि वै ।
योग्यानि क्षत्रबन्धूनां शौर्य्याटोपयुतानि च ॥ १० ॥
असन्त्येतानि चेद्भद्रे यदि ते मनसि स्थितं ।
तदस्य क्रियतां नाम चतुर्थस्य सुतस्य मे ॥ ११ ॥

मदालसोवाच ।

मयाज्ञा भवतः कार्य्या महाराज यथात्थ मां ।
तथा नाम करिष्यामि चतुर्थस्य सुतस्य ते ॥ १२ ॥
अलर्क इति धर्म्मज्ञः ख्यातिं लोके प्रयास्यति ।
कनीयानेष ते पुत्रो मतिमांश्च भविष्यति ॥ १३ ॥
तच्छ्रुत्वा नाम पुत्रस्य कृतं मात्रा महीपतिः ।
अलर्क इत्यसम्बद्धं प्रहस्येदमथाब्रवीत् ॥ १४ ॥

राजोवाच ।

भवत्या यदिदं नाम मत्पुत्रस्य कृतं शुभे ।
किमीदृशमसम्बद्धमर्थः कोऽस्य मदालसे ॥ १५ ॥

मदालसोवाच ।

कल्पनेयं महाराज कृता सा व्यवहारिकी ।
त्वत्कृतानां तथा नाम्नां शृणु भूप निरर्थतां ॥ १६ ॥
वदन्ति पुरुषाः प्राज्ञा व्यापिनं पुरुषं यतः ।
क्रान्तिश्च गतिरुद्दिष्टा देशाद्देशान्तरन्तु या ॥ १७ ॥
सर्व्वगो न प्रयातीति व्यापी देहेश्वरो यतः ।
ततो विक्रान्तसंज्ञेयं मता मम निरर्थिका ॥ १८ ॥

सुबाहुरिति या संज्ञा कृतान्यस्य सुतस्य ते।
निरर्था साप्यमूर्त्तत्वात् पुरुषस्य महीपते ॥ १९ ॥
पुत्त्रस्य यत्कृतं नाम तृतीयस्यारिमर्द्दनः।
मन्ये तदप्यसम्बद्धं शृणु चाप्यत्र कारणं ॥ २० ॥
एक एव शरीरेषु सर्व्वेषु पुरुषो यदा।
तदास्य राजन् कः शत्रुः को वा मित्त्रमिहेष्यते ॥ २१ ॥
भूतैर्भूतानि मृद्यन्ते अमूर्त्तो मृद्यते कथं।
क्रोधादीनां पृथग्भावात् कल्पनेयं निरर्थका ॥ २२ ॥
यदि संव्यवहारार्थमसन्नाम प्रकल्प्यते।
नाम्नि कस्मादलर्काख्ये नैरर्थ्यं भवतो मतं ॥ २३ ॥

जड उवाच ॥

एवमुक्तस्तया साधु महिष्या स महीपतिः।
तथेत्याह महाबुद्धिर्दयितां तथ्यवादिनीं ॥ २४ ॥
तस्यापि सा सुतं सुभ्रूर्यथापूर्व्वसुतांस्तथा।
प्रोवाच बोधजननं तामुवाच स पार्थिवः ॥ २५ ॥
करोषि किमिदं मूढे मम भावाय सन्ततेः।
दुष्टावबोधदानेन यथापूर्व्वं सुतेषु मे ॥ २६ ॥
यदि ते मत्प्रियं कार्य्यं यदि ग्राह्यं वचो मम।
तदेनं तनयं मार्गे प्रवृत्तेः सन्नियोजय ॥ २७ ॥
कर्म्ममार्गः समुच्छेदं नैवं देवि गमिष्यति।
पितृपिण्डनिवृत्तिश्च नैवं साध्वि भविष्यति ॥ २८ ॥
पितरो देवलोकस्थास्तथा तिर्य्यक्त्वमागताः।

तद्वन्मनुष्यतां याता भूतवर्गे च संस्थिताः ॥ २९ ॥
सपुण्यानसपुण्यांश्च क्षुत्क्षामान् तृट्परिप्लुतान् ।
पिण्डोदकप्रदानेन नरः कर्म्मण्यवस्थितः ॥ ३० ॥
सदाप्याययते सुभ्रु तद्वद्देवातिथीनपि ।
देवैर्मनुष्यैः पितृभिः प्रेतैर्भूतैः सगुह्यकैः ॥ ३१ ॥
वयोभिः कृमिकीटैश्च नर एवोपजीव्यते ।
तस्मात्तन्वङ्गि पुत्रं मे यत्कार्य्यं क्षत्रयोनिभिः ॥ ३२ ॥
ऐहिकामुष्मिकफलं तत्सम्यक् प्रतिपादय ।
तेनैवमुक्ता सा भर्त्रा वरनारी मदालसा ॥ ३३ ॥
अलर्कं नाम तनयमुवाचोल्लापवादिनी ।
पुत्र वर्द्धस्व मद्भर्त्तुर्मनो नन्दय कर्म्मभिः ॥
मित्राणामुपकाराय दुर्हृदां नाशनाय च ॥ ३४ ॥

धन्योऽसि रे यो वसुधामशत्रु-
रेकश्चिरं पालयितासि पुत्र ।
तत्पालनादस्तु सुखोपभोगो
धर्म्मात्फलं प्राप्स्यसि चामरत्वं ॥ ३५ ॥
धरामरान् पर्व्वसु तर्पयेथाः
समीहितं बन्धुषु पूरयेथाः ।
हितं परस्मै हृदि चिन्तयेथाः
मनः परस्त्रीषु निवर्त्तयेथाः ॥ ३६ ॥
यज्ञैरनेकैर्विबुधानजस्र-
मर्थैर्द्विजान् प्रीणय संश्रितांश्च ।

स्त्रियश्च कामैरतुलैश्चिराय
युद्धैश्चारींस्तोषयितासि वीर ॥ ३७ ॥
बालो मनो नन्दय बान्धवानां
गुरोस्तथाज्ञाकरणैः कुमारः ।
स्त्रीणां युवा सत्कुलभूषणानां
वृद्धो वने वत्स वनेचराणां ॥ ३८ ॥
राज्यं कुर्व्वन् सुहृदो नन्दयेथाः
साधून्रक्षंस्तात यज्ञैर्यजेथाः ।
दुष्टान्निघ्नन् वैरिणश्चाजिमध्ये
गोविप्रार्थे वत्स मृत्युं व्रजेथाः ॥ ३९ ॥

इति श्रीमार्कण्डेयपुराणे पुत्रानुशासनं ॥ २६ ॥

सप्तविंशोऽध्यायः ॥



जड उवाच ॥

एवमुल्लाप्यमानस्तु स तु माचा दिने दिने ।
ववृधे वयसा बालो बुद्ध्या चालर्कसंज्ञितः ॥ १ ॥
स कौमारकमासाद्य ऋतध्वजसुतस्ततः ।
कृतोपनयनः प्राज्ञः प्रणिपत्याह मातरं ॥ २ ॥
मया यदच कर्त्तव्यमैहिकामुष्मिकाय वै ।
सुखाय वद तत्सर्व्वं प्रश्रयावनतस्य मे ॥ ३ ॥

मदालसोवाच ।

वत्स राज्येऽभिषिक्तेन प्रजारञ्जनमादितः ।
कर्त्तव्यमविरोधेन स्वधर्म्मस्य महीभृता ॥ ४ ॥
व्यसनानि परित्यज्य सप्त मूलहराणि वै ।
आत्मा रिपुभ्यः संरक्ष्यो वहिर्म्मन्त्रविनिर्गमात् ॥ ५ ॥
अष्टधा नाशमाप्नोति सुचक्रात् स्यन्दनाद्यथा ।
तथा राजाप्यसन्दिग्धं वहिर्म्मन्त्रविनिर्गमात् ॥ ६ ॥
दुष्टादुष्टांश्च जानीयादमात्यानरिदोषतः ।
चरैश्चरास्तथा शत्रोरन्वेष्टव्याः प्रयत्नतः ॥ ७ ॥
विश्वासो न तु कर्त्तव्यो राज्ञा मित्राप्तबन्धुषु ।
कार्य्ययोगादमित्रेऽपि विश्वसीत नराधिपः ॥ ८ ॥
स्थानवृद्धिक्षयज्ञेन षाड्गुण्यगुणिनात्मना ।
भवितव्यं नरेन्द्रेण न कामवशवर्त्तिना ॥ ९ ॥
प्रागात्मा मन्त्रिणश्चैव ततो भृत्या महीभृता ।
जेयाश्चानन्तरं पौरा विरुध्येत ततोऽरिभिः ॥ १० ॥
यस्त्वेतानविजित्यैव वैरिणो विजिगीषते ।
सोऽजितात्मा जितामात्यः शत्रुवर्गेण बाध्यते ॥ ११ ॥
तस्मात् कामादयः पूर्व्वं जेयाः पुत्र महीभुजा ।
तज्जये हि जयोऽवश्यं राजा नश्यति तैर्जितः ॥ १२ ॥
कामः क्रोधश्च लोभश्च मदो मानस्तथैव च ।
हर्षश्च शत्रवो ह्येते विनाशाय महीभृतां ॥ १३ ॥
कामप्रसक्तमात्मानं स्मृत्वा पाण्डुं निपातितं ।

निवर्त्तयेत्तथा क्रोधादनुह्लादं हतात्मजं ॥ १४ ॥
हतमैलं तथा लोभान्मदाद्वेनं द्विजैर्हतं ।
मानादनायुषा पुत्रं बलिं हर्षात् पुरञ्जयं ॥ १५ ॥
एभिर्जितैर्जितं सर्व्वं मरुत्तेन महात्मना ।
स्मृत्वा विवर्जयेदेतान् दोषान् स्वीयान्महीपतिः ॥ १६ ॥
काककोकिलभृङ्गाणां मृगव्यालशिखण्डिनां ।
हंसकुक्कुटलोहानां शिक्षेत चरितं नृपः ॥ १७ ॥
कीटकस्य क्रियां कुर्य्यात् विपक्षे मनुजेश्वरः ।
चेष्टां पिपीलिकानाञ्च काले भूपः प्रदर्शयेत् ॥ १८ ॥
ज्ञेयाग्निविस्फुलिङ्गानां वीजचेष्टा च शाल्मलेः ।
चन्द्रसूर्य्यस्वरूपेण नीत्यर्थे पृथिवीक्षिता ॥ १९ ॥
बन्धकीपद्मशरभशूलिकागुर्व्विणीस्तनात् ।
प्रज्ञा नृपेण चादेया तथा गोपालयोषितः ॥ २० ॥
शक्रार्कयमसोमानां तद्वद्वायोर्महीपतिः ।
रूपाणि पञ्च कुर्व्वीत महीपालनकर्म्मणि ॥ २१ ॥
यथेन्द्रश्चतुरो मासान् तोयोत्सर्गेण भूगतं ।
आप्याययेत्तथा लोकं परिहारैर्महीपतिः ॥ २२ ॥
मासानष्टौ यथा सूर्य्यस्तोयं हरति रश्मिभिः ।
सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादिकं नृपः ॥ २३ ॥
यथा यमः प्रियद्वेष्ये प्राप्तकाले नियच्छति ।
तथा प्रियाप्रिये राजा दुष्टादुष्टे समो भवेत् ॥ २४ ॥
पूर्णेन्दमालोक्य यथा प्रीतिमान् जायते नरः ।

एवं यत्र प्रजाः सर्व्वा निर्वृतास्तच्छशिव्रतं ॥ २५ ॥
मारुतः सर्व्वभूतेषु निगूढश्चरते यथा ।
एवं नृपश्चरेच्चारैः पौरामात्यादिबन्धुषु ॥ २६ ॥
न लोभाद्वा न कामाद्वा नार्थाद्वा यस्य मानसं ।
यथान्यैः कृष्यते वत्स स राजा स्वर्गमृच्छति ॥ २७ ॥
उत्पथग्राहिणो मूढान् स्वधर्माच्चलतो नरान् ।
यः करोति निजे धर्म्मे स राजा स्वर्गमृच्छति ॥ २८ ॥
वर्णधर्म्मा न सीदन्ति यस्य राज्ये तथाश्रमाः ।
वत्स तस्य सुखं प्रेत्य परत्रेह च शाश्वतं ॥ २९ ॥
एतद्राज्ञः परं कृत्यं तथैतत् सिद्धिकारकं ।
स्वधर्म्मस्थापनं नृणां चाल्यते यत्कुबुद्धिभिः ॥ ३० ॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः ।
सम्यक् पालयिता भागं धर्म्मस्याप्नोति यत्नतः ॥ ३१ ॥

इति श्रीमार्कण्डेयपुराणे पुत्रानुशासनं ॥ २७ ॥

---

सप्तविंशोऽध्यायः ।

अह उवाच ।

तन्मातुर्व्वचनं श्रुत्वा सोऽलर्को मातरं पुनः ।
पप्रच्छ वर्णधर्म्मांश्च धर्म्मा ये चाश्रमेषु च ॥ १ ॥

अलर्क उवाच ।

कथितोऽयं महाभागे राज्यतन्त्राश्रितस्त्वया ।
धर्म्मं तमहमिच्छामि श्रोतुं वर्णाश्रमात्मकं ॥ २ ॥

मदालसोवाच ।

दानमध्ययनं यज्ञो ब्राह्मणस्य त्रिधा मतः ।
नान्यश्चतुर्थो धर्म्मोऽस्ति धर्म्मस्तस्य पदं विना ॥ ३ ॥
याजनाध्यापने शुद्धे तथा पूतप्रतिग्रहः ।
एषा सम्यक् समाख्याता त्रिविधा चास्य जीविका ॥ ४ ॥
दानमध्ययनं यज्ञः क्षत्रियस्याप्ययं त्रिधा ।
धर्म्मः प्रोक्तः क्षितेरक्षा शस्त्राजीवश्च जीविका ॥ ५ ॥
दानमध्ययनं यज्ञो वैश्यस्यापि त्रिधैव सः ।
वाणिज्यं पाशुपाल्यञ्च कृषिश्चैवास्य जीविका ॥ ६ ॥
दानं यज्ञोऽथ शुश्रूषा द्विजातीनां त्रिधा मया ।
व्याख्यातः शूद्रधर्म्मोऽपि जीविका कारुकर्म्म च ॥ ७ ॥
तद्वद्द्विजातिशुश्रूषा पोषणं क्रयविक्रयौ ।
वर्णधर्म्मास्त्विमे प्रोक्ताः श्रूयन्तां चाश्रमाश्रयाः । ८ ॥
स्ववर्णधर्म्मात् संसिद्धिं नरः प्राप्नोति न च्युतः ।
प्रयाति नरकं प्रेत्य प्रतिषिद्धनिषेवनात् ॥ ९ ॥
यावत्तु नोपनयनं क्रियते वै द्विजन्मनः ।
कामचेष्टोक्तिभक्ष्यस्तु तावद्भवति पुत्रक ॥ १० ॥
कृतोपनयनः सम्यक् ब्रह्मचारी गुरोर्गृहे ।
वसेत्तत्र च धर्म्मोऽस्य कथ्यते तं निबोध मे ॥ ११ ॥

स्वाध्यायोऽग्न्यग्निशुश्रूषा स्नानं भिक्षाटनं तथा ।
गुरोर्निवेद्य तच्चान्नमनुज्ञातेन सर्व्वदा ॥ १२ ॥
गुरोः कर्म्मणि सोद्योगः सम्यक् प्रीत्युपपादनं ।
तेनाहूतः पठेच्चैव तत्परो नान्यमानसः ॥ १३ ॥
एकं द्वौ सकलान् वापि वेदान् प्राप्य गुरोर्मुखात् ।
अनुज्ञातोऽथ वन्दित्वा दक्षिणां गुरवे ततः ॥ १४ ॥
गार्हस्थ्याश्रमकामस्तु गृहस्थाश्रममावसेत् ।
वानप्रस्थाश्रमं वापि चतुर्थं चेच्छयात्मनः ॥ १५ ॥
तत्रैव वा गुरोर्गेहे द्विजो निष्ठामवाप्नुयात् ।
गुरोरभावे तत्पुत्रे तच्छिष्ये तत्सुतं विना ॥ १६ ॥
शुश्रूषुर्निरभीमानो ब्रह्मचर्य्याश्रमं वसेत् ।
उपावृत्तस्ततस्तस्मात् गृहस्थाश्रमकाम्यया ॥ १७ ॥
ततोऽसमानर्षिकुलां तुल्यां भार्य्यामरोगिणीं ।
उद्वहेन्न्यायतोऽव्यङ्गां गृहस्थाश्रमकारणात् ॥ १८ ॥
स्वकर्म्मणा धनं लब्ध्वा पितृदेवातिथींस्तथा ।
सम्यक् सम्प्रीणयन् भक्त्या पोषयेच्चाश्रितांस्तथा ॥ १९ ॥
भृत्यात्मजान् जामयोऽथ दीनान्धपतितानपि ।
यथाशक्त्यान्नदानेन वयांसि पशवस्तथा ॥ २० ॥
एष धर्म्मो गृहस्थस्य ऋतावभिगमस्तथा ।
पञ्चयज्ञविधानन्तु यथाशक्त्या न हापयेत् ॥ २१ ॥
पितृदेवातिथिज्ञातिभुक्तशेषं स्वयं नरः ।
भुञ्जीत च समं भृत्यैर्यथाविभवमादृतः ॥ २२ ॥

एष तूद्देशतः प्रोक्तो गृहस्थस्याश्रमो मया ।
वानप्रस्थस्य धर्मन्ते कथयाम्यवधार्य्यतां ॥ ॥
अपत्यसन्ततिं दृष्ट्वा प्राज्ञो देहस्य चानतिं ।
वानप्रस्थाश्रमं गच्छेदात्मनः शुद्धिकारणात् ॥ २४ ॥
तत्रारण्योपभोगश्च तपोभिश्चानुकर्षणं ।
भूमौ शय्या ब्रह्मचर्य्यं पितृदेवातिथिक्रिया ॥ २५ ॥
होमस्त्रिषवणस्नानं जटावल्कलधारणं ।
योगाभ्यासः सदा चैव वन्यस्नेहनिषेवनं ॥ २६ ॥
इत्येष पापशुद्ध्यर्थमात्मनश्चोपकारकः ।
वानप्रस्थाश्रमस्तस्माद्भिक्षोस्तु चरमोऽपरः ॥ २७ ॥
चतुर्थस्य स्वरूपन्तु श्रूयतामाश्रमस्य मे ।
यः स्वधर्मोऽस्य धर्मज्ञैः प्रोक्तस्तात महात्मभिः ॥ २८ ॥
सर्व्वसङ्गपरित्यागो ब्रह्मचर्य्यमकोपिता ।
यतेन्द्रियत्वमावासे नैकस्मिन् वसतिश्चिरं ॥ २९ ॥
अनारम्भस्तथाहारो भैक्षान्नेनैककालिना ।
आत्मज्ञानावबोधेच्छा तथा चात्मावलोकनं ॥ ३० ॥
चतुर्थे त्वाश्रमे धर्मो मयायं ते निवेदितः ।
सामान्यमन्यवर्णानामाश्रमाणाञ्च मे शृणु ॥ ३१ ॥
सत्यं शौचमहिंसा च अनसूया तथा क्षमा ।
आनृशंस्यमकार्पण्यं सन्तोषश्चाष्टमो गुणः ॥ ३२ ॥
एते सङ्क्षेपतः प्रोक्ता धर्मा वर्णाश्रमेषु ते ।
एतेषु च स्वधर्मेषु स्वेषु तिष्ठेत् समन्ततः ॥ ३३ ॥

यश्चोल्लङ्घ्य स्वकं धर्म्मं स्ववर्णाश्रमसंश्रितं ।
नरोऽन्यथा प्रवर्त्तेत स दण्ड्यो भूभृतो भवेत् ॥ ३४ ॥
ये च स्वधर्म्मसन्त्यागात् पापं कुर्व्वन्ति मानवाः ।
उपेक्षतस्तान्नृपतेरिष्टापूर्त्तं प्रणश्यति ॥ ३५ ॥
तस्माद्राज्ञा प्रयत्नेन सर्व्वे वर्णाः स्वधर्म्मतः ।
प्रवर्त्तन्तोऽन्यथा दण्ड्याः स्थाप्याश्चैव स्वकर्म्मसु ॥ ३६ ॥

इति श्रीमार्कण्डेयपुराणे पुत्रानुशासने मदालसावाक्यं ॥ ३८ ॥

---

## ऊनचत्वारिंशोऽध्यायः ॥



अलर्क उवाच ॥

यत्कार्य्यं पुरुषाणाञ्च गार्हस्थ्यमनुवर्त्ततां ।
बन्धश्च स्यादकरणे क्रियाया यस्य चोच्छितिः ॥ १ ॥
उपकाराय यन्नृणां यच्च वर्ज्यं गृहे सता ।
यथा च क्रियते तन्मे यथावत् पृच्छतो वद ॥ २ ॥

मदालसोवाच ॥

वत्स गार्हस्थ्यमादाय नरः सर्व्वमिदं जगत् ।
पुष्णाति तेन लोकांश्च स जयत्यभिवाञ्छितान् ॥ ३ ॥
पितरो मुनयो देवा भूतानि मनुजास्तथा ।
कृमिकीटपतङ्गाश्च वयांसि पशवोऽसुराः ॥ ४ ॥
गृहस्थमुपजीवन्ति ततस्तृप्तिं प्रयान्ति च ।

मुखं चास्य निरीक्षन्ते अपि नो दास्यतीति वै ॥ ५ ॥
सर्व्वस्याधारभूतेयं वत्स धेनुस्त्रयीमयी ।
यस्यां प्रतिष्ठितं विश्वं विश्वहेतुश्च या मता ॥ ६ ॥
ऋक्पृष्ठासौ यजुर्मध्या सामवक्त्रशिरोधरा ।
इष्टापूर्त्तविषाणा च साधुसूक्ततनूरुहा ॥ ७ ॥
शान्तिपुष्टिशकृन्मूत्रा वर्णपादप्रतिष्ठिता ।
आजीव्यमाना जगतां साक्षया नापचीयते ॥ ८ ॥
स्वाहाकारस्वधाकारौ वषटकारश्च पुत्रक ।
हन्तकारस्तथा चान्यस्तस्यास्तनचतुष्टयं ॥ ९ ॥
स्वाहाकारं स्तनं देवाः पितरश्च स्वधामयं ।
मुनयश्च वषट्कारं देवभूतसुरेतराः ॥ १० ॥
हन्तकारं मनुष्याश्च पिबन्ति सततं स्तनं ।
एवमाप्याययत्येषा वत्स धेनुस्त्रयीमयी ॥ ११ ॥
तेषामुच्छेदकर्त्ता च यो नरोऽत्यन्तपापकृत् ।
स तमस्यन्धतामिस्रे तामिस्रे च निमज्जति ॥ १२ ॥
यश्चेमां मानवो धेनुं स्वैर्वत्सैरमरादिभिः ।
पाययत्युचिते काले स स्वर्गायोपपद्यते ॥ १३ ॥
तस्मात् पुत्र मनुष्येण देवर्षिपितृमानवाः ।
भूतानि चानुदिवसं पोष्याणि स्वतनुर्यथा ॥ १४ ॥
तस्मात् स्नातः शुचिर्भूत्वा देवर्षिपितृतर्पणं ।
प्रजापतेस्तथैवाद्भिः काले कुर्य्यात् समाहितः ॥ १५ ॥
सुमनोगन्धपुष्पैश्च देवानभ्यर्च्य मानवाः ।

ततोऽग्नेस्तर्पणं कुर्य्याद्देयाश्च बलयस्तथा ॥ १६ ॥
ब्रह्मणे गृहमध्ये तु विश्वेदेवेभ्य एव च ।
धन्वन्तरिं समुद्दिश्य प्रागुदीच्यां बलिं क्षिपेत् ॥ १७ ॥
प्राच्यां शक्राय याम्यायां यमाय बलिमाहरेत् ।
प्रतीच्यां वरुणायाथ सोमायोत्तरतो बलिं ॥ १८ ॥
दद्याद्धात्रे विधात्रे च बलिं द्वारे गृहस्य तु ।
अर्य्यम्णोऽथ वहिर्दद्याद्गृहेभ्यश्च समन्ततः ॥ १९ ॥
नक्तञ्चरेभ्यो भूतेभ्यो बलिमाकाशतो हरेत् ।
पितॄणां निर्व्वपेच्चैव दक्षिणाभिमुखस्थितः ॥ २० ॥
गृहस्थस्तत्परो भूत्वा सुसमाहितमानसः ।
ततस्तोयमुपादाय तेष्वेवाचमनाय वै ॥ २१ ॥
स्थानेषु निक्षिपेत् प्राज्ञस्तास्ता उद्दिश्य देवताः ।
एवं गृहबलिं कृत्वा गृहे गृहपतिः शुचिः ॥ २२ ॥
आप्यायनाय भूतानां कुर्य्यादुत्सर्गमादरात् ।
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ॥ २३ ॥
वैश्वदेवं हि नामैतत् सायं प्रातरुदाहृतं ।
आचम्य च ततः कुर्य्यात् प्राज्ञो द्वारावलोकनं ॥ २४ ॥
मुहूर्त्तस्याष्टमं भागमुदीक्ष्योऽप्यतिथिर्भवेत् ।
अतिथिं तत्र सम्प्राप्तमन्नाद्येनोदकेन च ॥ २५ ॥
सम्पूजयेद्यथा शक्ति गन्धपुष्पादिभिस्तथा ।
न मित्रमतिथिं कुर्य्यान्नैकग्रामनिवासिनं ॥ २६ ॥
अज्ञातकुलनामानं तत्कालसमुपस्थितं ।

बुभुक्षुमागतं श्रान्तं याचमानमकिञ्चनं ॥ २७ ॥
ब्राह्मणं प्राहुरतिथिं स पूज्यः शक्तितो बुधैः ।
न पृच्छेद्गोत्रचरणं स्वाध्यायञ्चापि पण्डितः ॥ २८ ॥
शोभनाशोभनाकारं तं मन्येत प्रजापतिं ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ २९ ॥
तस्मिंस्तृप्ते न्ययत्नोत्थादृणान्मुच्येद् गृहाश्रमी ।
तस्मा अदत्वा यो भुङ्क्ते स्वय किल्विषभुङ्नरः ॥ ३० ॥
स पापं केवलं भुङ्क्ते पुरीषञ्चान्यजन्मनि ।
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ॥ ३१ ॥
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ।
अप्यम्बुशाकदानेन यद्वाप्यश्नाति स स्वयं ॥ ३२ ॥
पूजयेत्तु नरः श्रद्धया तेनैवातिथिमादरात् ।
कुर्य्याच्चाहरहः श्राद्धमन्नाद्येनोदकेन च ॥ ३३ ॥
पितॄनुद्दिश्य विप्रांश्च भोजयेद्विप्रमेव वा ।
अन्नस्याग्रं तदुद्धृत्य ब्राह्मणायोपपादयेत् ॥ ३४
भिक्षाञ्च याचतां दद्यात् परिव्राड्ब्रह्मचारिणां ।
ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयं ॥ ३५ ॥
अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ।
भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा ॥ ३६ ॥
अदत्त्वा तु न भोक्तव्यं यथाविभवमात्मनः ।
पूजयित्वातिथीनिष्टान् ज्ञातीन् बन्धूंस्तथार्थिनः ॥ ३७ ॥
विकलान् बालवृद्धांश्च भोजयेच्चातुरांस्तथा ।

वाञ्छते त्वत्परीतात्मा यश्चान्योऽन्नमकिञ्चनः ॥ ३८ ॥
कुटुम्बिना भोजनीयः समर्थो विभवे सति ।
श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ॥ ३९ ॥
सीदता यत्कृतं तेन तत्पापं स समश्नुते ।
सायं चैव विधिः कार्य्यः सूर्य्योढं तत्र चातिथिं ॥ ४० ॥
पूजयीत यथाशक्ति शयनासनभोजनैः ।
एवमुद्वहतस्तात गार्हस्थ्यं भारमाहितं ॥ ४१ ॥
स्कन्धे विधाता देवाश्च पितरश्च महर्षयः ।
श्रेयोभिवर्षिणः सर्व्वे तथैवातिथिबान्धवाः ॥ ४२ ॥
पशुपक्षिगणास्तृप्ता ये चान्ये सूक्ष्मकीटकाः ।
गाथाश्चात्र महाभाग स्वयमत्रिरगायत ॥ ४३ ॥
ताः शृणुष्व महाभाग गृहस्थाश्रमसंस्थिताः ।
देवान् पितॄंश्चातिथींश्च तद्वत् सम्पूज्य बान्धवान् ॥ ४४ ॥
जामयश्च गुरूंश्चैव गृहस्थो विभवे सति ।
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ॥ ४५ ॥
वैश्वदेवं हि नामैतत् कुर्य्यात् सायं तथा दिने ।
मांसमन्नं तथा शाकं गृहे यच्चोपसाधितं ॥
न च तत् स्वयमश्नीयाद्विधिवद्यन्न निर्व्वपेत् ॥ ४६ ॥

इति श्रीमार्कण्डेयपुराणे मदालसोपदेशः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥



मदालसोवाच ॥

नित्यं नैमित्तिकञ्चैव नित्यनैमित्तिकं तथा ।
गृहस्थस्य तु यत् कर्म्म तन्निशामय पुत्रक ॥ १ ॥
पञ्चयज्ञाश्रितं नित्यं यदेतत् कथितं तव ।
नैमित्तिकं तथैवान्यत् पुत्रजन्मक्रियादिकं ॥ २ ॥
नित्यनैमित्तिकं ज्ञेयं पर्व्वश्राद्धादि पण्डितैः ।
तत्र नैमित्तिकं वक्ष्ये श्राद्धमभ्युदयं तव ॥ ३ ॥
पुत्रजन्मनि यत्कार्य्यं जातकर्म्म समं नरैः ।
विवाहादौ च कर्त्तव्यं सर्व्वं सम्यक् क्रमोदितं ॥ ४ ॥
पितरश्चात्र सम्पूज्याः ख्याता नान्दीमुखास्तु ये ।
पिण्डांश्च दधिसंमिश्रान्दद्याद्यवसमन्वितान् ॥ ५ ॥
उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः ।
वैश्वदेवविहीनन्तत् केचिदिच्छन्ति मानवाः ॥ ६ ॥
युग्माश्चात्र द्विजाः कार्य्यास्ते च पूज्याः प्रदक्षिणं ।
एतन्नैमित्तिकं वृद्धौ तथान्यच्चौर्द्ध्वदेहिकं ॥ ७ ॥
मृताहनि च कर्त्तव्यमेकोद्दिष्टं शृणुष्व तत् ।
दैवहीनं तथा कार्य्यं तथैवैकपवित्रकं ॥ ८ ॥
आवाहनं न कर्त्तव्यमग्नौ करणवर्ज्जितं ।
प्रेतस्य पिण्डमेकञ्च दद्यादुच्छिष्टसन्निधौ ॥ ९ ॥
तिलोदकं चापसव्यं तन्नामस्मरणान्वितं ।

अक्षय्यममुकस्येति स्थाने विप्रविसर्जने ॥ १० ॥
अभिरम्यतामिति ब्रूयाद्ब्रूयुस्तेऽभिरताः स्म ह ।
प्रतिमासं भवेदेतत् कार्य्यमावत्सरं नरैः ॥ ११ ॥
अथ संवत्सरे पूर्णे यदा वा क्रियते नरैः ।
सपिण्डीकरणं कार्य्यं तस्यापि विधिरुच्यते ॥ १२ ॥
तत्रापि दैवरहितमेकार्घैकपवित्रकं ।
नैवाग्नौ करणं तत्र तच्चावाहनवर्ज्जितं ॥ १३ ॥
अपसव्यञ्च तत्रापि भोजयेदयुजो द्विजान् ।
विशेषस्तत्र चान्योऽस्ति प्रतिमासं क्रियाधिकः ॥ १४ ॥
तं कथ्यमानमेकाग्रो वदन्त्या मे निशामय ।
तिलगन्धोदकैर्युक्तं तत्र पात्रचतुष्टयं ॥ १५ ॥
कुर्य्यात् पितॄणां त्रितयमेकं प्रेतस्य पुत्रक ।
पात्रत्रये प्रेतपात्रमर्घ्यञ्चैव प्रसेचयेत् ॥ १६ ॥
ये समाना इति जपन् पूर्व्ववच्छेषमाचरेत् ।
स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतं ॥ १७ ॥
सपिण्डीकरणं तासां पुत्राभावे न विद्यते ।
प्रतिसंवत्सरं कार्य्यमेकोद्दिष्टं नरैः स्त्रियाः ॥ १८ ॥
मृताहनि यथान्यायं नृणां यद्वदिहोदितं ।
पुत्राभावे सपिण्डास्तु तदभावे सहोदकाः ॥ १९ ॥
मातुः सपिण्डा ये च स्युर्ये च मातुः सहोदकाः ।
कुर्य्युरेनं विधिं सम्यगपुत्रस्य सुतासुतः ॥ २० ॥
कुर्य्युर्मातामहायैवं पुत्रिकास्तनयास्तथा ।

ह्यामुष्यायणसंज्ञास्तु मातामहपितामहान् ॥ २१ ॥
पूजयेयुर्यथान्यायं श्राद्धैर्नैमित्तिकैरपि ।
सर्व्वाभावे स्त्रियः कुर्य्युः स्वभर्तृणाममन्त्रकं ॥ २२ ॥
तदभावे च नृपतिः कारयेत् स्वकुटुम्बिना ।
तज्जातीयैर्नरैः सम्यक् दाहाद्याः सकलाः क्रियाः ॥ २३ ॥
सर्व्वेषामेव वर्णानां बान्धवो नृपतिर्यतः ।
एतास्ते कथिता वत्स नित्यनैमित्तिकास्तथा ॥ २४ ॥
क्रियां श्राद्धाश्रयामन्यां नित्यनैमित्तिकीं शृणु ।
दर्शस्तत्र निमित्तं वै कालश्चन्द्रक्षयात्मकः ॥
नित्यतां नियतः कालस्तस्याः संसूचयत्यथ ॥ २५ ॥

इति श्रीमार्कण्डेयपुराणेऽलर्कानुशासने नैमित्तिकादिश्राद्धकल्पः ॥ ३० ॥

---

एकत्रिंशोऽध्यायः ॥



मदालसोवाच ॥

सपिण्डीकरणादूर्द्ध्वं पितुर्यः प्रपितामहः ।
स तु लेपभुजो याति प्रलुप्तः पितृपिण्डतः ॥ १ ॥
तेषामन्यश्चतुर्थो यः पुत्त्रलेपभुजान्नभुक् ।
सोऽपि सम्बन्धतो हीनमुपभोगं प्रपद्यते ॥ २ ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रिपिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥ ३ ॥

लेपसम्बन्धिनश्चान्ये पितामहपितामहात्।
प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः ॥ ४ ॥
इत्येष मुनिभिः प्रोक्तः सम्बन्धः साप्तपौरुषः।
यजमानात् प्रभृत्यूर्द्ध्वमनुलेपभुजस्तथा ॥ ५ ॥
ततोऽन्ये पूर्व्वजाः सर्व्वे ये चान्ये नरकौकसः।
ये च तिर्य्यक्त्वमापन्ना ये च भूतादिसंस्थिताः ॥ ६ ॥
तान् सर्व्वान् यजमानो वै श्राद्धं कुर्व्वन् यथाविधि।
समाप्याययते वत्स येन येन शृणुष्व तत् ॥ ७ ॥
अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि।
तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः ॥ ८ ॥
यदम्बु स्नानवस्त्रोत्थं भूमौ पतति पुत्रक।
तेन ते तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते ॥ ९ ॥
यास्तु गात्राम्बुकणिकाः पतन्ति धरणीतले।
ताभिराप्यायनं तेषां ये देवत्वं कुले गताः ॥ १० ॥
उद्धृतेष्वथ पिण्डेषु याश्चान्नकणिका भुवि।
ताभिराप्यायनं प्राप्ता ये तिर्य्यक्त्वं कुले गताः ॥ ११ ॥
ये वा दग्धाः कुले बालाः क्रियायोग्या ह्यसंस्कृताः।
विपन्नास्तेऽन्नविकिरसम्मार्जनजलाशिनः ॥ १२ ॥
भुक्त्वा चाचामतां यच्च जलं यच्चाङ्घ्रिसेचने।
ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै ॥ १३ ॥
एवं यो यजमानस्य यश्च तेषां द्विजन्मनां।
कश्चिज्जलान्नविक्षेपः शुचिरुच्छिष्ट एव वा ॥ १४ ॥

तेनान्ये तत्कुले तत्र तत्तद्योन्यन्तरं गताः ।
प्रयान्त्याप्यायनं वत्स सम्यक् श्राद्धक्रियावतां ॥ १५ ॥
अन्यायोपार्जितैरर्थैर्यच्छ्राद्धं क्रियते नरैः ।
तृप्यन्ते तेन चाण्डालपुक्कशाद्यासु योनिषु ॥ १६ ॥
एवमाप्यायनं वत्स बहूनामिह बान्धवैः ।
श्राद्धं कुर्व्वद्भिरम्बाम्बुविन्दुक्षेपेण जायते ॥ १७ ॥
तस्माच्छ्राद्धं नरो भक्त्या शाकैरपि यथा विधि ।
कुर्व्वीत कुर्व्वतः श्राद्धं कुले कश्चिन्न सीदति ॥ १८ ॥
तस्य कालानहं वक्ष्ये नित्यनैमित्तिकात्मकान् ।
विधिना येन च नरैः क्रियते तन्निबोध मे ॥ १९ ॥
कार्य्यं श्राद्धममावास्यां मासि मास्युडुपक्षये ।
तथाष्टकास्वप्यवश्यमिच्छाकालं निबोध मे ॥ २० ॥
विशिष्टब्राह्मणप्राप्तौ सूर्य्येन्दुग्रहणेऽयने ।
विषुवे रविसंक्रान्तौ व्यतिपाते च पुत्रक ॥ २१ ॥
श्राद्धार्हद्रव्यसम्प्राप्तौ तथा दुःस्वप्नदर्शने ।
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्व्वीत चेच्छया ॥ २२ ॥
विशिष्टः श्रोत्रियो योगी वेदविज्ज्येष्ठसामगः ।
त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित् ॥ २३ ॥
दौहित्र ऋत्विग्जामातृस्वस्रीयाः श्वशुरस्तथा ।
पञ्चाग्निकर्म्मनिष्ठश्च तपोनिष्ठोऽथ मातुलः ॥ २४ ॥
मातापितृपरश्चैव शिष्यसम्बन्धिबान्धवाः ।
एते द्विजोत्तमाः श्राद्धे समस्ता केतनक्षमाः ॥ २५ ॥

अवकीर्णी तथा रोगी न्यूनं चाङ्गं तथाधिके ।
पौनर्भवस्तथा काणः कुण्डो गोलोऽथ पुत्रक ॥ २६ ॥
मित्रध्रुक् कुनखी क्लीवः श्यावदन्तो निराकृतिः ।
अभिशस्तस्तु तातेन पिशुनः सोमविक्रयी ॥ २७ ॥
कन्यादूषयिता वैद्यो गुरुपित्रोस्त्यजस्तथा ।
भृतकाध्यापको मित्रः परपूर्व्वापतिस्तथा ॥ २८ ॥
वेदोज्झोऽग्न्यमिमन्त्यागी वृषलीपतिदूषितः ।
तथान्ये च विकर्म्मस्था वर्ज्याः पित्र्येषु वै द्विजाः ॥ २९ ॥
निमन्त्रयेत पूर्व्वेद्युः पूर्व्वोक्तान् द्विजसत्तमान् ।
दैवे नियोगे पित्र्ये च तांस्तथैवोपकल्पयेत् ॥ ३० ॥
तैश्च संयतिभिर्भाव्यं यश्च श्राद्धं करिष्यति ।
श्राद्धं दत्वा च भुक्त्वा च मैथुनं योऽनुगच्छति ॥ ३१ ॥
पितरस्तु तयोर्मासं तस्मिन्रेतसि शेरते ।
गत्वा च योषितं श्राद्धे यो भुङ्क्ते यश्च गच्छति ॥ ३२ ॥
रेतोमूत्रकृताहारास्तन्मासं पितरस्तयोः ।
तस्मात्तु प्रथमं कार्य्यं प्राज्ञेनोपनिमन्त्रणं ॥ ३३ ॥
अप्राप्तौ तद्दिने चापि वर्ज्या योषित्प्रसङ्गिनः ।
भिक्षार्थमागतान् वापि काले संयमिनो यतीन् ॥ ३४ ॥
भोजयेत् प्रणिपाताद्यैः प्रसाद्य यतमानसः ।
यथैव शुक्लपक्षाद्वै पितॄणामसितः प्रियः ॥ ३५ ॥
तथापराह्णः पूर्व्वाह्णात् पितॄणामतिरिच्यते ।
संपूज्य स्वागतेनैतानभ्युपेतान् गृहे द्विजान् ॥ ३६ ॥

पवित्रपाणिराचान्तानासनेषूपवेशयेत् ।
पितॄणामयुजः कामं युग्मान् दैवे द्विजोत्तमान् ॥ ३७ ॥
एकैकं वा पितॄणाञ्च देवानाञ्च स्वशक्तितः ।
तथा मातामहानाञ्च तुल्यं वा वैश्वदेविकं ॥ ३८ ॥
पृथक् तयोस्तथा चान्ये केचिदिच्छन्ति मानवाः ।
प्राङ्मुखान्देवसंकल्पान् पैत्र्यान् कुर्य्यादुदङ्मुखान् ॥ ३९ ॥
तथैव मातामहानां विधिरुक्तो मनीषिभिः ।
विष्टरार्थं कुशान् दत्वा पूज्य चार्घ्यादिना बुधः ॥ ४० ॥
पवित्रकादि वै दत्वा तेभ्योऽनुज्ञामवाप्य च ।
कुर्य्यादावाहनं प्राज्ञो देवानां मन्त्रतो द्विजः ॥ ४१ ॥
यवाम्भोभिस्तथा चार्घ्यं दत्वा वै वैश्वदेविकं ।
गन्धमाल्याम्बुधूपञ्च दत्वा सम्यक् सदीपकं ॥ ४२ ॥
अपसव्यं पितॄणाञ्च सर्व्वमेवोपकल्पयेत् ।
दर्भांश्च द्विगुणान्दत्वा तेभ्योऽनुज्ञामवाप्य च ॥ ४३ ॥
मन्त्रपूर्व्वं पितॄणाञ्च कुर्य्यादावाहनं बुधः ।
अपसव्यं तथा चार्घ्यं यवार्थञ्च तथा तिलैः ॥ ४४ ॥
निष्पादयेन्महाभाग पितॄणां प्रीणने रतः ।
अग्नौ कार्य्यमनुज्ञातः कुरुष्वेति ततो द्विजैः ॥ ४५ ॥
जुहुयाद्व्यञ्जनक्षारवर्ज्यमन्नं यथाविधि ।
अग्नये कव्यवाहाय स्वाहेति प्रथमाहुतिः ॥ ४६ ॥
सोमाय वै पितृमते स्वाहेत्यन्या तथा भवेत् ।
यमाय प्रेतपतये स्वाहेति चितयाहुतिः ॥ ४७ ॥

हुतावशिष्टं दद्याच्च भाजनेषु द्विजन्मनां ।
भाजनालम्भनं कृत्वा दद्याच्चान्नं यथाविधि ॥ ४८ ॥
यथा सुखं जुषध्वं भोयितिवाच्यमनिष्ठुरं ।
भुञ्जीरंश्च ततस्तेऽपि तच्चित्ता मौनिनः सुखं ॥ ४९ ॥
यद्यदिष्टतमं तेषां तत्तदन्नमसत्वरं ।
अक्रुध्यंश्च नरो दद्यात् सम्भवेन प्रलोभयन् ॥ ५० ॥
रक्षोघ्नांश्च जपेन्मन्त्रांस्तिलैश्च विकिरेन्महीं ।
सिद्धार्थकैश्च रक्षार्थं श्राद्धं हि प्रचुरच्छलं ॥ ५१ ॥
पृष्टैस्तैश्च तृप्ताः स्थ तृप्ताः स्म इति वादिभिः ।
अनुज्ञातो नरस्त्वन्नं प्रकिरेत् भुवि सर्व्वतः ॥ ५२ ॥
तद्वदाचमनार्थाय दद्यादापः सकृत् सकृत् ।
अनुज्ञाञ्च ततः प्राप्य यतवाक्कायमानसः ॥ ५३ ॥
सतिलेन ततोऽन्नेन पिण्डान् सर्व्वान् पृथक् ।
पितॄनुद्दिश्य दर्भेषु दद्यादुच्छिष्टसन्निधौ ॥ ५४ ॥
पितृतीर्थेन तोयञ्च दद्यात्तेभ्यः समाहितः ।
पितॄनुद्दिश्य यद्भक्त्या यजमानो नृपात्मज ॥ ५५ ॥
तद्वन्मातामहानाञ्च दत्वा पिण्डान् यथाविधि ।
गन्धमाल्यादिसंयुक्तं दद्यादाचमनं ततः ॥ ५६ ॥
दत्वा च दक्षिणां शक्त्या सुस्वधास्त्विति तान् वदेत् ।
तैश्च तुष्टैस्तथेत्युक्त्वा वाचयेद्वैश्वदेविकान् ॥ ५७ ॥
प्रीयन्तामिति भद्रं वो विश्वे देवा इतीरयेत् ।
तथेति चोक्ते तैर्विप्रैः प्रार्थनीयास्तदाशिषः ॥ ५८ ॥

विसर्जयेत् प्रियाण्युक्त्वा प्रणिपत्य च भक्तितः ।
आद्वारमनुगच्छेच्चागच्छेच्चानुप्रमोदितः ॥ ५८ ॥
ततो नित्यक्रियां कुर्य्याद्भोजयेच्च तथातिथीन् ।
नित्यक्रियां पितृणाञ्च केचिदिच्छन्ति सत्तमाः ॥ ६० ॥
न पितृणान्तथैवान्ये शेषं पूर्ब्बवदाचरेत् ।
पृथक् पाकेन नेत्यन्ये केचित् पूर्ब्बञ्च पूर्ब्बवत् ॥ ६१ ॥
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्न्नरः ।
एवं कुर्व्वीत धर्म्मज्ञः श्राद्धं पित्र्यं समाहितः ॥ ६२ ॥
यथा वा द्विजमुख्यानां परितोषोऽभिजायते ।
त्रीणि श्राद्धे पवित्राणि दौहित्रं कुतपस्तिलाः ॥ ६३ ॥
वर्ज्यानि चाहुर्विप्रेन्द्र कोपोऽध्वगमनं त्वरा ।
राजतञ्च तथा पात्रं शस्तं श्राद्धेषु पुत्रक ॥ ६४ ॥
रजतस्य तथा कार्य्यं दर्शनं दानमेव वा ।
राजते हि स्वधा दुग्धा पितृभिः श्रूयते मही ॥
तस्मात् पितृणां रजतमभीष्टं प्रीतिवर्द्धनं ॥ ६५ ॥

इति श्रीमार्कण्डेयपुराणेऽलर्कानुशासने पार्व्वणश्राद्धकल्पः ॥ ३१ ॥

द्वात्रिंशोऽध्यायः ॥

मदालसोवाच ॥

अतः परं शृणुष्वेमं पुत्र भक्त्या यदाहृतं ।
पितृणां प्रीतये यद्वा वर्ज्यं वा प्रीतिकारकं ॥ १ ॥

मासं पितॄणां तृप्तिश्च हविष्यान्नेन जायते ।
मासद्वयं मत्स्यमांसैस्तृप्तिं यान्ति पितामहाः ॥ २ ॥
त्रीन्मासान् हारिणं मांसं विज्ञेयं पितृतृप्तये ।
चतुर्म्मासांस्तु पुष्णाति शशस्य पिशितं पितॄन् ॥ ३ ॥
शाकुनं पञ्च वै मासान् षण्मासान् शूकरामिषं ।
छागलं सप्त वै मासानैनेयञ्चाष्टमासिकीं ॥ ४ ॥
करोति तृप्तिं नव वै रुरोर्म्मांसं न संशयः ।
गवयस्यामिषं तृप्तिं करोति दशमासिकीं ॥ ५ ॥
तथैकादशमासांस्तु ऊरभ्रं पितृतृप्तिदं ।
संवत्सरं तथा गव्यं पयः पायसमेव वा ॥ ६ ॥
वार्ध्रीणसामिषं लौहं कालशाकन्तथा मधु ।
दौहित्रामिषमन्यच्च यच्चान्यत् स्वकुलोद्भवैः ॥ ७ ॥
अनन्तां वै प्रयच्छन्ति तृप्तिं गौरी सुतस्तथा ।
पितॄणां नात्र सन्देहो गयाश्राद्धञ्च पुत्रक ॥ ८ ॥
श्यामाकराजश्यामाकौ तद्वच्चैव प्रसातिकाः ।
नीवाराः पौष्कलाश्चैव धान्यानां पितृतृप्तये ॥ ९ ॥
यवव्रीहिसगोधूमतिला मुद्गाः ससर्षपाः ।
प्रियङ्गवः कोविदारा निष्पावाश्चातिशोभनाः ॥ १० ॥
वर्ज्या मर्कटकाः श्राद्धे राजमाषास्तथाणवः ।
विप्राषिका मसूराश्च श्राद्धकर्म्मणि गर्हिताः ॥ ११ ॥
लशुनं गृञ्जनञ्चैव पलाण्डुं पिण्डमूलकं ।
करम्भं यानि चान्यानि हीनानि रसवर्णतः ॥ १२ ॥

गान्धारिकामलाबूनि लवणान्यूषराणि च ।
आरक्ता ये च निर्यासाः प्रत्यक्षलवणानि च ॥ १३ ॥
वर्ज्यान्येतानि वै श्राद्धे यच्च वाचा न शस्यते ।
यच्चोत्कोचादिनाऽप्राप्तं पतितायदुपार्जितं ॥ १४ ॥
अन्यायकन्याशुल्कोत्थं द्रव्यञ्चाच विगर्हितं ।
दुर्गन्धि फेणिलञ्चाम्बु तथैवाल्पतरोदकं ॥ १५ ॥
न लभेद्यच गौस्तृप्तिं नक्तं यच्चाप्युपाहृतं ।
यन्न सर्व्वापचोत्सृष्टं यच्चाभोज्यं निपानजं ॥ १६ ॥
तद्वर्ज्यं सलिलं तात सदैव पितृकर्म्मणि ।
मार्गमाविकमौष्ट्रञ्च सर्व्वमैकशफञ्च यत् ॥ १७ ॥
माहिषञ्चामरञ्चैव धेन्वा गोश्चाप्यनिर्द्दशं ।
पित्रर्थं मे प्रयच्छस्वेत्युक्ता यच्चाप्युपाहृतं ॥ १८ ॥
वर्जनीयं सदा सद्भिस्तत्पयः श्राद्धकर्म्मणि ।
वर्ज्या जन्तुमती रूक्षा क्षितिः प्लुष्टा तथाग्निना ॥ १९ ॥
अनिष्टदुष्टशब्दोग्रदुर्गन्धा चात्र कर्म्मणि ।
कुलापमानकाः श्राद्धे व्यायुज्य कुलहिंसकाः ॥ २० ॥
नग्नाः पातकिनश्चैव हन्युर्दृष्ट्या पितृक्रियां ।
अपुमानपविद्धश्च कुक्कुटो ग्रामशूकरः ॥ २१ ॥
श्वा चैव हन्ति श्राद्धानि यातुधानाश्च दर्शनात् ।
तस्मात्सुसंवृतो दद्यात्तिलैश्चावकिरन्महीं ॥ २२ ॥
एवं रक्षा भवेच्छ्राद्धे कृता तातोभयोरपि ।
शावसूतकसंस्पृष्टं दीर्घरोगिभिरेवं च ॥ २३ ॥

पतितैर्म्मलिनैश्चैव न पुष्णाति पितामहान् ।
वर्जनीयं तथा श्राद्धे तथोदक्याश्च दर्शनं ॥ २४ ॥
मुण्डशौण्डसमाभ्यासो यजमानेन चादरात् ।
केशकीटावपन्नञ्च तथाश्वभिरवेक्षितं ॥ २५ ॥
पूति पर्य्युषितञ्चैव वार्त्ताक्यभिषवांस्तथा ।
वर्जनीयानि वै श्राद्धे यच्च वस्त्रानिलाहृतं ॥ २६ ॥
श्रद्धया परया दत्तं पितॄणां नामगोत्रतः ।
यदाहारास्तु ते जातास्तदाहारत्वमेति तत् ॥ २७ ॥
तस्मात् श्रद्धावता पात्रे यच्छस्तं पितृकर्म्मणि ।
यथावच्चैव दातव्यं पितॄणां तृप्तिमिच्छता ॥ २८ ॥
योगिनश्च सदा श्राद्धे भोजनीया विपश्चिता ।
योगाधारा हि पितरस्तस्मात्तान् पूजयेत् सदा ॥ २९ ॥
ब्राह्मणानां सहस्रेभ्यो योगी त्वग्राशनो यदि ।
यजमानञ्च भोक्तृंश्च नौरिवाम्भसि तारयेत् ॥ ३० ॥
पितृगाथास्तथैवात्र गीयन्ते ब्रह्मवादिभिः ।
या गीताः पितृभिः पूर्व्वमैलस्यासीन्महीपतेः ॥ ३१ ॥
कदा नः सन्ततावग्र्यः कस्यचिद्भविता सुतः ।
यो योगिभुक्तशेषान्नो भुवि पिण्डं प्रदास्यति ॥ ३२ ॥
गयायामथवा पिण्डं खड्गमांसं महाहविः ।
कालशाकं तिलाढ्यं वा कृसरं मासतृप्तये ॥ ३३ ॥
वैश्वदेवञ्च सौम्यञ्च खड्गमांसं परं हविः ।
विषाणवर्ज्ज्यंखड्गाप्त्या आसूर्य्यञ्चाश्नुवामहे ॥ ३४ ॥

दद्यात् श्राद्धं त्रयोदश्यां मघासु च यथाविधि ।
मधुसर्पिःसमायुक्तं पायसं दक्षिणायने ॥ ३५ ॥
तस्मात् सम्पूजयेत् भक्त्या स्वपितॄन् पुत्र मानवः ।
कामानभीप्सन् सकलान् पापाच्चात्मविमोचनं ॥ ३६ ॥
वसून् रुद्रांस्तथादित्यान्नक्षत्रग्रहतारकाः ।
प्रीणयन्ति मनुष्याणां पितरः श्राद्धतर्पिताः ॥ ३७ ॥
आयुः प्रज्ञां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं पितरः श्राद्धतर्पिताः ॥ ३८ ॥
एतत्ते पुत्र कथितं श्राद्धकर्म्म यथोदितं ।
काम्यानां श्रूयतां वत्स श्राद्धानां तिथिकीर्त्तनं ॥ ३९ ॥

इति श्रीमार्कण्डेयपुराणे श्राद्धकल्पः ॥ ३२ ॥

अथ त्रयस्त्रिंशोऽध्यायः ॥



मदालसोवाच ॥

प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा ।
वरार्थिनी तृतीया तु चतुर्थी शत्रुनाशिनी ॥ १ ॥
श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यो भवेन्नरः ।
गाणाधिपत्यं सप्तम्यामष्टम्यां वृद्धिमुत्तमां ॥ २ ॥
स्त्रियो नवम्यां प्राप्नोति दशम्यां पूर्णकामतां ।
वेदांस्तथाप्नुयात् सर्व्वानेकादश्यां क्रियापरः ॥ ३ ॥

द्वादश्यां जयलाभञ्च प्राप्नोति पितृपूजकः ।
प्रजां मेधां पशुं वृद्धिं स्वातन्त्र्यं पुष्टिमुत्तमां ॥ ४ ॥
दीर्घमायुरथैश्वर्य्यं कुर्व्वाणस्तु त्रयोदशीं ।
अवाप्नोति न सन्देहः श्राद्धं श्रद्धापरो नरः ॥ ५ ॥
यथा संभावितान्नेन श्राद्धसम्पत्समन्वितः ।
युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ॥ ६ ॥
तेन कार्य्यं चतुर्द्दश्यां तेषां प्रीतिमभीप्सता ।
श्राद्धं कुर्व्वन्नमावस्यां यत्नेन पुरुषः शुचिः ॥ ७ ॥
सर्व्वान् कामानवाप्नोति स्वर्गञ्चानन्तमश्नुते ।
कृत्तिकासु पितॄनर्च्च्य स्वर्गमाप्नोति मानवः ॥ ८ ॥
अपत्यकामो रोहिण्यां सौम्ये चौजस्वितां लभेत् ।
शौर्य्यमार्द्रासु चाप्नोति क्षेत्रादि च पुनर्व्वसौ ॥ ९ ॥
पुष्टिं पुष्ये सदाभ्यर्च्च्य अश्लेषासु वरान् सुतान् ।
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फल्गुणीषु च ॥ १० ॥
प्रदानशीलो भवति सापत्यश्चोत्तरासु च ।
प्रयाति श्रेष्ठतां सत्यं हस्ते श्राद्धप्रदो नरः ॥ ११ ॥
रूपयुक्तश्च चित्रासु तथापत्यान्यवाप्नुयात् ।
वाणिज्यलाभदा स्वातिर्विशाखा पुत्रकामदा ॥ १२ ॥
कुर्व्वन्तश्चानुराधासु लभन्ते चक्रवर्त्तितां ।
आधिपत्यञ्च ज्येष्ठासु मूले चारोग्यमुत्तमं ॥ १३ ॥
आषाढासु यशःप्राप्तिरुत्तरासु विशोकता ।
श्रवणे च शुभान् लोकान् धनिष्ठासु धनं महत् ॥ १४ ॥

वेदविन्दमभिजिति भिषक्सिद्धिन्तु वारुणे ।
अजाविकं प्रौष्ठपदे विन्देद्गावांस्तथोत्तरे ॥ १५ ॥
रेवतीषु तथा कुप्यमश्विनीषु तुरङ्गमान् ।
श्राद्धं कुर्व्वंस्तथाप्नोति भरण्याष्वायुरुत्तमं ॥
तस्मात् काम्यानि कुर्व्वीत ऋक्षेष्वेतेषु तत्त्ववित् ॥ १६ ॥

इति श्रीमार्कण्डेयपुराणे काम्यश्राद्धफलकथनं ॥ ३३ ॥

चतुस्त्रिंशोऽध्यायः ॥

मदालसोवाच ॥

एवं पुत्र गृहस्थेन देवताः पितरस्तथा ।
संपूज्या हव्यकव्याभ्यामन्नेनातिथिबान्धवाः ॥ १ ॥
भूतानि भृत्याः सकलाः पशुपक्षिपिपीलिकाः ।
भिक्षवो याचमानाश्च ये चान्ये वसता गृहे ॥ २ ॥
सदाचारवता तात साधुना गृहमेधिना ।
पापं भुङ्क्ते समुल्लङ्घ्य नित्यनैमित्तिकीः क्रियाः ॥ ३ ॥

अलर्क उवाच ॥

कथितं मे त्वया मातर्नित्यं नैमित्तिकञ्च यत् ।
नित्यनैमित्तिकञ्चैव त्रिविधं कर्म्म पौरुषं ॥ ४ ॥
सदाचारमहं श्रोतुमिच्छामि कुलनन्दिनि ।
यत् कुर्व्वन् सुखमाप्नोति परत्रेह च मानवः ॥ ५ ॥

मदालसोवाच ॥

गृहस्थेन सदा कार्य्यमाचारपरिपालनं ।
न ह्याचारविहीनस्य सुखमत्र परत्र वा ॥ ६ ॥
यज्ञदानतपांसीह पुरुषस्य न भूतये ।
भवन्ति यः सदाचारं समुल्लङ्घ्य प्रवर्त्तते ॥ ७ ॥
दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
कार्य्यो यत्नः सदाचारे आचारो हन्त्यलक्षणं ॥ ८ ॥
तस्य स्वरूपं वक्ष्यामि सदाचारस्य पुत्रक ।
तन्ममैकमनाः श्रुत्वा तथैव परिपालय ॥ ९ ॥
त्रिवर्गसाधने यत्नः कर्त्तव्यो गृहमेधिना ।
तत्संसिद्धौ गृहस्थस्य सिद्धिरत्र परत्र च ॥ १० ॥
पादेनार्थस्य पारत्र्यं कुर्य्यात् सञ्चयमात्मवान् ।
अर्द्धेन चात्मभरणन्नित्यनैमित्तिकान्वितं ॥ ११ ॥
पादञ्चात्मार्थमायस्य मूलभूतं विवर्द्धयेत् ।
एवमाचरतः पुत्र अर्थः साफल्यमर्हति ॥ १२ ॥
तद्वत् पापनिषेधार्थं धर्म्मः कार्य्यो विपश्चिता ।
परत्रार्थं तथैवान्यः काम्योऽत्रैव फलप्रदः ॥ १३ ॥
प्रत्यवायभयात् काम्यस्तथान्यश्चाविरोधवान् ।
द्विधा कामोऽपि गदितस्त्रिवर्गस्याविरोधतः ॥ १४ ॥
परम्परानुबन्धांश्च सर्व्वानेतान् विचिन्तयेत् ।
विपरीतानुबन्धांश्च धर्म्मादींस्तान् शृणुष्व मे ॥ १५ ॥
धर्म्मो धर्म्मानुबन्धार्थो धर्म्मो नात्मार्थबाधकः ।

उभाभ्याञ्च द्विधा कामस्तेन तौ च द्विधा पुनः ॥ १६ ॥
ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चापि चिन्तयेत् ।
समुत्थाय तथाचम्य प्राङ्मुखो नियतः शुचिः ॥ १७ ॥
पूर्व्वां सन्ध्यां सनक्षत्रां पश्चिमां सदिवाकरां ।
उपासीत यथान्यायं नैनां जह्यादनापदि ॥ १८ ॥
असत्प्रलापमनृतं वाक्पारुष्यञ्च वर्जयेत् ।
असच्छास्त्रमसद्वादमसत्सेवाञ्च पुत्रक ॥ १९ ॥
सायं प्रातस्तथा होमं कुर्व्वीत नियतात्मवान् ।
नोदयास्तमने विम्बमुदीक्षेत विवस्वतः ॥ २० ॥
केशप्रसाधनादर्शदर्शनं दन्तधावनं ।
पूर्व्वाह्ण एव कार्य्याणि देवतानाञ्च तर्पणं ॥ २१ ॥
ग्रामावसथतीर्थानां क्षेत्राणाञ्चैव वर्त्मनि ।
विण्मूत्रं नानुतिष्ठेत न कृष्टे न च गोव्रजे ॥ २२ ॥
नग्नां परस्त्रियं नेक्षेन्न पश्येदात्मनः शकृत् ।
उदक्या दर्शनं स्पर्शो वर्ज्यं संभाषणन्तथा ॥ २३ ॥
नाप्सु मूत्रं पुरीषं वा मैथुनं वा समाचरेत् ।
नाधितिष्ठेच्छकृन्मूत्रकेशभस्मकपालिकाः ॥ २४ ॥
तुषाङ्गारास्थिशीर्णानि रज्जुवस्त्रादिकानि च ।
नाधितिष्ठेत्तथा प्राज्ञः पथि चैवन्तथा भुवि ॥ २५ ॥
पितृदेवमनुष्याणां भूतानाञ्च तथार्च्चनं ।
कृत्वा विभवतः पश्चाद्गृहस्थो भोक्तुमर्हति ॥ २६ ॥
प्राङ्मुखोदङ्मुखोवापि स्वाचान्तो वाग्यतः शुचिः ।

भुञ्जीतान्नञ्च तच्चित्तो ह्यन्तर्जानुः सदा नरः ॥ २७ ॥
उपघाताहृते दोषं नान्यस्योदीरयेद्बुधः ।
प्रत्यक्षलवणं वर्ज्यमन्नमत्युष्णमेव च ॥ २८ ॥
न गच्छन्न च तिष्ठन् वै विण्मूत्रोत्सर्गमात्मवान् ।
कुर्व्वीत नैव चाचामन् यत् किञ्चिदपि भक्षयेत् ॥ २९ ॥
उच्छिष्टो नालपेत् किञ्चित् स्वाध्यायञ्च विवर्जयेत् ।
गां ब्राह्मणं तथा चाग्निं स्वमूर्द्धानञ्च न स्पृशेत् ॥ ३० ॥
न च पश्येद्रविं नेन्दुं न नक्षत्राणि कामतः ।
भिन्नासनं तथा शय्यां भाजनञ्च विवर्जयेत् ॥ ३१ ॥
गुरूणामासनं देयमभ्युत्थानादिसत्कृतं ।
अनुकूलं तथालापमभिवादनपूर्व्वकं ॥ ३२ ॥
तथानुगमनं कुर्य्यात् प्रतिकूलं न संजपेत् ।
नैकवस्त्रश्च भुञ्जीत न कुर्य्याद्देवतार्च्चनं ॥ ३३ ॥
न वाहयेद्द्विजान्नाग्नौ मेहं कुर्व्वीत बुद्धिमान् ।
स्नायीत न नरो नग्नो न शयीत कदाचन ॥ ३४ ॥
न पाणिभ्यामुभाभ्याञ्च कण्डूयेत शिरस्तथा ।
न चाभीक्ष्णं शिरःस्नानं कार्य्यं निष्कारणं नरैः ॥ ३५ ॥
शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदपि स्पृशेत् ।
अनध्यायेषु सर्व्वेषु स्वाध्यायञ्च विवर्ज्जयेत् ॥ ३६ ॥
ब्राह्मणानिलगोसूर्य्यान्न मेहेत कदाचन ।
उदङ्मुखो दिवा रात्रावुत्सर्गं दक्षिणामुखः ॥ ३७ ॥
आबाधासु यथाकामं कुर्य्यान्मूत्रपुरीषयोः ।

दुष्कृतं न गुरोर्ब्रूयात् क्रुद्धं चैनं प्रसादयेत् ॥ ३८ ॥
परिवादं न शृणुयादन्येषामपि कुर्व्वतां ।
पन्था देयो ब्राह्मणानां राज्ञो दुःखातुरस्य च ॥ ३९ ॥
विद्याधिकस्य गुर्व्विण्या भारार्त्तस्य यवीयसः ।
मूकान्धबधिराणाञ्च मत्तस्योन्मत्तकस्य च ॥ ४० ॥
पुंश्चल्याः कृतवैरस्य बालस्य पतितस्य च ।
देवालयं चैत्यतरुं तथैव च चतुष्पथं ॥ ४१ ॥
विद्याधिकं गुरुं देवं बुधः कुर्य्यात् प्रदक्षिणं ।
उपानद्वस्त्रमाल्यादि धृतमन्यैर्न धारयेत् ॥ ४२ ॥
उपवीतमलङ्कारं करकञ्चैव वर्जयेत् ।
चतुर्द्दश्यान्तथाष्टम्यां पञ्चदश्याञ्च पर्व्वसु ॥ ४३ ॥
तैलाभ्यङ्गं तथा भोगं योषितश्च विवर्जयेत् ।
न क्षिप्तपादजङ्घश्च प्राज्ञस्तिष्ठेत् कदाचन ॥ ४४ ॥
न चापि विक्षिपेत् पादौ पादं पादेन नाक्रमेत् ।
मर्म्माभिघातमाक्रोशं पैशुन्यञ्च विवर्जयेत् ॥ ४५ ॥
दम्भाभिमानतीक्ष्णानि न कुर्व्वीत विचक्षणः ।
मूर्खोन्मत्तव्यसनिनो विरूपान्मायिनस्तथा ॥ ४६ ॥
न्यूनाङ्गांश्चाधिकाङ्गांश्च नोपहासैर्विदूषयेत् ।
परस्य दण्डं नोद्यच्छेच्छिक्षार्थं पुत्त्रशिष्ययोः ॥ ४७ ॥
तद्वन्नोपविशेत् प्राज्ञः पदेनाकृष्य चासनं ।
संयावं कृशरं मांसं नात्मार्थमुपसाधयेत् ॥ ४८ ॥
सायं प्रातश्च भोक्तव्यं कृत्वा चातिथिपूजनं ।

प्राङ्मुखोदङ्मुखोवापि वाग्यतो दन्तधावनं ॥ ४९ ॥
कुर्व्वीत सततं वत्स वर्ज्जयेद्वर्ज्ज्यवीरुधः ।
नोदक्शिराः स्वपेज्जातु न च प्रत्यक्शिरा नरः ॥ ५० ॥
शिरस्यगस्त्यमास्थाय शयीताथ पुरन्दरं ।
न तु गन्धवतीष्वप्सु स्नायीत न तथा निशि ॥ ५१ ॥
उपरागे परं स्नानमृते दिनमुदाहृतं ।
अपमृज्यान्न चास्नातो गात्राण्यम्बरपाणिभिः ॥ ५२ ॥
न चापि धूनयेत्केशान् वाससी न च धूनयेत् ।
नानुलेपनमादद्यादस्नातः कर्हिचिद्बुधः ॥ ५३ ॥
न चापि रक्तवासाः स्याच्चित्रासितधरोऽपि वा ।
न च कुर्य्याद्विपर्य्यासं वाससोर्नापि भूषणे ॥ ५४ ॥
वर्ज्यञ्च विदशं वस्त्रमत्यन्तोपहतञ्च यत् ।
केशकीटावपन्नञ्च चुस्तं श्वभिरवेक्षितं ॥ ५५ ॥
अवलीढावपन्नञ्च सारोद्धरणदूषितं ।
पृष्ठमांसं वृथामांसं वर्ज्यमांसञ्च पुत्रक ॥ ५६ ॥
न भक्षयीत सततं प्रत्यक्षलवणानि च ।
वर्ज्यं चिरोषितं पुत्र भक्तं पर्य्युषितञ्च यत् ॥ ५७ ॥
पिष्टशाकेक्षुपयसां विकारान्नृपनन्दन ।
तथा मांसविकारांश्च ते च वर्ज्याश्चिरोषिताः ॥ ५८ ॥
उदयास्तमने भानोः शयनञ्च विवर्जयेत् ।
नास्नातो नैव संविष्टो न चैवान्यमना नरः ॥ ५९ ॥
न चैव शयने नोर्व्व्यामुपविष्टो न शब्दवत् ।

न चैकवस्त्रो न वदन् प्रेक्षतामप्रदाय च ॥ ६० ॥
भुञ्जीत पुरुषः स्नातः सायं प्रातर्यथाविधि ।
परदारा न गन्तव्याः पुरुषेण विपश्चिता ॥ ६१ ॥
इष्टापूर्त्तायुषां हन्त्री परदारगतिर्नृणां ।
न हीदृशमनायुष्यं लोके किञ्चन विद्यते ॥ ६२ ॥
यादृशं पुरुषस्येह परदाराभिमर्षणं ।
देवार्च्चनाग्निकार्य्याणि तथा गुर्व्वभिवादनं ॥ ६३ ॥
कुर्व्वीत सम्यगाचम्य तद्वदन्नभुजिक्रियां ।
अफेनाभिरगन्धाभिरद्भिरच्छाभिरादरात् ॥ ६४ ॥
आचामेत् पुनः पुण्याभिः प्राङ्मुखोदङ्मुखोऽपि वा ।
अन्तर्जलादावसथाद्वल्मीकान्मूषिकस्थलात् ॥ ६५ ॥
कृतशौचावशिष्टाश्च वर्जयेत् पञ्च वै मृदः ।
प्रक्षाल्य हस्तौ पादौ च समभ्युक्ष्य समाहितः ॥ ६६ ॥
अन्तर्जानुस्तथाचामेत्त्रिश्चतुर्व्वा पिबेदपः ।
परिमृज्य द्विरास्यान्तं खानि मूर्द्धानमेव च ॥ ६७ ॥
सम्यगाचम्य तोयेन क्रियां कुर्व्वीत वै शुचिः ।
देवतानामृषीणाञ्च पितॄणाञ्चैव यत्नतः ॥ ६८ ॥
समाहितमना भूत्वा कुर्व्वीत सततं नरः ।
क्षुत्वा निष्ठीव्य वासश्च परिधायाचमेद्बुधः ॥ ६९ ॥
क्षुतेऽवलिढे वान्ते च तथा निष्ठीवनादिषु ।
कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनं ॥ ७० ॥
कुर्व्वीतालम्बनं चापि दक्षिणश्रवणस्य वै ।

यथा विभवतो ह्येतत् पूर्व्वाभावे ततः परं ॥ ७१ ॥
अविद्यमाने पूर्व्वोक्ते उत्तरप्राप्तिरिष्यते ।
न कुर्य्याद्दन्तसङ्घर्षं नात्मनो देहताडनं ॥ ७२ ॥
स्वप्नाध्ययनभोज्यानि सन्ध्ययोश्च विवर्जयेत् ।
सन्ध्यायां मैथुनञ्चापि तथा प्रस्थानमेव च ॥ ७३ ॥
पूर्व्वाह्णे तात देवानां मनुष्याणाञ्च मध्यमे ।
भक्त्या तथापराह्णे च कुर्व्वीत पितृपूजनं ॥ ७४ ॥
शिरःस्नातश्च कुर्व्वीत दैवं पैत्र्यमथापि वा ।
प्राङ्मुखोदङ्मुखो वापि श्मश्रुकर्म्म च कारयेत् ॥ ७५ ॥
व्यङ्गिनीं वर्जयेत् कन्यां कुलजामपि रोगिणीं ।
विकृतां पिङ्गलाञ्चैव वाचाटां सर्व्वदूषितां ॥ ७६ ॥
अव्यङ्गीं सौम्यनासाञ्च सर्व्वलक्षणलक्षितां ।
तादृशीमुद्वहेत् कन्यां श्रेयःकामो नरः सदा ॥ ७७ ॥
उद्वहेत् पितृमात्रोश्च सप्तमीं पञ्चमीन्तथा ।
रक्षेद्दारान् त्यजेदीर्षां दिवा च स्वप्नमैथुने ॥ ७८ ॥
परोपतापकं कर्म्म जन्तुपीडाञ्च वर्जयेत् ।
उदक्या सर्व्ववर्णानां वर्ज्या रात्रिचतुष्टयं ॥ ७९ ॥
स्त्रीजन्मपरिहारार्थं पञ्चमीमपि वर्जयेत् ।
ततः षष्ठ्यां व्रजेद्रात्र्यां श्रेष्ठा युग्मासु पुत्रक ॥ ८० ॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेत सदा नरः ॥ ८१ ॥
विधर्म्मिणोऽह्नि पूर्व्वाख्ये सन्ध्याकाले च पण्डकाः ।

क्षुरकर्म्मणि वान्ते च स्त्रीसम्भोगे च पुत्रक ॥ ८२ ॥
स्नायीत चेलवान् प्राज्ञः कटभूमिमुपेत्य च ।
देववेदद्विजातीनां साधुसत्यमहात्मनां ॥ ८३ ॥
गुरोः पतिव्रतानाञ्च तथा यज्वितपस्विनां ।
परिवादं न कुर्व्वीत परिहासञ्च पुत्रक ॥ ८४ ॥
कुर्व्वतामविनीतानां न श्रोतव्यं कथञ्चन ।
नोत्कृष्टशय्यासनयोर्न्नापकृष्टस्य चारुहेत् ॥ ८५ ॥
न चामङ्गल्यवेशः स्यान्न चामङ्गल्यवाग्भवेत् ।
धवलाम्बरसंवीतः सितपुष्पविभूषितः ॥ ८६ ॥
नोद्धतोन्मत्तमूढैश्च नाविनीतैश्च पण्डितः ।
गच्छेन्मैत्रीं न चाशीलैर्न च चौर्य्यादिदूषितैः ॥ ८७ ॥
न चातिव्ययशीलैश्च न लुब्धैर्नापि वैरिभिः ।
न बन्धकीभिर्न्न न्यूनैर्बन्धकीपतिभिस्तथा ॥ ८८ ॥
सार्द्धं न बलिभिः कुर्य्यान्न च न्यूनैर्न निन्दितैः ।
न सर्व्वशङ्किभिर्न्नित्यं न च दैवपरैर्नरैः ॥ ८९ ॥
कुर्व्वीत साधुभिर्मैत्रीं सदाचारावलम्बिभिः ।
प्राज्ञैरपिशुनैः शक्तैः कर्म्मण्युद्योगभागिभिः ॥ ॥ ९० ॥
सुहृद्दीक्षितभूपालस्नातकश्वशुरैः सह ।
ऋत्विगादीन् षडर्घार्हानर्च्चयेच्च गृहागतान् ॥ ९१ ॥
यथा विभवतः पुत्र द्विजान् संवत्सरोषितान् ।
अर्च्चयेन्मधुपर्क्केण यथाकालमतन्द्रितः ॥ ९२ ॥
तिष्ठेच्च शासने तेषां श्रेयस्कामो द्विजोत्तमः ।

न च ताम् विवदेच्चीमानाक्रुष्टश्चापि तैः सदा ॥ ९३ ॥
सम्यग्गृहार्च्चनं कृत्वा यथास्थानमनुक्रमात् ।
सम्पूजयेत्ततो वह्निं दद्याच्चैवाहुतीः क्रमात् ॥ ९४ ॥
प्रथमां ब्रह्मणे दद्यात् प्रजानां पतये ततः ।
तृतीयाञ्चैव गुह्येभ्यः कश्यपाय तथापरां ॥ ९५ ॥
ततोऽनुमतये दत्त्वा दद्याद्गृहबलिन्ततः ।
पूर्व्वाख्यातं मया यत्ते नित्यकर्म्मक्रियाविधौ ॥ ९६ ॥
वैश्वदेवन्ततः कुर्य्याद्बलयस्तत्र मे शृणु ।
यथास्थानविभागन्तु देवानुद्दिश्य वै पृथक् ॥ ९७ ॥
पर्ज्जन्याय धरित्रीणां दद्याच्च माणके त्रयं ।
वायवे च प्रतिदिशं दिग्भ्यः प्राच्यादितः क्रमात् ॥ ९८ ॥
ब्रह्मणे चान्तरीक्षाय सूर्य्याय च यथाक्रमं ।
विश्वेभ्यश्चैव देवेभ्यो विश्वभूतेभ्य एव च ॥ ९९ ॥
उषसे भूतपतये दद्याच्चोत्तरतस्ततः ।
स्वधा नम इतीत्युक्त्वा पितृभ्यश्चापि दक्षिणे ॥ १०० ॥
कृत्वापसव्यं वायव्यां यक्ष्मैतत्तेति भाजनात् ।
अन्नावशेषमिच्छन् वै तोयं दद्याद्यथाविधि ॥ १०१ ॥
ततोऽन्नाग्रं समुद्धृत्य हन्तकारोपकल्पनं ।
यथाविधि यथान्यायं ब्राह्मणायोपपादयेत् ॥ १०२ ॥
कुर्य्यात् कर्म्माणि तीर्थेन स्वेन स्वेन यथाविधि ।
देवादीनान्तथा कुर्य्याद्ब्राह्मेणाचमनक्रियां ॥ १०३ ॥
अङ्गुष्ठोत्तरतो रेखा पाणेर्या दक्षिणस्य तु ।

एतद्ब्राह्ममिति ख्यातं तीर्थमाचमनाय वै ॥ १०४ ॥
तर्ज्जन्यङ्गुष्ठयोरन्तः पैत्र्यं तीर्थमुदाहृतं ।
पितॄणां तेन तोयादि दद्यान्नान्दीमखादृते ॥ १०५ ॥
अङ्गुल्यग्रे तथा दैवं तेन दिव्यक्रियाविधिः ।
तीर्थं कनिष्ठिकामूले कायं तेन प्रजापतेः ॥ १०६ ॥
एवमेभिः सदा तीर्थैर्देवानां पितृभिः सह ।
सदा कार्य्याणि कुर्व्वीत नान्यतीर्थेन कर्हिचित् ॥ १०७ ॥
ब्राह्मेणाचमनं शस्तं पित्र्यं पैत्र्येण सर्व्वदा ।
देवतीर्थेन देवानां प्राजापत्यं निजेन च ॥ १०८ ॥
नान्दीमुखानां कुर्व्वीत प्राज्ञः पिण्डोदकक्रियां ।
प्राजापत्येन तीर्थेन यच्च किञ्चित् प्रजापतेः ॥ १०९ ॥
युगपज्जलमग्निञ्च बिभृयान्न विचक्षणः ।
गुरुदेवान् प्रति तथा न च पादौ प्रसारयेत् ॥ ११० ॥
नाचक्षीत धयन्तीं गां जलं नाञ्जलिना पिबेत् ।
शौचकालेषु सर्व्वेषु गुरुष्वल्पेषु वा पुनः ॥ १११ ॥
न विलम्बेत शौचार्थं न मुखेनानलं धमेत् ।
तत्र पुत्र न वस्तव्यं यत्र नास्ति चतुष्टयं ॥ ११२ ॥
ऋणप्रदाता वैद्यश्च श्रोत्रियः सजला नदी ।
जितामित्रो नृपो यत्र बलवान् धर्म्मतत्परः ॥ ११३ ॥
तत्र नित्यं वसेत् प्राज्ञः कुतः कुनृपतौ सुखं ।
यत्राप्रधृष्यो नृपतिर्यत्र शस्यवती मही ॥ ११४ ॥
पौराः सुसंयता यत्र सततं न्यायवर्त्तिनः ।

यत्रामयत्वरितो लोकास्तत्र वासः सुखोदयः ॥ ११५ ॥
यस्मिन् कृषीवला राष्ट्रे प्रायशो नातिभोगिनः ।
यत्रौषधान्यशेषाणि वसेत्तत्र विचक्षणः ॥ ११६ ॥
तत्र पुत्र न वस्तव्यं यत्रैतत्त्रितयं सदा ।
जिगीषुः पूर्व्ववैरश्च जनश्च सततोत्सवः ॥ ११७ ॥
वसेन्नित्यं सुशीलेषु सहवासिषु पण्डितः ।
इत्येतत् कथितं पुत्र मया ते हितकाम्यया ॥ ११८ ॥

इति श्रीमार्कण्डेयपुराणे अलर्कानुशासने सदाचाराध्यायः ॥ ३४ ॥

पञ्चत्रिंशोऽध्यायः ॥



मदालसोवाच ॥

अतःपरं शृणुष्व त्वं वर्ज्यावर्ज्यप्रतिक्रियां ।
भोज्यमन्नं पर्य्युषितं स्नेहाक्तं चिरसम्भृतं ॥ १ ॥
अस्नेहाश्चापि गोधूमयवगोरसविक्रियाः ।
शशकः कच्छपो गोधा श्वावित् खड्गोऽथ पुत्रक ॥ २ ॥
भक्ष्या ह्येते तथा वर्ज्यौ ग्रामशूकरकुक्कुटौ ।
पितृदेवादिशेषश्च श्राद्धे ब्राह्मणकाम्यया ॥ ३ ॥
प्रोक्षितश्चौषधार्थञ्च खादन्मांसं न दुष्यति ।
शङ्खाश्मस्वर्णरूप्याणां रज्जूनामथ वाससां ॥ ४ ॥

शाकमूलफलानाञ्च तथा विदलचर्म्मणां ।
मणिवज्रप्रवालानान्तथा मुक्ताफलस्य च ॥ ५ ॥
गात्राणाञ्च मनुष्याणामम्बुना शौचमिष्यते ।
यथायसानां तोयेन शाङ्गः संघर्षणेन च ॥ ६ ॥
सस्नेहानाञ्च भाण्डानां शुद्धिरुष्णेन वारिणा ।
सूर्पधान्याजिनानाञ्च मुषलोलूखलस्य च ॥ ७ ॥
संहतानाञ्च वस्त्राणां प्रोक्षणात् सञ्चयस्य च ।
वल्कलानामशेषाणामम्बुमृच्छौचमिष्यते ॥ ८ ॥
तृणकाष्ठौषधीनाञ्च प्रोक्षणाच्छुद्धिरिष्यते ।
आविकानां समस्तानां केशानाञ्चापि मेध्यता ॥ ९ ॥
सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः ।
साम्बुना तात भवति उपघातवतां सदा ॥ १० ॥
तथा कार्पासिकानाञ्च विशुद्धिर्जलभस्मना ।
दारुदन्तास्थिशृङ्गाणां तक्षणाच्छुद्धिरिष्यते ॥ ११ ॥
पुनः पाकेन भाण्डानां पार्थिवानाञ्च मेध्यता ।
शुचिर्भैक्ष्यं कारुहस्तः पण्यं योषिन्मुखं तथा ॥ १२ ॥
रथ्यागतमविज्ञातं दासवर्गादिनाहृतं ।
वाक्प्रशस्तं चिरातीतमनेकान्तरितं लघु ॥ १३ ॥
अतिप्रभूतं बालञ्च वृद्धातुरविचेष्टितं ।
कर्म्मान्ताङ्गारशालाश्च स्तनन्धयसुताः स्त्रियः ॥ १४ ॥
शुचिन्यश्च तथैवापः स्रवन्त्योऽगन्धबुद्बुदाः ।
भूमिर्विशुद्ध्यते कालाद्दाहमार्जनगोक्रमैः ॥ १५ ॥

लेपादुल्लेखनात् सेकाद्वेश्मसंमार्जनार्च्चनात् ।
केशकीटावपन्ने च गोघ्राते मक्षिकान्विते ॥ १६ ॥
मृदम्बुभस्मना तात प्रोक्षितव्यं विशुद्धये ।
औदुम्बराणामम्लेन क्षारेण त्रपुसीसयोः ॥ १७ ॥
भस्माम्बुभिश्च कांस्यानां शुद्धिः प्लावो द्रवस्य च ।
अमेध्याक्तस्य मृत्तोयैर्गन्धापहरणेन च ॥ १८ ॥
अन्येषाञ्चैव तद्द्रव्यैर्वर्णगन्धापहारतः ।
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतं ॥ १९ ॥
तथा मांसञ्च चण्डालक्रव्यादादिनिपातितं ।
रथ्यागतञ्च चेलादि तात वाताच्छुचि स्मृतं ॥ २० ॥
रजोऽग्निरश्वो गौश्छाया रश्मयः पवनो मही ।
विप्रुषो मक्षिकाद्याश्च दुष्टसङ्गाददोषिणः ॥ २१ ॥
अजाश्वौ मुखतो मेध्यौ न गोर्वत्सस्य चाननं ।
मातुः प्रस्रवणे मेध्यं शकुनिः फलपातने ॥ २२ ॥
आसनं शयनं यानं नावः पथि तृणानि च ।
सोमसूर्य्यांशुपवनैः शुद्ध्यन्ते तानि पण्यवत् ॥ २३ ॥
रथ्यावसर्पणस्नानक्षुत्पानम्लानकर्म्मसु ।
आचामेत यथान्यायं वासो विपरिधाय च ॥ २४ ॥
स्पृष्टानामप्यसंसर्गैर्विरथ्याकर्द्दमाम्भसां ।
पक्केष्टरचितानाञ्च मेध्यता वायुसङ्क्रमात् ॥ २५ ॥
प्रभूतोपहतादन्नादग्रमुद्धृत्य सन्त्यजेत् ।
शेषस्य प्रोक्षणं कुर्य्यादाचम्याद्भिस्तथा मृदा ॥ २६ ॥

उपवासस्त्रिरात्रन्तु दुष्टभक्ताशिनो भवेत् ।
अज्ञाते ज्ञानपूर्व्वन्तु तद्दोषोपशमेन तु ॥ २७ ॥
उदक्याश्वशृगालादीन् सूतिकान्त्यावसायिनः ।
स्पृष्ट्वा स्नायीत शौचार्थं तथैव मृतहारिणः ॥ २८ ॥
नारं स्पृष्ट्वास्थि सस्नेहं स्नातः शुद्ध्यति मानवः ।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा ॥ २९ ॥
न लङ्घयेत्तथैवासृक्ष्ठीवनोद्वर्त्तनानि च ।
नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत् कदाचन ॥ ३० ॥
न चालपेज्जनद्विष्टां वीरहीनान्तथा स्त्रियं ।
गृहादुच्छिष्टविण्मूत्रपादाम्भांसि क्षिपेद्वहिः ॥ ३१ ॥
पञ्च पिण्डाननुद्धृत्य न स्नायात् परवारिणि ।
स्नायीत देवखातेषु गङ्गाह्रदसरित्सु च ॥ ३२ ॥
देवतापितृसच्छास्त्रयज्ञमन्त्रादिनिन्दकैः ।
कृत्वा तु स्पर्शनालापं शुद्ध्येतार्कावलोकनात् ॥ ३३ ॥
अवलोक्य तथोदक्यामन्त्यजं पतितं शवं ।
विधर्म्मिसूतिकाषण्डविवस्त्रान्त्यावसायिनः ॥ ३४ ॥
सूतनिर्यातकांश्चैव परदाररताश्च ये ।
एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ॥ ३५ ॥
अभोज्यं सूतिकाषण्डमार्जाराखुश्वकुक्कुटान् ।
पतिताविद्धचण्डालमृतहारांश्च धर्म्मवित् ॥ ३६ ॥
संस्पृश्य शुद्ध्यते स्नानादुदक्याग्रामशूकरौ ।
तद्वच्च सूतिकाशौचदूषितौ पुरुषावपि ॥ ३७ ॥

यस्य चानुदिनं हानिर्गृहे नित्यस्य कर्म्मणः ।
यश्च ब्राह्मणसन्त्यक्तः किल्विषी स नराधमः ॥ ३८ ॥
नित्यस्य कर्म्मणो हानिं न कुर्व्वीत कदाचन ।
तस्य त्वकरणे बन्धः केवलं मृतजन्मसु ॥ ३९ ॥
दशाहं ब्राह्मणस्तिष्ठेद्दानहोमादिवर्जितः ।
क्षत्रियो द्वादशाहञ्च वैश्यो मासार्द्धमेव च ॥ ४० ॥
शूद्रस्तु मासमासीत निजकर्म्मविवर्जितः ।
ततः परं निजं कर्म्म कुर्य्युः सर्व्वे यथोदितं ॥ ४१ ॥
प्रेताय सलिलं देयं वहिर्दग्ध्वा तु गोत्रिकैः ।
प्रथमेऽह्नि चतुर्थे च सप्तमे नवमे तथा ॥ ४२ ॥
भस्मास्थिचयनं कार्य्यं चतुर्थे गोत्रिकैर्दिने ।
ऊर्द्ध्वं सञ्चयनात्तेषामङ्गस्पर्शो विधीयते ॥ ४३ ॥
सोदकैस्तु क्रियाः सर्व्वाः कार्य्याः सञ्चयनात्परं ।
स्पर्श एव सपिण्डानां मृताहनि तथोभयोः ॥ ४४ ॥
अन्वेकमृष्टमाशस्त्रतोयोद्बन्धनवह्निषु ।
विषप्रपातादिमृते प्रायो नाशकयोरपि ॥ ४५ ॥
बाले देशान्तरस्थे च तथा प्रव्रजिते मृते ।
सद्यःशौचमथान्यैश्च त्र्यहमुक्तमशौचकं ॥ ४६ ॥
सपिण्डानां सपिण्डस्तु मृतेऽन्यस्मिन्मृतो यदि ।
पूर्व्वाशौचसमाख्यातैः कार्य्यास्तत्र दिनैः क्रियाः ॥ ४७ ॥
एष एव विधिर्दृष्टो जन्मन्यपि हि सूतके ।
सपिण्डानां सपिण्डेषु यथावत्सोदकेषु च ॥ ४८ ॥

जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।
तत्रापि यदि चान्यस्मिन् जाते जायेत चापरः ॥ ४९ ॥
तत्रापि शुद्धिरुद्दिष्टा पूर्व्वजन्मवतो दिनैः।
दशद्वादशमासार्द्धमाससंख्यैर्दिनैर्गतैः ॥ ५० ॥
स्वाः स्वाः कर्म्मक्रियाः कुर्य्युः सर्व्वे वर्णा यथाविधि।
प्रेतमुद्दिश्य कर्त्तव्यमेकोद्दिष्टं ततः परं ॥ ५१ ॥
दानानि चैव देयानि ब्राह्मणेभ्यो मनीषिभिः।
यद्यदिष्टतमं लोके यच्चापि दयितं गृहे ॥ ५२ ॥
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता।
पूर्णैस्तु दिवसैः स्पृष्ट्वा सलिलं वाहनायुधं ॥ ५३ ॥
प्रतोददण्डौ च तथा सम्यग्वर्णाः कृतक्रियाः।
स्ववर्णधर्म्मनिर्द्दिष्टमुपादानं तथा क्रियाः ॥ ५४ ॥
कुर्य्युः समस्ताः शुचिनः परत्रेह च भूतिदाः।
अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता ॥ ५५ ॥
धर्म्मतो धनमाहार्य्यं यष्टव्यञ्चापि यत्नतः।
यच्चापि कुर्व्वतो नात्मा जुगुप्सामेति पुत्रक ॥ ५६ ॥
तत्कर्त्तव्यमशङ्केन यन्न गोप्यं महाजने।
एवमाचरतो वत्स पुरुषस्य गृहे सतः ॥
धर्म्मार्थकामसंप्राप्त्या परत्रेह च शोभनं ॥ ५७ ॥

इति श्रीमार्कण्डेयपुराणेऽलर्कानुशासने वर्ण्यावर्ज्याध्यायः ॥ ३५ ॥

षट्त्रिंशोऽध्यायः ॥



जड उवाच ॥

स एवमनुशिष्टः सन् मात्रा संप्राप्य यौवनं ।
ऋतध्वजसुतश्चक्रे सम्यग्दारपरिग्रहं ॥ १ ॥
पुत्रांश्चोत्पादयामास यज्ञैश्चाप्ययजद्विभुः ।
पितुश्च सर्व्वकालेषु चकाराज्ञानुपालनं ॥ २ ॥
ततः कालेन महता संप्राप्य चरमं वयः ।
चक्रेऽभिषेकं पुत्रस्य तस्य राज्ये ऋतध्वजः ॥ ३ ॥
भार्य्यया सह धर्म्मात्मा यियासुस्तपसे वनं ।
अवतीर्णो महारक्षो महाभागो महीपतिः ॥ ४ ॥
मदालसा च तनयं प्राहेदं पश्चिमं वचः ।
कामोपभोगसंसर्गप्रहाणाय सुतस्य वै ॥ ५ ॥

मदालसोवाच ॥

यदा दुःखमसह्यं ते प्रियबन्धुवियोगजं ।
शत्रुबाधोद्भवं वापि वित्तनाशात्मसम्भवं ॥ ६ ॥
भवेत्तत्कुर्व्वतो राज्यं गृहधर्म्मावलम्बिनः ।
दुःखायतनभूतो हि ममत्वालम्बनो गृही ॥ ७ ॥
तदास्मात् पुत्र निष्कृष्य मद्दत्तादङ्गुलीयकात् ।
वाच्यन्ते शासनं पट्टे सूक्ष्माक्षरनिवेशितं ॥ ८ ॥

जड उवाच ॥

इत्युक्त्वा प्रददौ तस्मै सौवर्णं साङ्गुलीयकं ।

आग्निपश्चापि या योग्याः पुरुषस्य गृहे सतः ॥ ९ ॥
ततः कुवलयाश्वोऽसौ सा च देवी मदालसा ।
पुत्राय दत्वा तद्राज्यं तपसे कानन गतः ॥ १० ॥

इति श्रीमार्कण्डेयपुराणे मदालसोपाख्यानं ॥ २६ ॥

सप्तविंशोऽध्यायः ॥



जड उवाच ॥

सोऽप्यलर्को यथान्यायं पुत्रवन्मुदिताः प्रजाः ।
पालयामास धर्म्मात्मा स्वे स्वे कर्म्मण्यवस्थिताः ॥ १ ॥
दुष्टेषु दण्डं शिष्टेषु सम्यक् च परिपालनं ।
कुर्व्वन् परां मुदं लेभे इयाज च महामखैः ॥ २ ॥
अजायन्त सुतास्तस्य महाबलपराक्रमाः ।
धर्म्मात्मानो महात्मानो विमार्गपरिपन्थिनः ॥ ३ ॥
चकार सोऽर्थं धर्म्मेण धर्म्ममर्थेन वा पुनः ।
तयोश्चैवाविरोधेन बुभुजे विषयानपि ॥ ४ ॥
एवं बहूनि वर्षाणि तस्य पालयतो महीं ।
धर्म्मार्थकामसक्तस्य जग्मुरेकमहर्यथा ॥ ५ ॥
वैराग्यं नास्य सञ्जज्ञे भुञ्जतो विषयान् प्रियान् ।
न चाप्यलमभूत्तस्य धर्म्मार्थोपार्जनं प्रति ॥ ६ ॥

तं तथा भोगसंसर्गप्रमत्तमजितेन्द्रियं ।
सुबाहुर्नाम शुश्राव भ्राता तस्य वनेचरः ॥ ७ ॥
तं बुबोधयिषुः सोऽथ चिरं ध्यात्वा महीपतिः ।
तद्वैरिसंश्रयं तस्य श्रेयोऽमन्यत भूपतेः ॥ ८ ॥
ततः स काशिभूपालमुदीर्णबलवाहनं ।
स्वराज्यं प्राप्तुमागच्छद्बहुशः शरणं कृती ॥ ९ ॥
सोऽपि चक्रे बलोद्योगमलर्कं प्रति पार्थिवः ।
दूतञ्च प्रेषयामास राज्यमस्मै प्रदीयतां ॥ १० ॥
सोऽपि नैच्छत्तदा दातुमाज्ञापूर्व्वं स्वधर्म्मवित् ।
प्रत्युवाच च तं दूतमलर्कः काशिभूभृतः ॥ ११ ॥
मामेवाभ्येत्य हार्द्देन याचतां राज्यमग्रजः ।
नाक्रान्त्या संप्रदास्यामि भयेनाल्पामपि क्षितिं ॥ १२ ॥
सुबाहुरपि नो याच्ञाञ्चकार मतिमांस्तदा ।
न धर्म्मः क्षत्रियस्येति याच्ञा वीर्य्यधनो हि सः ॥ १३ ॥
ततः समस्तसैन्येन काशीशः परिवारितः ।
आक्रान्तुमभ्यगाद्राष्ट्रमलर्कस्य महीपतेः ॥ १४ ॥
अनन्तरैश्च संश्लेषमभ्येत्य तदनन्तरं ।
तेषामन्यतमैर्भृत्यैः समाक्रम्यानयद्वशं ॥ १५ ॥
अपीडयंश्च सामन्तांस्तस्य राष्ट्रोपरोधनैः ।
तथा दुर्गानुपालांश्च चक्रे चाटविकान् वशे ॥ १६ ॥
कांश्चिच्चोपप्रदानेन कांश्चिद्भेदेन पार्थिवान् ।
साम्नैवान्यान् वशं निन्ये निभृतास्तस्य येऽभवन् ॥ १७ ॥

ततः सोऽल्पबलो राजा परचक्रावपीडितः ।
कोषक्षयमवापोच्चैः पुरश्चावरुध्यतारिणा ॥ १८ ॥
इत्थं सम्पीड्यमानस्तु क्षीणकोषो दिने दिने ।
विषादमागात्परमं व्याकुलत्वञ्च चेतसः ॥ १९ ॥
आर्त्तिं स परमां प्राप्य तत्संस्माराङ्गुरीयकं ।
यदुद्दिश्य पुरा प्राह माता तस्य मदालसा ॥ २० ॥
ततः स्नातः शुचिर्भूत्वा वाचयित्वा द्विजोत्तमान् ।
निष्कृष्य शासनं तस्माद्ददृशे प्रस्फुटाक्षरं ॥ २१ ॥
तत्रैव लिखितं मात्रा वाचयामास पार्थिवः ।
प्रकाशपुलकाङ्गोऽसौ प्रहर्षोत्फुल्ललोचनः ॥ २२ ॥
सङ्गः सर्व्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्त्तव्यः सतां सङ्गो हि भेषजं ॥ २३ ॥
कामः सर्व्वात्मना हेयो हातुञ्चेच्छक्यते न सः ।
मुमुक्षां प्रति तत्कार्य्यं सैव तस्यापि भेषजं ॥ २४ ॥
वाचयित्वा तु बहुशो नृणां श्रेयः कथं त्विति ।
ममुक्षयति निश्चित्य सा च तत्सङ्गतो यतः ॥ २५ ॥
ततः स साधुसम्पर्कं चिन्तयन् पृथिवीपतिः ।
दत्तात्रेयं महाभागमगच्छत परमार्त्तिमान् ॥ २६ ॥
तं समेत्य महात्मानमकल्मषमसङ्गिनं ।
प्रणिपत्याभिसम्पूज्य यथान्यायमभाषत ॥ २७ ॥
ब्रह्मन् कुरु प्रसादं मे शरणं शरणार्थिनां ।
दुःखापहारं कुरु मे दुःखार्त्तस्यातिकामिनः ॥ २८ ॥

दत्तात्रेय उवाच ॥

दुःखापहारमद्यैव करोमि तव पार्थिव ।
सत्यं ब्रूहि किमर्थं ते दुःखं तत्पृथिवीपते ॥ २९ ॥

जड उवाच ॥

इत्युक्तश्चिन्तयामास स राजा तेन धीमता ।
त्रिविधस्यापि दुःखस्य स्थानमात्मानमेव च ॥ ३० ॥
स विमृष्य चिरं राजा पुनःपुनरुदारधीः ।
आत्मानमात्मना धीरः प्रहस्येदमथाब्रवीत् ॥ ३१ ॥
नाहमुर्व्वी न सलिलं न ज्योतिरनिलो न च ।
नाकाशं किन्तु शारीरं समेत्य सुखमिष्यते ॥ ३२ ॥
न्यूनातिरिक्ततां याति पञ्चकेऽस्मिन् सुखासुखं ।
यदि स्यान्मम किन्न स्यादन्यस्थेऽपि हितं मयि ॥ ३३ ॥
नित्यप्रभूतसद्भावे न्यूनाधिक्यान्नतोन्नतं ।
तथाच ममतात्यक्तो विशेषेणोपलभ्यते ॥ ३४ ॥
तन्मात्रावस्थिते सूक्ष्मे तृतीयांशे च पश्यतः ।
तथैव भूतसद्भावं शारीरं किं सुखासुखं ॥ ३५ ॥
मनस्यवस्थितं दुःखं सुखं वा मानसञ्च यत् ।
यतस्ततो न मे दुःखं सुखं वा नह्यहं मनः ॥ ३६ ॥
नाहङ्कारो न च मनो बुद्धिर्नाहं यतस्ततः ।
अन्तःकरणजं दुःखं पारक्यं मम तत्कथं ॥ ३७ ॥

नाहं शरीरं न मनो यतोऽहं
पृथक् शरीरान्मनसस्तथाहं ।

तत्सन्तु चेतस्यथवापि देहे
सुखानि दुःखानि च किं ममात्र ॥ ३८ ॥
राज्यस्य वाञ्छां कुरुतेऽग्रजोऽस्य
देहस्य चेत् पञ्चमयः स राशिः ।
गुणप्रवृत्त्या मम किन्नु तत्र
तत्स्थः स चाहञ्च शरीरतोऽन्यः ॥ ३९ ॥
न यस्य हस्तादिकमप्यशेषं
मांसं न चास्थीनि शिराविभागः ।
कस्तस्य नागाश्वरथादिकोषैः
स्वल्पोऽपि सम्बन्ध इहास्ति पुंसः ॥ ४० ॥
तस्मान्न मेऽरिर्न च मेऽस्ति दुःखं
न मे सुखं नापि पुरं न कोषं ।
न चाश्वनागादि बलं न तस्य
नान्यस्य वा कस्य चिद्वा ममास्ति ॥ ४१ ॥
यथा घटीकुम्भकमण्डलुस्थ-
माकाशमेकं बहुधा हि दृष्टं ।
तथा सुबाहुः स च काशिपोऽहं
मन्ये च देहेषु शरीरभेदैः ॥ ४२ ॥

इति श्रीमार्कण्डेयपुराणे पितापुत्रसंवादे आत्मविवेकोऽध्यायः ॥ ३७ ॥

अष्टत्रिंशोऽध्यायः ॥

जड उवाच ॥

दत्तात्रेयं ततो विप्रं प्रणिपत्य स पार्थिवः ।
प्रत्युवाच महात्मानं प्रश्रयावनतो वचः ॥ १ ॥
सम्यक् प्रपश्यतो ब्रह्मन् मम दुःखं न किञ्चन ।
असम्यग्दर्शिनो मग्नाः सर्व्वदैवासुखार्णवे ॥ २ ॥
यस्मिन् यस्मिन्ममासक्ता बुद्धिः पुंसः प्रजायते ।
ततस्ततः समादाय दुःखान्येव प्रयच्छति ॥ ३ ॥
मार्जारभक्षिते दुःखं यादृशं गृहकुक्कुटे ।
न तादृङ्ममताशून्ये कलविङ्केऽथ मूषिके ॥ ४ ॥
सोऽहं न दुःखी न सुखी यतोऽहं प्रकृतेः परः ।
यो भूताभिभवो भूतैः सुखदुःखात्मको हि सः ॥ ५ ॥

दत्तात्रेय उवाच ॥

एवमेतन्नरव्याघ्र यथैतद्व्याहृतं त्वया ।
ममेति मूलं दुःखस्य न ममेति च निर्वृतेः ॥ ६ ॥
मत्प्रश्नादेव ते ज्ञानमुत्पन्नमिदमुत्तमं ।
ममेति प्रत्ययो येन क्षिप्तः शाल्मलितूलवत् ॥ ७ ॥
अहमित्यङ्कुरोत्पन्नो ममेति स्कन्धवान् महान् ।
गृहक्षेत्रोच्चशाखाश्च पुत्रदारादिपल्लवः ॥ ८ ॥
धनधान्यमहापत्रो नैककालप्रवर्द्धितः ।

पुण्यापुण्याग्रपुष्पश्च सुखदुःखमहाफलः ॥ ९ ॥
तत्र मुक्तिपथव्यापी मूढसम्पर्कसेचनः ।
विधित्साभृङ्गमालाढ्यो कृत्यज्ञानमहातरुः ॥ १० ॥
संसाराध्वपरिश्रान्ता ये तच्छायां समाश्रिताः ।
भ्रान्तिज्ञानसुखाधीनास्तेषामात्यन्तिकं कुतः ॥ ११ ॥
यैस्तु सत्सङ्गपाषाणशितेन ममतातरुः ।
छिन्ना विद्याकुठारेण ते गतास्तेन वर्त्मना ॥ १२ ॥
प्राप्य ब्रह्मवनं शीतं नीरजस्कमकण्टकं ।
प्राप्नुवन्ति परां प्राज्ञा निर्वृतिं वृत्तिवर्जिताः ॥ १३ ॥
भूतेन्द्रियमयं स्थूलं न त्वं राजन्न चाप्यहं ।
न तन्मात्रं मया वाच्यं नैवान्तःकरणात्मकौ ॥ १४ ॥
कं वा पश्यामि राजेन्द्र प्रधानमिदमावयोः ।
यतः परो हि क्षेत्रज्ञः संघातो हि गुणात्मकः ॥ १५
मशकोडुम्बरेषीकामुञ्जमत्स्याम्भसां यथा ।
एकत्वेऽपि पृथग्भावस्तथा क्षेत्रात्मनोर्नृप ॥ १६ ॥

अलर्क उवाच ॥

भगवंस्त्वत्प्रसादेन ममाविर्भूतमुत्तमं ।
ज्ञानं प्रधानचिच्छक्तिविवेककरमीदृशं ॥ १७ ॥
किन्त्वत्र विषयाक्रान्ते स्थैर्य्यवत्त्वं न चेतसि ।
न चापि वेद्मि मुच्येयं कथं प्रकृतिबन्धनात् ॥ १८ ॥
कथं न भूयां भूयश्च कथं निर्गुणतामियां ।
कथञ्च ब्रह्मणैकत्वं व्रजेयं शाश्वतेन वै ॥ १९ ॥

तन्मे योगस्तथा ब्रह्मन् प्रणतायाभियाचते ।
सम्यग्ब्रूहि महाप्राज्ञ सत्सङ्गो ह्युपकर्त्तृणां ॥ २० ॥

इति श्रीमार्कण्डेयपुराणे पितापुत्रसंवादे प्रश्नाध्यायः ॥ ३८ ॥



## ऊनचत्वारिंशोऽध्यायः ॥

दत्तात्रेय उवाच ॥

ज्ञानपूर्व्वो वियोगो योऽज्ञानेन सह योगिनः ।
सा मुक्तिर्ब्रह्मणा चैक्यमनैक्यं प्राकृतैर्गुणैः ॥ १ ॥
मुक्तिर्योगात्तथा योगः सम्यग् ज्ञानान्महीपते ।
ज्ञानं दुःखोद्भवं दुःखं ममत्वासक्तचेतसां ॥ २ ॥
तस्मात् सङ्गं प्रयत्नेन मुमुक्षुः सन्त्यजेन्नरः ।
सङ्गाभावे ममेत्यस्याः ख्यातेर्हानिः प्रजायते ॥ ३ ॥
निर्म्ममत्वं सुखायैव वैराग्याद्दोषदर्शनं ।
ज्ञानादेव च वैराग्यं ज्ञानं वैराग्यपूर्व्वकं ॥ ४ ॥
तद्गृहं यत्र वसतिस्तद्भोज्यं येन जीवति ।
यन्मुक्तये तदेवोक्तं ज्ञानमज्ञानमन्यथा ॥ ५ ॥
उपभोगेन पुण्यानामपुण्यानाञ्च पार्थिव ।
कर्त्तव्यानाञ्च नित्यानामकामकरणात्तथा ॥ ६ ॥

असञ्चयादपूर्व्वस्य क्षयात् पूर्व्वार्जितस्य च ।
कर्म्मणो बन्धमाप्नोति शारीरं न पुनः पुनः ॥ ७ ॥
एतत्ते कथितं राजन् योगं चेमं निबोध मे ।
यं प्राप्य ब्रह्मणो योगी शाश्वतान्नान्यतां व्रजेत् ॥ ८ ॥
प्रागेवात्मात्मना जेयो योगिनां स हि दुर्ज्जयः ।
कुर्व्वीत तज्जये यत्नं तस्योपायं शृणुष्व मे ॥ ९
प्राणायामैर्द्दहेद्दोषान् धारणाभिश्च किल्विषं ।
प्रत्याहारेण विषयान् ध्यानेनानीश्वरान् गुणान् ॥ १० ॥
यथा पर्व्वतधातूनां दोषा दह्यन्ति धाम्यतां ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ ११ ॥
प्रथमं साधनं कुर्य्यात् प्राणायामस्य योगवित् ।
प्राणापाननिरोधस्तु प्राणायाम उदाहृतः ॥ १२ ॥
लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधोदितः ।
तस्य प्रमाणं वक्ष्यामि तदलर्क शृणुष्व मे ॥ १३ ॥
लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिस्तु मात्राभिरुत्तमः परिकीर्त्तितः ॥ १४ ॥
निमेषोन्मेषणे मात्राकालो लघ्वक्षरस्तथा ।
प्राणायामस्य सङ्ख्यार्थं स्मृतो द्वादशमात्रिकः ॥ १५ ॥
प्रथमेन जयेत् स्वेदं मध्यमेन च वेपथुं ।
विषादं हि तृतीयेन जयेद्दोषाननुक्रमात् ॥ १६ ॥
मृदुत्वं सेव्यमानास्तु सिंहशार्दूलकुञ्जराः ।
यथा यान्ति तथा प्राणो वश्यो भवति योगिनः ॥ १७ ॥

वश्यं मत्तं यथेच्छातो नागं नयति हस्तिपः ।
तथैव योगी सच्छन्दः प्राणं नयति साधितं ॥ १८ ॥
यथा हि साधितः सिंहो मृगान् हन्ति न मानवान् ।
तद्वन्निषिद्धपवनः किल्विषं न नृणां तनुं ॥ १९ ॥
तस्माद्युक्तः सदा योगी प्राणायामपरो भवेत् ।
श्रूयतां मुक्तिफलदं तस्यावस्थाचतुष्टयं ॥ २० ॥
ध्वस्तिः प्राप्तिस्तथा संवित् प्रसादश्च महीपते ।
स्वरूपं शृणु चैतेषां कथ्यमानमनुक्रमात् ॥ २१ ॥
कर्म्मणामिष्टदुष्टानां जायते फलसंक्षयः ।
चेतसोऽपकषायत्वं यत्र सा ध्वस्तिरुच्यते ॥ २२ ॥
ऐहिकामुष्मिकान् कामान् लोभमोहात्मकान् स्वयं ।
निरुध्यास्ते सदा योगी प्राप्तिः सा सार्व्वकालिकी ॥ २३ ॥
अतीतानागतानर्थान् विप्रकृष्टतिरोहितान् ।
विजानातीन्दुसूर्य्यर्क्षग्रहाणां ज्ञानसम्पदा ॥ २४ ॥
तुल्यप्रभावस्तु यदा योगी प्राप्नोति सम्पदं ।
तदा संविदिति ख्याता प्राणायामस्य संस्थितिः ॥ २५ ॥
यान्ति प्रसादं येनास्य मनः पञ्च च वायवः ।
इन्द्रियाणीन्द्रियार्थाश्च स प्रसाद इति स्मृतः ॥ २६ ॥
शृणुष्व च महीपाल प्राणायामस्य लक्षणं ।
युञ्जतश्च सदा योगं यादृग्विहितमासनं ॥ २७ ॥
पद्ममर्द्धासनञ्चापि तथा स्वस्तिकमासनं ।
आस्थाय योगं युञ्जीत कृत्वा च प्रणवं हृदि ॥ २८ ॥

समः समासनो भूत्वा संहृत्य चरणावुभौ ।
संवृतास्यस्तथैवोरू सम्यग्विष्टभ्य चाग्रतः ॥ २९ ॥
पार्ष्णिभ्यां लिङ्गवृषणावस्पृशन् प्रयतः स्थितः ।
किञ्चिदुन्नामितशिरा दन्तैर्दन्तान्न संस्पृशत् ॥ ३० ॥
संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ।
रजसा तमसो वृत्तिं सत्त्वेन रजसस्तथा ॥ ३१ ॥
सञ्छाद्य निर्म्मले सत्त्वे स्थितो युञ्जीत योगवित् ।
इन्द्रियाणीन्द्रियार्थेभ्यः प्राणादीन्मन एव च ॥ ३२ ॥
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ।
यस्तु प्रत्याहरेत्कामान् सर्व्वाङ्गानीव कच्छपः ॥ ३३ ॥
सदात्मरतिरेकस्थः पश्यत्यात्मानमात्मनि ।
स वाह्याभ्यन्तरं शौचं निष्पाद्याकण्ठनाभितः ॥ ३४ ॥
पूरयित्वा बुधो देहं प्रत्याहारमुपक्रमेत् ।
प्राणायामा दश द्वौ च धारणा साभिधीयते ॥ ३५ ॥
द्वे धारणे स्मृते योगे योगिभिस्तत्त्वदर्शिभिः ।
तथा वै योगयुक्तस्य योगिनो नियतात्मनः ॥ ३६ ॥
सर्व्वे दोषाः प्रणश्यन्ति स्वस्थश्चैवोपजायते ।
वीक्षते च परं ब्रह्म प्राकृतांश्च गुणान् पृथक् ॥ ३७ ॥
व्योमादिपरमाणूंश्च तथात्मानमकल्मषं ।
इत्थं योगी यताहारः प्राणायामपरायण ॥ ३८ ॥
जितां जितां शनैर्भूमिमारोहेत यथा गृहं ।
दोषान् व्याधींस्तथा मोहमाक्रान्ता भूरनिर्जिता ॥ ३९ ॥

विवर्द्धयति नारोहेत्तस्माद्भूमिमनिर्जिताम् ।
प्राणानामुपसंरोधात्प्राणायाम इति स्मृतः ॥ ४० ॥
धारणेत्युच्यते चेयं धार्य्यते यन्मनो यया ।
शब्दादिभ्यः प्रवृत्तानि यदक्षानि यतात्मभिः ॥ ४१ ॥
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ।
उपायश्चात्र कथितो योगिभिः परमर्षिभिः ॥ ४२ ॥
येन व्याध्यादयो दोषा न जायन्ते हि योगिनः ।
यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः ॥ ४३ ॥
आपिबेयुस्तथा वायुं पिबेद्योगी जितश्रमः ।
प्राङ्नाभ्यां हृदये चात्र तृतीये च तथोरसि ॥ ४४ ॥
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्द्धसु ।
किञ्च तस्मात्परस्मिंश्च धारणा परमा स्मृता ॥ ४५ ॥
दशैता धारणाः प्राप्य प्राप्नोत्यक्षरसाम्यताम् ।
नाध्मातः क्षुधितः श्रान्तो नच व्याकुलचेतनः ॥ ४६ ॥
युञ्जीत योगं राजेन्द्र योगी सिद्ध्यर्थमादृतः ।
नातिशीते नचोष्णे वै न द्वन्द्वेनानिलात्मके ॥ ४७ ॥
कालेष्वेतेषु युञ्जीत न योगं ध्यानतत्परः ।
सशब्दाग्निजलाभ्यासे जीर्णगोष्ठे चतुष्पथे ॥ ४८ ॥
शुष्कपर्णचये नद्यां श्मशाने ससरीसृपे ।
सभये कूपतीरे वा चैत्यवल्मीकसञ्चये ॥ ४९ ॥
देशेष्वेतेषु तत्त्वज्ञो योगाभ्यासं विवर्ज्जयेत् ।
सत्त्वस्यानुपपत्तौ च देशकालं विवर्ज्जयेत् ॥ ५० ॥

नामतो दर्शनं योगे तस्मात्तत्परिवर्ज्जयेत् ।
देशानेताननादृत्य मूढत्वाद्यो युनक्ति वै ॥ ५१ ॥
विघ्नाय तस्य वै दोषा जायन्ते तन्निबोध मे ।
वाधिर्य्यं जडता लोपः स्मृतेर्मूकत्वमन्धता ॥ ५२ ॥
ज्वरश्च जायते सद्यस्तत्तदज्ञानयोगिनः ।
प्रमादाद्योगिनो दोषा यद्येते स्युश्चिकित्सितं ॥ ५३ ॥
तेषां नाशाय कर्त्तव्यं योगिनां तन्निबोध मे ।
स्निग्धां यवागूमत्युष्णां भुक्त्वा तत्रैव धारयेत् ॥ ५४ ॥
वातगुल्मप्रशान्त्यर्थमुदावर्त्ते तथोदरे ।
यवागूं वापि पवनं वायुग्रन्थिं प्रतिक्षिपेत् ॥ ५५ ॥
तद्वत्कम्पे महाशैलं स्थिरं मनसि धारयेत् ।
विघाते वचसो वाचं वाधिर्य्ये श्रवणेन्द्रियं ॥ ५६ ॥
यथैवाम्रफलं ध्यायेत् तृष्णार्त्तो रसनेन्द्रिये ।
यस्मिन् यस्मिन्रुजा देहे तस्मिंस्तदुपकारिणीं ॥ ५७
धारयेद्धारणामुष्णे शीतां शीते च दाहिनीं ।
कीलं शिरसि संस्थाप्य काष्ठं काष्ठेन ताडयेत् ॥ ५८ ॥
लुप्तस्मृतेः स्मृतिः सद्यो योगिनस्तेन जायते ।
द्यावापृथिव्यौ वाय्वग्नी व्यापिनावपि धारयेत् ॥ ५९ ॥
अमानुषात् सत्त्वजाद्वा बाधास्त्वेताश्चिकित्सिताः ।
अमानुषं सत्त्वमन्तर्योगिनं प्रविशेद्यदि ॥ ६० ॥
वाय्वग्निधारणेनैनं देहसंस्थं विनिर्दहेत् ।
एवं सर्व्वात्मना रक्षा कार्य्या योगविदा नृप ॥ ६१ ॥

धर्म्मार्थकाममोक्षाणां शरीरं साधनं यतः ।
प्रवृत्तिलक्षणाख्यानाद्योगिनो विस्मयात्तथा ॥
विज्ञानं विलयं याति तस्माद्गोप्याः प्रवृत्तयः ॥ ६२ ॥

आलोल्यमारोग्यमनिष्ठुरत्वं
गन्धः शुभो मूत्रपुरीषमल्पं ।
कान्तिः प्रसादः स्वरसौम्यता च
योगप्रवृत्तेः प्रथमं हि चिह्नं ॥ ६३ ॥

अनुरागी जनो याति परोक्षे गुणकीर्त्तनं ।
न बिभ्यति च सत्त्वानि सिद्धेर्लक्षणमुत्तमं ॥ ६४ ॥
शीतोष्णादिभिरत्युग्रैर्यस्य बाधा न विद्यते ।
न भीतिमेति चान्येभ्यस्तस्य सिद्धिरुपस्थिता ॥ ६५ ॥

इति श्रीमार्कण्डेयपुराणे जडोपाख्याने योगाध्यायः ॥ ३९ ॥

चत्वारिंशोऽध्यायः ।



दत्तात्रेय उवाच ॥

उपसर्गाः प्रवर्त्तन्ते दृष्टे ह्यात्मनि योगिनः ।
ये तांस्ते संप्रवक्ष्यामि समासेन निबोध मे ॥ १ ॥
काम्याः क्रियास्तथा कामान् मानुषानभिवाञ्छति ।
स्त्रियो दानफलं विद्यां मायां कुप्यं धनं दिवं ॥ २ ॥

देवत्वममरेशत्वं रसायनचयः क्रियाः ।
मरुत्प्रपतनं यज्ञं जलाग्न्यावेशनन्तथा ॥ ३ ॥
श्राद्धानां सर्व्वदानानां फलानि नियमांस्तथा ।
तथोपवासात् पूर्त्ताच्च देवताभ्यर्च्चनादपि ॥ ४ ॥
तेभ्यस्तेभ्यश्च कर्म्मभ्य उपसृष्टोऽभिवाञ्छति ।
चित्तमित्थं वर्त्तमानं यत्नाद्योगी निवर्त्तयेत् ॥ ५ ॥
ब्रह्मसङ्गि मनः कुर्व्वन्नुपसर्गात् प्रमुच्यते ।
उपसर्गैर्जितैरेभिरुपसर्गास्ततः पुनः ॥ ६ ॥
योगिनः संप्रवर्त्तन्ते सात्त्वराजसतामसाः ।
प्रातिभः श्रावणो दैवो भ्रमावर्त्तौ तथापरौ ॥ ७ ॥
पञ्चैते योगिनां योगविघ्नाय कटुकोदयाः ।
वेदार्थाः काव्यशास्त्रार्थाः विद्याशिल्पान्यशेषतः ॥ ८ ॥
प्रतिभान्ति यदस्येति प्रातिभः स तु योगिनः ।
शब्दार्थानखिलान् वेत्ति शब्दं गृह्णाति चैव यत् ॥ ९ ॥
योजनानां सहस्रेभ्यः श्रावणः सोऽभिधीयते ।
समन्ताद्वीक्षते चाष्टौ स यदा देवतोपमः ॥ १० ॥
उपसर्गन्तमप्याहुर्दैवमुन्मत्तवद्बुधाः ।
भ्राम्यते यन्निरालम्बं मनो दोषेण योगिनः ॥ ११ ॥
समस्ताचारविभ्रंशाद्भ्रमः स परिकीर्त्तितः ।
आवर्त्त इव तोयस्य ज्ञानावर्त्तो यदाकुलः ॥ १२ ॥
नाशयेच्चित्तमावर्त्त उपसर्गः स उच्यते ।
एतैर्नाशितयोगास्तु सकला देवयोनयः ॥ १३ ॥

उपसर्गैर्म्महाघोरैरावर्त्तन्ते पुनःपुनः ।
प्रावृत्य कम्बलं शुक्लं योगी तस्मान्मनोमयं ॥ १४ ॥
चिन्तयेत् परमं ब्रह्म कृत्वा तत्प्रवणं मनः ।
योगयुक्तः सदा योगी लघ्वाहारो जितेन्द्रियः ॥ १५ ॥
सूक्ष्मास्तु धारणाः सप्त भूराद्या मुर्द्धि धारयेत् ।
धरित्रीं धारयद्योगी तत् सौख्यं प्रतिपद्यते ॥ १६ ॥
आत्मानं मन्यते चोर्व्वीं तद्गन्धञ्च जहाति सः ।
तथैवाप्सु रसं सूक्ष्मं तद्वद्रूपञ्च तेजसि ॥ १७ ॥
स्पर्शं वायौ तथा तद्वद्बिभ्रतस्तस्य धारणां ।
व्योम्नः सूक्ष्मां प्रवृत्तिञ्च शब्दं तद्वज्जहाति सः ॥ १८ ॥
मनसा सर्व्वभूतानां मनस्याविशते यदा ।
मानसीं धारणां बिभ्रन्मनः सूक्ष्मञ्च जायते ॥ १९ ॥
तद्वद्बुद्धिमशेषाणां सत्त्वानामेत्य योगवित् ।
परित्यजति सम्प्राप्य बुद्धिसौक्ष्म्यमनुत्तमं ॥ २० ॥
परित्यजति सूक्ष्माणि सप्त त्वेतानि योगवित् ।
सम्यग्विज्ञाय योऽलर्क तस्यावृत्तिर्न विद्यते ॥ २१ ॥
एतासां धारणानान्तु सप्तानां सौक्ष्ममात्मवान् ।
दृष्ट्वा दृष्ट्वा ततः सिद्धिं त्यक्त्वा त्यक्त्वा परां व्रजेत् ॥ २२ ॥
यस्मिन् यस्मिंश्च कुरुते भूते रागं महीपते ।
तस्मिंस्तस्मिन् समासक्तिं संप्राप्य स विनश्यति ॥ २३ ॥
तस्माद्विदित्वा सूक्ष्माणि संसक्तानि परस्परं ।
परित्यजति यो देही स परं प्राप्नुयात् पदं ॥ २४ ॥

एतान्येव तु सन्धाय सप्त सूक्ष्माणि पार्थिव ।
भूतादीनां विरागोऽत्र सद्भावज्ञस्य मुक्तये ॥ २५ ॥
गन्धादिषु समासक्तिं सम्प्राप्य स विनश्यति ।
पुनरावर्त्तते भूप स ब्रह्मापरमानुषं ॥ २६ ॥
सप्तैता धारणा योगी समतीत्य यदिच्छति ।
तस्मिंस्तस्मिंल्लयं सूक्ष्मे भूते याति नरेश्वर ॥ २७ ॥
देवानामसुराणां वा गन्धर्व्वोरगरक्षसां ।
देहेषु लयमायाति सङ्गं नाप्नोति च क्वचित् ॥ २८ ॥
अणिमा लघिमा चैव महिमा प्राप्तिरेव च ।
प्राकाम्यञ्च तथेशित्वं वशित्वञ्च तथापरं ॥ २९ ॥
यत्र कामावशायित्वं गुणानेतांस्तथैश्वरान् ।
प्राप्नोत्यष्टौ नरव्याघ्र परं निर्व्वाणसूचकान् ॥ ३० ॥
सूक्ष्मात्सूक्ष्मतमोऽणीयान् शीघ्रत्वं लघिमा गुणः ।
महिमाशेषपूज्यत्वात् प्राप्तिर्नाप्राप्यमस्य यत् ॥ ३१ ॥
प्राकाम्यमस्य व्यापित्वादीशित्वञ्चेश्वरो यतः ।
वशित्वाद्वशिमा नाम योगिनः सप्तमो गुणः ॥ ३२ ॥
यत्रेच्छास्थानमप्युक्तं यत्र कामावशायिता ।
ऐश्वर्य्यकारणैरेभिर्योगिनः प्रोक्तमष्टधा ॥ ३३ ॥
मुक्तिसंसूचकं भूप परं निर्व्वाणमात्मनः ।
ततो न जायते नैव वर्द्धते न विनश्यति ॥ ३४ ॥
नापि क्षयमवाप्नोति परिणामं न गच्छति ।
छेदं क्लेदं तथा दाहं शोषं भूरादितो नच ॥ ३५ ॥

भूतवर्गादवाप्नोति शब्दाद्यैः ह्रियते नच ।
नचास्य सन्ति शब्दाद्यास्तद्भोक्ता तैर्न युज्यते ॥ ३६ ॥
यथाहि कनकं खण्डमपद्रव्यवदग्निना ।
दग्धदोषं द्वितीयेन खण्डेनैक्यं व्रजन्नृप ॥ ३७ ॥
न विशेषमवाप्नोति तद्वद्योगाग्निना यतिः ।
निर्दग्धदोषस्तेनैक्यं प्रयाति ब्रह्मणा सह ॥ ३८ ॥
यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् ।
तदाख्यस्तन्मयो भूतो न गृह्येत विशेषतः ॥ ३९ ॥
परेण ब्रह्मणा तद्वत्प्राप्यैक्यं दग्धकिल्बिषः ।
योगी याति पृथग्भावं न कदाचिन्महीपते ॥ ४० ॥
यथा जलं जलेनैक्यं निक्षिप्तमुपगच्छति ।
तथात्मा साम्यमभ्येति योगिनः परमात्मनि ॥ ४१ ॥

इति श्रीमार्कण्डेयपुराणे योगिसिद्धिर्नामाध्यायः ॥ ४० ॥

---

एकचत्वारिंशोऽध्यायः ।



अलर्क उवाच ।

भगवन् योगिनश्चर्य्यां श्रोतुमिच्छामि तत्त्वतः ।
ब्रह्मवर्त्मन्यनुसरन् यद्वा योगी न सीदति ॥ १ ॥

दत्तात्रेय उवाच ।

मानापमानौ यावेतौ प्रीत्युद्वेगकरौ नृणां ।

तावेव विपरीतार्थौ योगिनः सिद्धिकारकौ ॥ २ ॥
मानापमानौ यावेतौ तावेवाहुर्विषामृते ।
अपमानोऽमृतं तत्र मानस्तु विषमं विषं ॥ ३ ॥
चक्षुःपूतं न्यसेत्पादं वस्त्रपूतं जलं पिवेत् ।
सत्यपूतां वदेद्वाणीं बुद्धिपूतञ्च चिन्तयेत् ॥ ४ ॥
आतिथ्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु च ।
महाजनञ्च सिद्ध्यर्थं न गच्छेद्योगवित् क्वचित् ॥ ५ ॥
व्यस्ते विधूमे व्यङ्गारे सर्व्वस्मिन् भुक्तवज्जने ।
अटेत योगविद्भैक्ष्यं नतु त्रिष्वेव नित्यशः ॥ ६ ॥
यथैवमवमन्यन्ते जनाः परिभवन्ति च ।
तथा युक्तश्चरेद्योगी सतां वर्त्म न दूषयन् ॥ ७ ॥
भैक्ष्यञ्चरेद्गृहस्थेषु यायावरगृहेषु च ।
श्रेष्ठा तु प्रथमा चेति वृत्तिरस्योपदिश्यते ॥ ८ ॥
अथ नित्यं गृहस्थेषु शालीनेषु चरेद्यतिः ।
श्रद्दधानेषु दान्तेषु श्रोत्रियेषु महात्मसु ॥ ९ ॥
अत ऊर्द्ध्वं पुनश्चापि अदुष्टापतितेषु च ।
भैक्ष्यचर्य्या विवर्णेषु जघन्या वृत्तिरिष्यते ॥ १० ॥
भैक्ष्यं यवागूं तक्रं वा पयो यावकमेव वा ।
फलं मूलं प्रियङ्गुं वा कणपिण्याकशक्तवः ॥ ११ ॥
इत्येते च शुभाहारा योगिनः सिद्धिकारकाः ।
तत्प्रयुञ्ज्यान्मुनिर्भक्त्या परमेण समाधिना ॥ १२ ॥
अपः पूर्व्वं सकृत् प्राश्य तूष्णीं भूत्वा समाहितः ।

प्राणायेति ततस्तस्य प्रथमा ह्याहुतिः स्मृता ॥ १३ ॥
अपानाय द्वितीया तु समानायेति चापरा ।
उदानाय चतुर्थी स्याद्व्यानायेति च पञ्चमी ॥ १४ ॥
प्राणायामैः पृथक् कृत्वा शेषं भुञ्जीत कामतः ।
अपः पुनः सकृत्प्राश्य आचम्य हृदयं स्पृशेत् ॥ १५ ॥
अस्तेयं ब्रह्मचर्य्यञ्च त्यागोऽलोभस्तथैव च ।
व्रतानि पञ्च भिक्षूणामहिंसापरमाणि वै ॥ १६ ॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवं ।
नित्यस्वाध्याय इत्येते नियमाः पञ्च कीर्त्तिताः ॥ १७ ॥
सारभूतमुपासीत ज्ञानं यत्कार्य्यसाधकं ।
ज्ञानानां बहुता येयं योगविघ्नकरा हि सा ॥ १८ ॥
इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
अपि कल्पसहस्रेषु नैव ज्ञेयमवाप्नुयात् ॥ १९ ॥
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ।
विधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ॥ २० ॥
शून्येष्वेवावकाशेषु गुहासु च वनेषु च ।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपक्रमेत् ॥ २१ ॥
वाग्दण्डः कर्म्मदण्डश्च मनोदण्डश्च ते त्रयः ।
यस्यैते नियता दण्डाः स त्रिदण्डी महायतिः ॥ २२ ॥
सर्व्वमात्ममयं यस्य सदसज्जगदीदृशं ।
गुणागुणमयन्तस्य कः प्रियः को नृपाप्रियः ॥ २३ ॥
विशुद्धबुद्धिः समलोष्ट्रकाञ्चनः

समस्तभूतेषु च तत्समाश्रितः ।
स्थानं परं शाश्वतमव्ययञ्च
परं हि मत्वा न पुनः प्रजायते ॥ २४ ॥
वेदाः श्रेष्ठाः सर्व्वयज्ञक्रियाश्च
यज्ञाज्जप्यं ज्ञानमार्गश्च जप्यात् ।
ज्ञानाद्ध्यानं सङ्गरागव्यपेतं
तस्मिन् प्राप्ते शाश्वतस्योपलब्धिः ॥ २५ ॥
समाहितो ब्रह्मपरोऽप्रमादी
शुचिस्तथैकान्तरतिर्यतेन्द्रियः ।
समाप्नुयाद्योगमिमं महात्मा
विमुक्तिमाप्नोति ततः स्वयोगतः ॥ २६ ॥

इति श्रीमार्कण्डेयपुराणे योगिचर्य्याध्यायः ॥ ४१ ॥

द्विचत्वारिंशोऽध्यायः ॥



दत्तात्रेय उवाच ।

एवं यो वर्त्तते योगी सम्यग्योगव्यवस्थितः ।
न स व्यावर्त्तितुं शक्यो जन्मान्तरशतैरपि ॥ १ ॥
दृष्ट्वा च परमात्मानं प्रत्यक्षं विश्वरूपिणं ।
विश्वपादशिरोग्रीवं विश्वेशं विश्वभावनं ॥ २ ॥
तत्प्राप्तये महत्पुण्यमोमित्येकाक्षरं जपेत् ।

तदेवाध्ययनं तस्य स्वरूपं शृण्वतः परं॥ ३॥
अकारश्च तथोकारो मकारश्चाक्षरत्रयं।
एता एव त्रयो मात्राः सात्त्वराजसतामसाः॥ ४॥
निर्गुणा योगिगम्यान्या चार्द्धमात्रोर्द्धसंस्थिता।
गान्धारीति च विज्ञेया गान्धारस्वरसंश्रया॥ ५॥
पिपीलिकागतिस्पर्शा प्रयुक्ता मूर्द्ध्नि लक्ष्यते।
यथा प्रयुक्त ओङ्कारः प्रतिनिर्याति मूर्द्धनि॥ ६॥
तथोङ्कारमयो योगी त्वक्षरे त्वक्षरो भवेत्।
प्राणो धनुः शरो ह्यात्मा ब्रह्म वेध्यमनुत्तमं॥ ७॥
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्।
ओमित्येतत्त्रयो वेदास्त्रयो लोकास्त्रयोऽग्नयः॥ ८॥
विष्णुर्ब्रह्मा हरश्चैव ऋक्सामानि यजूंषि च।
मात्राः सार्द्धाश्च तिस्रश्च विज्ञेयाः परमार्थतः॥ ९॥
तत्र युक्तस्तु यो योगी स तल्लयमवाप्नुयात्।
अकारस्त्वथ भूर्ल्लोक उकारश्चोच्यते भुवः॥ १०॥
सव्यञ्जनो मकारश्च स्वर्लोकः परिकल्प्यते।
व्यक्ता तु प्रथमा मात्रा द्वितीयाव्यक्तसंज्ञिता॥ ११॥
मात्रा तृतीया चिच्छक्तिरर्द्धमात्रा परं पदं।
अनेनैव क्रमेणैता विज्ञेया योगभूमयः॥ १२॥
ओमित्युच्चारणात् सर्व्वं गृहीतं सदसद्भवेत्।
ह्रस्वा तु प्रथमा मात्रा द्वितीया दैर्घ्यसंयुता॥ १३॥
तृतीया च प्लुतार्द्धाख्या वचसः सा न गोचरा।

इत्येतदक्षरं ब्रह्म परमोङ्कारसंज्ञितं ॥ १४ ॥
यस्तु वेद नरः सम्यक् तथा ध्यायति वा पुनः ।
संसारचक्रमुत्सृज्य त्यक्तत्रिविधबन्धनः ॥ १५ ॥
प्राप्नोति ब्रह्मणि लयं परमे परमात्मनि ।
अक्षीणकर्म्मबन्धश्च ज्ञात्वा मृत्युमरिष्टतः ॥ १६ ॥
उत्क्रान्तिकाले संस्मृत्य पुनर्योगित्वमृच्छति ।
तस्मादसिद्धयोगेन सिद्धयोगेन वा पुनः ॥
ज्ञेयान्यरिष्टानि सदा येनोत्क्रान्तौ न सीदति ॥ १७ ॥

इति श्रीमार्कण्डेयपुराणे योगधर्म्मे ओङ्काराध्यायः ॥ ४२ ॥

---

त्रिचत्वारिंशोऽध्यायः ॥

---

दत्तात्रेय उवाच ॥

अरिष्टानि महाराज शृणु वक्ष्यामि तानि ते ।
येषामालोकनान्मृत्युं निजं जानाति योगवित् ॥ १ ॥
देवमार्गं ध्रुवं शुक्रं सोमच्छायामरुन्धतीं ।
यो न पश्येन्न जीवेत् स नरः संवत्सरात्परं ॥ २ ॥
अरश्मि बिम्बं सूर्य्यस्य वह्निं चैवांशुमालिनं ।
दृष्ट्वैकादशमासात्तु नरो नोर्द्ध्वं तु जीवति ॥ ३ ॥
वान्ते मूत्रपुरीषे च यः स्वर्णं रजतं तथा ।
प्रत्यक्षं कुरुते स्वप्ने जीवेत् स दशमासिकं ॥ ४ ॥

दृष्ट्वा प्रेतपिशाचादीन् गन्धर्व्वनगराणि च ।
सुवर्णवर्णान् वृक्षांश्च नव मासान् स जीवति ॥ ५ ॥
स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते ।
प्रकृतेश्च निवर्त्तेत तस्यायुश्चाष्टमासिकं ॥ ६ ॥
खण्डं यस्य पदं पार्ष्ण्यां पादस्याग्रे च वा भवेत् ।
पांशुकर्दमयोर्मध्ये सप्त मासान् स जीवति ॥ ७ ॥
गृध्रः कपोतः काकोलो वायसो वापि मूर्द्धनि ।
क्रव्यादो वा खगो नीलः षण्मासायुःप्रदर्शकः ॥ ८ ॥
हन्यते काकपङ्क्तीभिः पांशुवर्षेण वा नरः ।
स्वां छायामन्यथा दृष्ट्वा चतुः पञ्च स जीवति ॥ ९ ॥
अनभ्रे विद्युतं दृष्ट्वा दक्षिणां दिशमाश्रितां ।
रात्राविन्द्रधनुश्चापि जीवितं द्वित्रिमासिकं ॥ १० ॥
घृते तैले तथादर्शे तोये वा नात्मनस्तनुं ।
यः पश्येदशिरस्कां वा मासादूर्द्धं न जीवति ॥ ११ ॥
यस्य वस्तसमो गन्धो गात्रे शवसमोऽपिवा ।
तस्यार्द्धमासिकं ज्ञेयं योगिनो नृप जीवितं ॥ १२ ॥
यस्य वै स्नातमात्रस्य हृत्पादमवशुष्यते ।
पिवतश्च जलं शोषो दशाहं सोऽपि जीवति ॥ १३ ॥
सम्भिन्नो मारुतो यस्य मर्म्मस्थानानि कृन्तति ।
हृष्यते नाम्बुसंस्पर्शात् तस्य मृत्युरुपस्थितः ॥ १४ ॥
ऋक्षवानरयानस्थो गायन् यो दक्षिणां दिशं ।
स्वप्ने प्रयाति तस्यापि न मृत्युः कालमिच्छति ॥ १५ ॥

रक्तकृष्णाम्बरधरा गायन्ती हसती च यं।
दक्षिणाशान्नयेन्नारी स्वप्ने सोऽपि न जीवति ॥ १६ ॥
नग्नं क्षपणकं स्वप्ने हसमानं महाबलं।
एकं संवीक्ष्य वल्गन्तं विद्यान्मृत्युमुपस्थितं ॥ १७ ॥
आमस्तकतलाद्यस्तु निमग्नं पङ्कसागरे।
स्वप्ने पश्यत्यथात्मानं स सद्यो म्रियते नरः ॥ १८ ॥
केशाङ्गारांस्तथा भस्म भुजङ्गान्निर्जलां नदीं।
दृष्ट्वा स्वप्ने दशाहात्तु मृत्युरेकादशे दिने ॥ १९ ॥
करालैर्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः।
पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युं लभेन्नरः ॥ २० ॥
सूर्योदये यस्य शिवा क्रोशन्ती याति सम्मुखं।
विपरीतं परीतं वा स सद्यो मृत्युमृच्छति ॥ २१ ॥
यस्य वै भुक्तमात्रस्य हृदयं बाधते क्षुधा।
जायते दन्तघर्षश्च स गतायुर्न संशयं ॥ २२ ॥
दीपगन्धं नयो वेत्ति त्रस्यत्यह्नि तथा निशि।
नात्मानं परनेत्रस्थं वीक्षते न स जीवति ॥ २३ ॥
शक्रायुधं चार्द्धरात्रे दिवा ग्रहगणांस्तथा।
दृष्ट्वा मन्येत संक्षीणमात्मजीवितमात्मवित् ॥ २४ ॥
नासिका वक्रतामेति कर्णयोर्नमनोन्नती।
नेत्रञ्च वामं स्रवति यस्य तस्यायुरुद्गतं ॥ २५ ॥
आरक्ततामेति मुखं जिह्वा वा श्यामतां यदा।
तदा प्राज्ञो विजानीयान्मृत्युमासन्नमात्मनः ॥ २६ ॥

उत्ष्ट्रासभयानेन यः स्वप्ने दक्षिणां दिशं ।
प्रयाति तञ्च जानीयात् सद्योमृत्युं न संशयः ॥ २७ ॥
पिधाय कर्णौ निर्घोषं न शृणोत्यात्मसम्भवं ।
नश्यते चक्षुषोर्ज्योतिर्यस्य सोऽपि न जीवति ॥ २८ ॥
पततो यस्य वै गर्त्ते स्वप्ने द्वारं पिधीयते ।
नचोत्तिष्ठति यः श्वभ्रात्तदन्तं तस्य जीवितं ॥ २९ ॥

ऊर्द्धा च दृष्टिर्न च संप्रतिष्ठा
रक्ता पुनः संपरिवर्त्तमाना ।
मुखस्य चोष्मा शुषिरञ्च नाभेः
शंसन्ति पुंसामपरं शरीरं ॥ ३० ॥

स्वप्नेऽग्निं प्रविशेद्यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवितं ॥ ३१ ॥
यश्चाभिहन्यते दुष्टैर्भूतैरात्रावथो दिवा ।
स मृत्युं सप्तरात्र्यन्ते नरः प्राप्नोत्यसंशयं ॥ ३२ ॥
स्ववस्त्रममलं शुक्लं रक्तं पश्यत्यथासितं ।
यः पुमान् मृत्युमासन्नं तस्यापि हि विनिर्दिशेत् ॥ ३३ ॥
स्वभाववैपरीत्यन्तु प्रकृतेश्च विपर्य्ययः ।
कथयन्ति मनुष्याणां सदासन्नौ यमान्तकौ ॥ ३४ ॥
येषां विनीतः सततं येऽस्य पूज्यतमा मताः ।
तानेव चावजानाति तानेव च विनिन्दति ॥ ३५ ॥
देवान्नार्चयते वृद्धान् गुरून् विप्रांश्च निन्दति ।
मातापित्रोर्न सत्कारं जामातॄणां करोति च ॥ ३६ ॥

योगिनां ज्ञानविदुषामन्येषाञ्च महात्मनां ।
प्राप्ते तु काले पुरुषस्तद्विज्ञेयं विचक्षणैः ॥ ३७ ॥
योगिनां सततं यत्नादरिष्टान्यवनीपते ।
संवत्सरान्ते तज्ज्ञेयं फलदानि दिवानिशं ॥ ३८ ॥
विलोक्या विशदा चैषां फलपंक्तिः सुभीषणा ।
विज्ञाय कार्य्या मनसि स च कालो नरेश्वर ॥ ३९ ॥
ज्ञात्वा कालञ्च तं सम्यगभयस्थानमाश्रितः ।
युञ्जीत योगी कालोऽसौ यथा नास्याफलो भवेत् ॥ ४० ॥
दृष्ट्वारिष्टं तथा योगी त्यक्त्वा मरणजं भयं ।
तत्स्वभावं तदालोक्य काले यावत्युपागतं ॥ ४१ ॥
तस्य भागे तथैवाह्नो योगं युञ्जीत योगवित् ।
पूर्व्वाह्णे चापराह्णे च मध्याह्ने चापि तद्दिने ॥ ४२ ॥
यत्र वा रजनीभागे तदरिष्टं निरीक्षितं ।
तत्रैव तावद्युञ्जीत यावत्प्राप्तं हि तद्दिनं ॥ ४३ ॥
ततस्त्यक्त्वा भयं सर्व्वं जित्वा तं कालमात्मवान् ।
तत्रैवावसथे स्थित्वा यत्र वा स्थैर्य्यमात्मनः ॥ ४४ ॥
युञ्जीत योगं निर्जित्य त्रीन् गुणान् परमात्मनि ।
तन्मयश्चात्मना भूत्वा चिद्वृत्तिमपि सन्त्यजेत् ॥ ४५ ॥
ततः परमनिर्व्वाणमतीन्द्रियमगोचरं ।
यद्बुद्धेर्यन्न चाख्यातुं शक्यते तत्समश्नुते ॥ ४६ ॥
एतत्सर्व्वं समाख्यातं तवालर्क यथार्थवत् ।
प्राप्स्यसे येन तद्ब्रह्म संक्षेपात्तन्निबोध मे ॥ ४७ ॥

शशाङ्करश्मिसंयोगाच्चन्द्रकान्तमणिः पयः ।
समुत्सृजति नायुक्तः सोपमा योगिनः स्मृता ॥ ४८ ॥
यथार्करश्मिसंयोगादर्ककान्तो हुताशनं ।
आविष्करोति नैकः सन्नुपमा सापि योगिनः ॥ ४९ ॥
पिपीलिकाखुनकुलगृहगोधाकपिञ्जलाः ।
वसन्ति स्वामिवद्गेहे ध्वस्ते यान्ति ततोऽन्यतः ॥ ५० ॥
दुःखन्तु स्वामिनो ध्वंसे तस्य तेषां न किञ्चन ।
वेश्मनो यत्र राजेन्द्र सोपमा योगसिद्धये ॥ ५१ ॥
मृद्देहिकाल्पदेहापि मुखाग्रेणाप्यणीयसा ।
करोति मृद्भारचयमुपदेशः स योगिनः ॥ ५२ ॥
पशुपक्षिमनुष्याद्यैः पत्रपुष्पफलान्वितं ।
वृक्षं विलुप्यमानन्तु दृष्ट्वा सिद्ध्यन्ति योगिनः ॥ ५३ ॥
रुरुशावविषाणाग्रमालक्ष्य तिलकाकृतिं ।
सह तेन विवर्द्धन्तं योगी सिद्धिमवाप्नुयात् ॥ ५४ ॥
द्रवपूर्णमुपादाय पात्रमारोहतो भुवः ।
तुङ्गमङ्गं विलोक्योच्चैर्विज्ञातं किं न योगिना ॥ ५५ ॥
सर्व्वस्वं जीवनायालं निखाते पुरुषस्य या ।
चेष्टा तां तत्त्वतो ज्ञात्वा योगिनः कृतकृत्यता ॥ ५६ ॥
तद्गृहं यत्र वसति तद्भोज्यं येन जीवति ।
येन सम्पद्यते चार्थस्तत्सुखं ममता च का ॥ ५७ ॥
अभ्यर्थितोऽपि तैः कार्य्यं करोति करणैर्यथा ।
तथा बुद्ध्यादिभिर्योगी पारक्यैः साधयेत्परं ॥ ५८ ॥

जड उवाच ॥

ततः प्रणम्याचिपश्चमलर्कः स महीपतिः ।
प्रश्रयावनतो वाक्यमुवाचातिमुदान्वितः ॥ ५९ ॥

अलर्क उवाच ॥

दिष्ट्या दैवैरिदं ब्रह्मन् पराभिभवसम्भवं ।
उपपादितमत्युग्रं प्राणसन्देहदम्भयं ॥ ६० ॥
दिष्ट्या काशिपतेर्भूरिबलसम्पत्पराक्रमः ।
यदुच्छेदादिहायातः स युष्मत्सङ्गदो मम ॥ ६१ ॥
दिष्ट्या मन्दबलश्चाहं दिष्ट्या भृत्याश्च मे हताः ।
दिष्ट्या कोषः क्षयं यातो दिष्ट्याहं भीतिमागतः ॥ ६२ ॥
दिष्ट्या त्वत्पादयुगलं मम स्मृतिपथं गतं ।
दिष्ट्या त्वदुक्तयः सर्व्वा मम चेतसि संस्थिताः ॥ ६३ ॥
दिष्ट्या ज्ञानं ममोत्पन्नं भवतश्च समागमात् ।
भवता चैव कारुण्यं दिष्ट्या ब्रह्मन् कृतं मम ॥ ६४ ॥
अनर्थोऽप्यर्थतां याति पुरुषस्य शुभोदये ।
यथेदमुपकाराय व्यसनं सङ्गमात्तव ॥ ६५ ॥
सुबाहुरुपकारी मे स च काशिपतिः प्रभो ।
ययोः कृतेऽहं संप्राप्तो योगीश भवतोऽन्तिकं ॥ ६६ ॥
सोऽहन्त्वत्प्रसादाग्निनिर्दग्धाज्ञानकिल्बिषः ।
तथा यतिष्ये येनेदृङ् भूयां दुःखभाजनं ॥ ६७ ॥
परित्यजिष्ये गार्हस्थ्यमार्त्तिपादपकाननं ।
त्वत्तोऽनुज्ञां समासाद्य ज्ञानदातुर्महात्मनः ॥ ६८ ॥

दत्तात्रेय उवाच ॥

गच्छ राजेन्द्र भद्रं ते यथा ते कथितं मया ।
निर्म्ममो निरहङ्कारस्तथा चर विमुक्तये ॥ ६९ ॥

जड उवाच ॥

एवमुक्तः प्रणम्यैनमाजगाम त्वरान्वितः ।
यत्र काशिपतिर्भ्राता सुबाहुश्चास्य सोऽग्रजः ॥ ७० ॥
समुत्पत्य महाबाहुं सोऽलर्कः काशिभूपतिं ।
सुबाहोरग्रतो वीरमुवाच प्रहसन्निव ॥ ७१ ॥
राज्यकामुक काशीश भुज्यतां राज्यमूर्जितं ।
यथा च रोचते तद्वत् सुबाहोः संप्रयच्छ वा ॥ ७२ ॥

काशिराज उवाच ॥

कमलर्क परित्यक्तं राज्यन्ते संयुगं विना ।
क्षत्रियस्य न धर्म्मोऽयं भवांश्च क्षात्रधर्म्मवित् ॥ ७३ ॥
निर्जितामात्यवर्गस्तु त्यक्त्वा मरणजं भयं ।
सन्दधीत शरं राजा लक्ष्यमुद्दिश्य वैरिणां ॥ ७४ ॥
तं जित्वा नृपतिर्भोगान् यथाभिलषितान् वरान् ।
भुञ्जीत परमं सिद्ध्यै यजेत च महामखैः ॥ ७५ ॥

अलर्क उवाच ॥

एवमीदृशकं वीर ममाप्यासीन्मनः पुरा ।
साम्प्रतं विपरीतार्थं शृणु चाप्यत्र कारणं ॥ ७६ ॥
यथायं भौतिकः सङ्घस्तथान्तःकरणं नृणां ।
गुणास्तु सकलास्तद्वदशेषेष्वेव जन्तुषु ॥ ७७ ॥

चिच्छक्तिरेकएवायं यदा नान्योऽस्ति कश्चन ।
तदा का नृपते ज्ञानाम्मिचारिप्रभुभृत्यता ॥ ७८ ॥
तन्मया दुःखमासाद्य त्वद्भयोद्भवमुत्तमं ।
दत्तात्रेयप्रसादेन ज्ञानं प्राप्तं नरेश्वर ॥ ७९ ॥
निर्जितेन्द्रियवर्गस्तु त्यक्त्वा सङ्गमशेषतः ।
मनो ब्रह्मणि सन्धाय तज्जये परमो जयः ॥ ८० ॥
संसाध्यमन्यत्तल्लिङ्गौ यतः किञ्चिन्न विद्यते ।
इन्द्रियाणि च संयम्य ततः सिद्धिं नियच्छति ॥ ८१ ॥

सोऽहं न तेऽरिर्न ममासि शत्रुः
सुबाहुरेषो न ममापकारी ।
दृष्टं मया सर्व्वमिदं यथात्मा
अन्विष्यतां भूप रिपुस्त्वयान्यः ॥ ८२ ॥
इत्थं स तेनाभिहितो नरेन्द्रो
हृष्टः समुत्थाय ततः सुबाहुः ।
दिष्ट्येति तं भ्रातरमाभिनन्द्य
काशीश्वरं वाक्यमिदं बभाषे ॥ ८३ ॥

इति श्रीमार्कण्डेयपुराणेऽरिष्टाध्यायः ॥ ४२ ॥

---

चतुश्चत्वारिंशोऽध्यायः ।

सुबाहुरुवाच ।

यदर्थं नृपशार्दूल त्वामहं शरणं गतः ।
तन्मया सकलं प्राप्तं यास्यामि त्वं सुखी भव ॥ १ ॥

काशिराज उवाच ।

किन्निमित्तं भवान् प्राप्तो निष्पन्नोऽर्थश्च कस्तव ।
सुबाहो तन्ममाचक्ष्व परं कौतूहलं हि मे ॥ २ ॥
समाक्रान्तमलर्केण पितृपैतामहं महत् ।
राज्यं देहीति निर्जित्य त्वयाहमभिचोदितः ॥ ३ ॥
ततो मया समाक्रम्य राज्यमस्यानुजस्य ते ।
एतत्ते बलमानीतं तद्भुङ्क्ष्व कुलोचितं ॥ ४ ॥

सुबाहुरुवाच ॥

काशिराज निबोध त्वं यदर्थमयमुद्यमः ।
कृतो मया भवांश्चैव कारितोऽत्यन्तमुद्यमं ॥ ५ ॥
भ्राता ममायं ग्राम्येषु शक्तो भोगेषु तत्त्ववित् ।
विमूढौ बोधवन्तौ च भ्रातरावग्रजौ मम ॥ ६ ॥
तयोर्म्मम च यन्मात्रा बाल्ये स्तन्यं यथा मुखे ।
तथावबोधो विन्यस्तः कर्णयोरवनीपते ॥ ७ ॥
तयोर्म्मम च विज्ञेयाः पदार्था ये मता नृभिः ।
प्रकाश्यम्मनसो नीतास्ते मात्रा नास्य पार्थिव ॥ ८ ॥

यथैकमर्थं यातानामेकस्मिन्नवसीदति ।
दुःखं भवति साधूनां तथास्माकं महीपते ॥ ९ ॥
गार्हस्थ्यमोहमापन्ने सीदत्यस्मिन्नरेश्वर ।
सम्बन्धिन्यस्य देहस्य बिभ्रति भ्रातृकल्पनां ॥ १० ॥
ततो मया विनिश्चित्य दुःखाद्वैराग्यभावना ।
भविष्यतीत्यस्य भवानित्युद्योगाय संश्रितः ॥ ११ ॥
तदस्य दुःखाद्वैराग्यं संबोधादवनीपते ।
समुद्भूतं कृतं कार्य्यं भद्रं तेऽस्तु व्रजाम्यहं ॥ १२ ॥
उष्ट्वा मदालसागर्भे पीत्वा तस्यास्तथा स्तनं ।
नान्यनारीसुतैर्यातं वर्त्म यात्विति पार्थिव ॥ १३ ॥
विचार्य्य तन्मया सर्व्वं युष्मत्संश्रयपूर्व्वकं ।
कृतं तच्चापि निष्पन्नं प्रयास्ये सिद्धये पुनः ॥ १४ ॥
उपेक्ष्यते सीदमानः स्वजनो बान्धवः सुहृत् ।
यैर्नरेन्द्र न तान् मन्ये सेन्द्रिया विकला हि ते ॥ १५ ॥
सुहृदि स्वजने बन्धौ समर्थे योऽवसीदति ।
धर्म्मार्थकाममोक्षेभ्यो वाच्यास्ते तत्र न त्वमी ॥ १६ ॥
एतत् त्वत्सङ्गमाद् भूप मया कार्य्यं महत्कृतं ।
स्वस्ति तेऽस्तु गमिष्यामि ज्ञानभाग्भव सत्तम ॥ १७ ॥

काशिराज उवाच ॥

उपकारस्त्वया साधोरलर्कस्य कृतो महान् ।
ममोपकाराय कथं न करोषि स्वमानसं ॥ १८ ॥
फलदायी सतां सद्भिः सङ्गमो नाफलो यतः ।

तस्मात्त्वत्संश्रयाद्युक्ता मया प्राप्ता समुन्नतिः ॥ १९ ॥

सुबाहुरुवाच ॥

धर्म्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयं ।
तत्र धर्म्मार्थकामास्ते सकला हीयतेऽपरः ॥ २० ॥
तत्ते सङ्क्षेपतो वक्ष्ये तदिहैकमनाः शृणु ।
श्रुत्वा च सम्यगालोच्य यतेथाः श्रेयसे नृप ॥ २१ ॥
ममेतिप्रत्ययो भूप न कार्य्योऽहमिति त्वया ।
सम्यगालोच्य धर्म्मो हि धर्म्माभावे निराश्रयः ॥ २२ ॥
कस्याहमिति सञ्ज्ञेयमित्यालोच्य त्वयात्मना ।
वाह्यान्तर्गतमालोच्यमालोच्यापररात्रिषु ॥ २३ ॥
अव्यक्तादिविशेषान्तमविकारमचेतनं ।
व्यक्ताव्यक्तं त्वया ज्ञेयं ज्ञाता कश्चाहमित्युत ॥ २४ ॥
एतस्मिन्नेव विज्ञाते विज्ञातमखिलं त्वया ।
अनात्मन्यात्मविज्ञानमस्वे स्वमिति मूढता ॥ २५ ॥
सोऽहं सर्व्वगतो भूप लोकसंव्यवहारतः ।
मयेदमुच्यते सर्व्वं त्वया पृष्टो व्रजाम्यहं ॥ २६ ॥
एवमुक्त्वा ययौ धीमान् सुबाहुः काशिभूमिपं ।
काशिराजोऽपि संपूज्य सोऽलर्क्कं स्वपुरं ययौ ॥ २७ ॥
अलर्क्कोऽपि सुतं ज्येष्ठमभिषिच्य नराधिपं ।
वनं जगाम सन्त्यक्तसर्व्वसङ्गः स्वसिद्धये ॥ २८ ॥
ततः कालेन महता निर्द्दन्द्वो निष्परिग्रहः ।
प्राप्य योगर्द्धिमतुलां परं निर्व्वाणमाप्तवान् ॥ २९ ॥

पश्यन् जगदिदं सर्व्वं सदेवासुरमानुषं ।
पाशैर्गुणमयैर्बद्धं बध्यमानञ्च नित्यशः ॥ ३० ॥
पुत्त्रादिभ्रातृपुत्त्रादिस्वपारक्यादिभावितैः ।
आकृष्यमाणं करणैर्दुःखार्त्तं भिन्नदर्शनं ॥ ३१ ॥
अज्ञानपङ्कगर्भस्थमनुद्धारं महामतिः ।
आत्मानञ्च समुत्तीर्णं गाथामेतामगायत ॥ ३२ ॥
अहो कष्टं यदस्माभिः पूर्व्वं राज्यमनुष्ठितं ।
इति पश्चान्मया ज्ञातं योगान्नास्ति परं सुखं ॥ ३३ ॥

जड उवाच ॥

तातैनं त्वं समातिष्ठ मुक्तये योगमुत्तमं ।
प्राप्स्यसे येन तद्ब्रह्म यत्र गत्वा न शोचसि ॥ ३४ ॥
ततोऽहमपि यास्यामि किं यज्ञैः किं जपेन मे ।
कृतकृत्यस्य करणं ब्रह्मभावाय कल्पते ॥ ३५ ॥
त्वत्तोऽनुज्ञामवाप्याहं निर्द्वन्द्वो निष्परिग्रहः ।
प्रयतिष्ये तथा मुक्तौ यथा यास्यामि निर्वृतिं ॥ ३६ ॥

पक्षिण ऊचुः ॥

एवमुक्त्वा स पितरं प्राप्यानुज्ञां ततश्च सः ।
ब्रह्मन् जगाम मेधावी परित्यक्तपरिग्रहः ॥ ३७ ॥
सोऽपि तस्य पिता तद्वत् क्रमेण सुमहामतिः ।
वानप्रस्थं समास्थाय चतुर्थाश्रममभ्यगात् ॥ ३८ ॥
तत्रात्मजं समासाद्य हित्वा बन्धं गुणादिकं ।
प्राप सिद्धिं परां प्राज्ञस्तत्कालोपात्तसंमतिः ॥ ३९ ॥

एतत्ते कथितं ब्रह्मन् यत्पृष्टा भवता वयं ।
सुविस्तरं यथावच्च किमन्यच्छ्रोतुमिच्छसि ॥ ४० ॥

इति श्रीमार्कण्डेयपुराणे पितापुत्रसंवादे जडोपाख्यानं समाप्तं ॥ ४४ ॥

---

पञ्चचत्वारिंशोऽध्यायः ॥

जैमिनिरुवाच

सम्यगेतन्ममाख्यातं भवद्भिर्द्विजसत्तमाः ।
प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म्म वैदिकं ॥ १ ॥
अहो पितृप्रसादेन भवतां ज्ञानमीदृशं ।
येन तिर्य्यक्त्वमप्येतत्प्राप्य मोहस्तिरस्कृतः ॥ २ ॥
धन्या भवन्तः संसिद्धौ प्रागवस्थास्थितं यतः ।
भवतां विषयोद्भूतैर्न्न मोहैश्चाल्यते मनः ॥ ३ ॥
दिष्ट्या भगवता तेन मार्कण्डेयेन धीमता ।
भवन्तो वै समाख्याताः सर्व्वसन्देहहृत्तमाः ॥ ४ ॥
संसारेऽस्मिन्मनुष्याणां भ्रमतामतिसङ्कटे ।
भवद्विधैः समं सङ्गो जायते न तपस्विनां ॥ ५ ॥
यद्यहं सङ्गमासाद्य भवद्भिर्ज्ञानदृष्टिभिः ।
न स्यां कृतार्थस्तन्नूनं न मेऽन्यत्र कृतार्थता ॥ ६ ॥
प्रवृत्ते च निवृत्ते च भवतां ज्ञानकर्म्मणि ।

मतिमस्तमलां मन्ये यथा नान्यस्य कस्यचित् ॥ ७ ॥
यदि त्वनुग्रहवती मयि बुद्धिर्द्विजोत्तमाः ।
भवतां तत्समाख्यातुमर्हतेदमशेषतः ॥ ८ ॥
कथमेतत्समुद्भूतं जगत् स्थावरजङ्गमं ।
कथञ्च प्रलयं काले पुनर्यास्यति सत्तमाः ॥ ९ ॥
कथञ्च वंशाद्देवर्षिपितृभूतादिसम्भवाः ।
मन्वन्तराणि च कथं वंशानुचरितञ्च यत् ॥ १० ॥
यावत्यः सृष्टयश्चैव यावन्तः प्रलयास्तथा ।
यथा कल्पविभागश्च या च मन्वन्तरस्थितिः ॥ ११ ॥
यथा च क्षितिसंस्थानं यत्प्रमाणञ्च वै भुवः ।
यथास्थिति समुद्राद्रिनिम्नगाः काननानि च ॥ १२ ॥
भूर्लोकादिस्वर्लोकानां गणः पातालसंश्रयः ।
गतिस्तथार्कसोमादिग्रहर्क्षज्योतिषामपि ॥ १३ ॥
श्रोतुमिच्छाम्यहं सर्व्वमेतदाहूतसंप्लव ।
उपसंहृते च यच्छेषं जगत्यस्मिन् भविष्यति ॥ १४ ॥

पक्षिण ऊचुः ॥

प्रश्नभारोऽयमतुलो यस्त्वया मुनिसत्तम ।
पृष्टस्तन्ते प्रवक्ष्यामस्तत् शृणुष्वेह जैमिने ॥ १५ ॥
मार्कण्डेयेन कथितं पुरा क्रौष्टुकये यथा ।
द्विजपुत्राय शान्ताय व्रतस्नाताय धीमते ॥ १६ ॥
मार्कण्डेयं महात्मानमुपासीनं द्विजोत्तमैः ।
क्रौष्टुकिः परिपप्रच्छ यदेतत्पृष्टवान प्रभो ॥ १७ ॥

तस्य चाकथयत् प्रीत्या यन्मुनिर्भृगुनन्दनः ।
तत्ते प्रकथयिष्यामः शृणु त्वं द्विजसत्तम ॥ १८ ॥
प्रणिपत्य जगन्नाथं ब्रह्मयोनिं पितामहं ।
जगद्योनिं स्थितं सृष्टौ स्थितौ विष्णुस्वरूपिणं ॥
प्रलये चान्तकर्त्तारं रौद्रं रुद्रस्वरूपिणं ॥ १९ ॥

मार्कण्डेय उवाच ॥

उत्पन्नमात्रस्य पुरा ब्रह्मणोऽव्यक्तजन्मनः ।
पुराणमेतद्वेदाश्च मुखेभ्योऽनुविनिःसृताः ॥ २० ॥
पुराणसंहिताश्चक्रुर्बहुलाः परमर्षयः ।
वेदानां प्रविभागश्च कृतस्तैस्तु सहस्रशः ॥ २१ ॥
धर्म्मज्ञानञ्च वैराग्यमैश्वर्य्यञ्च महात्मनः ।
तस्योपदेशेन विना न हि सिद्धञ्चतुष्टयं ॥ २२ ॥
वेदान् सप्तर्षयस्तस्माज्जगृहुस्तस्य मानसाः ।
पुराणं जगृहुश्चाद्या मुनयस्तस्य मानसाः ॥ २३ ॥
भृगोः सकाशाच्च्यवनस्तेनोक्तञ्च द्विजन्मनां ।
ऋषिभिश्चापि दक्षाय प्रोक्तमेतन्महात्मभिः ॥ २४ ॥
दक्षेण चापि कथितमिदमासीत्तदा मम ।
तत्तुभ्यं कथयाम्यद्य कलिकल्मषनाशनं ॥ २५ ॥
सर्व्वमेतन्महाभाग श्रूयतां मे समाधिना ।
यथाश्रुतं मया पूर्व्वं दक्षस्य गदतो मुने ॥ २६ ॥
प्रणिपत्य जगद्योनिमजमव्ययमाश्रयं ।
चराचरस्य जगतो धातारं परमं पदं ॥ २७ ॥

ब्रह्माणमादिपुरुषमुत्पत्तिस्थितिसंयमे ।
यत्कारणमनौपम्यं यत्र सर्व्वं प्रतिष्ठितं ॥ २८ ॥
तस्मै हिरण्यगर्भाय लोकतन्त्राय धीमते ।
प्रणम्य सम्यग्वक्ष्यामि भूतवर्गमनुत्तमं ॥ २९ ॥
महदाद्यं विशेषान्तं सवैरूप्यं सलक्षणं ।
प्रमाणैः पञ्चभिर्गम्यं स्रोतोभिः षड्भिरन्वितं ॥ ३० ॥
पुरुषाधिष्ठितं नित्यमनित्यमिव च स्थितं ।
तच्छ्रूयतां महाभाग परमेण समाधिना ॥ ३१ ॥
प्रधानं कारणं यत्तदव्यक्ताख्यं महर्षयः ।
यदाहुः प्रकृतिं सूक्ष्मां नित्यां सदसदात्मिकां ॥ ३२ ॥
ध्रुवमक्षय्यमजरममेयं नान्यसंश्रयं ।
गन्धरूपरसैर्हीनं शब्दस्पर्शविवर्ज्जितं ॥ ३३ ॥
अनाद्यन्तं जगद्योनिं त्रिगुणप्रभवाप्ययं ।
असाम्प्रतमविज्ञेयं ब्रह्माग्रे समवर्त्तत ॥ ३४ ॥
प्रलयस्यानु तेनेदं व्याप्तमासीदशेषतः ।
गुणसाम्यात्ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने ॥ ३५ ॥
गुणभावात्सृज्यमानात् सर्गकाले ततः पुनः ।
प्रधानं तत्त्वमुद्भूतं महान्तं तत्समावृणोत् ॥ ३६ ॥
यथा बीजं त्वचा तद्वदव्यक्तेनावृतो महान् ।
सात्त्विको राजसश्चैव तामसश्च त्रिधोदितः ॥ ३७ ॥
ततस्तस्मादहङ्कारस्त्रिविधो वै व्यजायत ।
वैकारिकस्तैजसश्च भूतादिश्च सतामसः ॥ ३८ ॥

महता चावृतः सोऽपि यथाव्यक्तेन वै महान् ।
भूतादिस्तु विकुर्व्वाणः शब्दतन्मात्रकन्ततः ॥ ३९ ॥
ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणं ।
आकाशं शब्दमात्रन्तु भूतादिश्चावृणोत्ततः ॥ ४० ॥
स्पर्शतन्मात्रमेवेह जायते नात्र संशयः ।
बलवान् जायते वायुस्तस्य स्पर्शगुणो मतः ॥ ४१ ॥
वायुश्चापि विकुर्व्वाणो रूपमात्रं ससर्ज ह ।
ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते ॥ ४२ ॥
स्पर्शमात्रस्तु वै वायूरूपमात्रं समावृणोत् ।
ज्योतिश्चापि विकुर्व्वाणं रसमात्रं ससर्ज ह ॥ ४३ ॥
सम्भवन्ति ततो ह्यापश्चासन् वै ता रसात्मिकाः ।
रसमात्रन्तु ताह्यापो रूपमात्रं समावृणोत् ॥ ४४ ॥
आपश्चापि विकुर्व्वत्यो गन्धमात्रं ससर्ज्जिरे ।
सङ्घातो जायते तस्मात्तस्य गन्धो गुणो मतः ॥ ४५ ॥
तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता ।
अविशेषवाचकत्वादविशेषास्ततश्च ते ॥ ४६ ॥
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषतः ।
भूततन्मात्रसर्गोऽयमहङ्कारात्तु तामसात् ॥ ४७ ॥
वैकारिकादहङ्कारात् सत्त्वोद्रिक्तात्तु सात्त्विकात् ।
वैकारिकः स सर्गस्तु युगपत् सम्प्रवर्त्तते ॥ ४८ ॥
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्म्मेन्द्रियाणि च ।
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ॥ ४९ ॥

एकादशं मनस्तत्र देवा वैकारिकाः स्मृताः ।
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ॥ ५० ॥
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वक्ष्यते ।
पादौ पायुरुपस्थश्च हस्तौ वाक् पञ्चमी भवेत् ॥ ५१ ॥
गतिर्विसर्गो ह्यानन्दः शिल्पं वाक्यञ्च कर्म्म तत् ।
आकाशं शब्दमात्रन्तु स्पर्शमात्रं समाविशत् ॥ ५२ ॥
द्विगुणो जायते वायुस्तस्य स्पर्शो गुणो मतः ।
रूपन्तथैवाविशतः शब्दस्पर्शगुणावुभौ ॥ ५३ ॥
द्विगुणस्तु ततश्चाग्निः स शब्दस्पर्शरूपवान् ।
शब्दः स्पर्शश्च रूपञ्च रसमात्रं समाविशत् ॥ ५४ ॥
तस्माच्चतुर्गुणा ह्यापो विज्ञेयास्ता रसात्मिकाः ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धं समाविशत् ॥ ५५
संहता गन्धमात्रेण आवृण्वंस्ते महीमिमां ।
तस्मात् पञ्चगुणा भूमिः स्थूला भूतेषु दृश्यते ॥ ५६ ॥
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ।
परस्परानुप्रवेशाद्धारयन्ति परस्परं ॥ ५७ ॥
भूमेरन्तस्त्विमं सर्व्वं लोकालोकं घनावृतं ।
विशेषाश्चेन्द्रियग्राह्या नियतत्वाच्च ते स्मृताः ॥ ५८ ॥
गुणं पूर्व्वस्य पूर्व्वस्य प्राप्नुवन्त्युत्तरोत्तरं ।
नानावीर्य्याः पृथग्भूताः सप्तैते संहतिं विना ॥ ५९ ॥
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ।
समेत्यान्योन्यसंयोगमन्योन्याश्रयिणश्च ते ॥ ६० ॥

एकसंघातचिह्नाश्च संप्राप्यैक्यमशेषतः ।
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च ॥ ६१ ॥
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ।
जलवुद्बुदवत्तच्च क्रमाद्वै वृद्धिमागतं ॥ ६२ ॥
भूतेभ्योऽण्डं महाबुद्धे वृहत्तदुदकेशयं ।
प्राकृतेऽण्डे विवृद्धः सन् क्षेत्रज्ञो ब्रह्मसंज्ञितः ॥ ६३ ॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्त्ता च भूतानां ब्रह्माग्रे समवर्त्तत ॥ ६४ ॥
तेन सर्व्वमिदं व्याप्तं त्रैलोक्यं सचराचरं ।
मेरुस्तस्यानुसम्भूतो जरायुश्चापि पर्व्वताः ॥ ६५ ॥
समुद्रा गर्भसलिलं तस्याण्डस्य महात्मनः ।
तस्मिन्नण्डे जगत्सर्व्वं सदेवासुरमानुषं ॥ ६६ ॥
द्वीपाद्यद्रिसमुद्राश्च सज्योतिर्लोकसंग्रहः ।
जलानिलानलाकाशैस्ततो भूतादिना वहिः ॥ ६७ ॥
वृतमण्डं दशगुणैरेकैकत्वेन तैः पुनः ।
महता तत्प्रमाणेन सहैवानेन वेष्टितः ॥ ६८ ॥
महांस्तैः सहितः सर्व्वैरव्यक्तेन समावृतः ।
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतं ॥ ६९ ॥
अन्योन्यमावृतवता अष्टौ प्रकृतयः स्थिताः ।
एषा सा प्रकृतिर्नित्या तदन्तः पुरुषश्च सः ॥ ७० ॥
ब्रह्माख्यः कथितो यस्ते समासात् श्रूयतां पुनः ।
यथा मग्नो जले कश्चिदुन्मज्जन् जलसम्भवं ॥ ७१ ॥

जलञ्च क्षिपति ब्रह्मा स तथा प्रकृतिर्विभुः ।
अव्यक्तं क्षेत्रमुद्दिष्टं ब्रह्मा क्षेत्रज्ञ उच्यते ॥ ७२ ॥
एतत्समस्तं जानीयात् क्षेत्रक्षेत्रज्ञलक्षणं ।
इत्येष प्राकृतः सर्गः क्षेत्रज्ञाधिष्ठितस्तु सः ॥
अबुद्धिपूर्व्वः प्रथमः प्रादुर्भूतस्तडिद्यथा ॥ ७३ ॥

इति श्रीमार्कण्डेयपुराणे ब्रह्मोत्पत्तिर्नाम ॥ ४५ ॥

---

षट्चत्वारिंशोऽध्यायः ॥

क्रौष्टुकिरुवाच ॥

भगवंस्त्वण्डसम्भूतिर्यथावत् कथिता मम ।
ब्रह्माण्डे ब्रह्मणो जन्म तथाचोक्तं महात्मनः ॥ १ ॥
एतदिच्छाम्यहं श्रोतुं त्वत्तो भृगुकुलोद्भव ।
यदा न सृष्टिर्भूतानामस्ति किन्नु न चास्ति वा ॥
काले वै प्रलयस्यान्ते सर्व्वस्मिन्नुपसंहृते ॥ २ ॥

मार्कण्डेय उवाच ॥

यदा तु प्रकृतौ याति लयं विश्वमिदं जगत् ।
तदोच्यते प्राकृतोऽयं विद्वद्भिः प्रतिसञ्चरः ॥ ३ ॥
स्वात्मन्यवस्थितेऽव्यक्ते विकारे प्रतिसंहृते ।
प्रकृतिः पुरुषश्चैव साधर्म्म्येणावतिष्ठतः ॥ ४ ॥

तदा तमश्च सत्त्वञ्च समत्वेन व्यवस्थितौ ।
अनुद्रिक्तावनूनौ च तत्प्रोतौ च परस्परं ॥ ५ ॥
तिलेषु वा यथा तैलं घृतं पयसि वा स्थितं ।
तथा तमसि सत्त्वे च रजोऽप्यनुसृतं स्थितं ॥ ६ ॥
उत्पत्तिर्ब्रह्मणो यावदायुषो द्विपरार्द्धिकं ।
तावद्दिनं परेशस्य तत्समा संयमे निशा ॥ ७ ॥
अहर्मुखे प्रबुद्धस्तु जगदादिरनादिमान् ।
सर्व्वहेतुरचिन्त्यात्मा परः कोऽप्यपरक्रियः ॥ ८ ॥
प्रकृतिं पुरुषञ्चैव प्रविश्याशु जगत्पतिः ।
क्षोभयामास योगेन परेण परमेश्वरः ॥ ९ ॥
यथा मदो नवस्त्रीणां यथा वा माधवानिलः ।
अनुप्रविष्टः क्षोभाय तथासौ योगमूर्त्तिमान् ॥ १० ॥
प्रधाने क्षोभ्यमाने तु स देवो ब्रह्मसञ्ज्ञितः ।
समुत्पन्नोऽण्डकोषस्थो यथा ते कथितं मया ॥ ११ ॥
स एव क्षोभकः पूर्व्वं स क्षोभ्यः प्रकृतेः पतिः ।
स संकोचविकाशाभ्यां प्रधानत्वेऽपि च स्थितः ॥ १२ ॥
उत्पन्नः स जगद्योनिरगुणोऽपि रजोगुणं ।
भुञ्जन् प्रवर्त्तते सर्गे ब्रह्मत्वं समुपाश्रितः ॥ १३ ॥
ब्रह्मत्वे स प्रजाः सृष्ट्वा ततः सत्त्वातिरेकवान् ।
विष्णुत्वमेत्य धर्म्मेण कुरुते परिपालनं ॥ १४ ॥
ततस्तमोगुणोद्रिक्तो रुद्रत्वे चाखिलं जगत् ।
उपसंहृत्य वै शेते त्रैलोक्यं त्रिगुणोऽगुणः ॥ १५ ॥

यथा प्राग्व्यापकः क्षेत्री पालको लावकस्तथा।
तथा स संज्ञामायाति ब्रह्मविष्णीशकारिणीं ॥ १६ ॥
ब्रह्मत्वे सृजते लोकान् रुद्रत्वे संहरत्यपि।
विष्णुत्वे चाप्युदासीनस्तिस्रोऽवस्थाः स्वयम्भुवः ॥ १७ ॥
रजो ब्रह्मा तमो रुद्रो विष्णुः सत्त्वं जगत्पतिः।
एत एव त्रयो देवा एत एव त्रयो गुणाः ॥ १८ ॥
अन्योन्यमिथुना ह्येते अन्योन्याश्रयिणस्तथा।
क्षणं वियोगो न ह्येषां न त्यजन्ति परस्परं ॥ १९ ॥
एवं ब्रह्मा जगत्पूर्वो देवदेवश्चतुर्मुखः।
रजोगुणं समाश्रित्य स्रष्टृत्वे स व्यवस्थितः ॥ २० ॥
हिरण्यगर्भो देवादिरनादिरुपचारतः।
भूपद्मकर्णिकासंस्थो ब्रह्माग्रे समजायत ॥ २१ ॥
तस्य वर्षशतं त्वेकं परमायुर्महात्मनः।
ब्राह्मेणैव हि मानेन तस्य संख्यां निबोध मे ॥ २२ ॥
निमेषैर्दशभिः काष्ठा तथा पञ्चभिरुच्यते।
कलास्त्रिंशच्च वै काष्ठा मुहूर्त्तं त्रिंशत्ताः कलाः ॥ २३ ॥
अहोरात्रं मुहूर्त्तानां नृणां त्रिंशत्तु वै स्मृतं।
अहोरात्रैश्च त्रिंशद्भिः पक्षौ द्वौ मास उच्यते ॥ २४ ॥
तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे।
तद्देवानामहोरात्रं दिनं तत्रोत्तरायणं ॥ २५ ॥
दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितं।
चतुर्युगं द्वादशभिस्तद्विभागं शृणुष्व मे ॥ २६ ॥

चत्वारि तु सहस्राणि वर्षाणां कृतमुच्यते ।
शतानि सन्ध्या चत्वारि सन्ध्यांशश्च तथाविधः ॥ २७ ॥
त्रेता त्रीणि सहस्राणि दिव्याब्दानां शतत्रयं ।
तत्सन्ध्या तत्समा चैव सन्ध्यांशश्च तथाविधः ॥ २८ ॥
द्वापरं द्वे सहस्रे तु वर्षाणां द्वे शते तथा ।
तस्य सन्ध्या समाख्याता द्वे शताब्दे तदंशकः ॥ २९ ॥
कलिः सहस्रं दिव्यानामब्दानां द्विजसत्तम ।
सन्ध्या सन्ध्यांशकश्चैव शतकौ समुदाहृतौ ॥ ३० ॥
एषा द्वादशसाहस्री युगाख्या कविभिः कृता ।
एतत् सहस्रगुणितमहो ब्राह्ममुदाहृतं ॥ ३१ ॥
ब्रह्मणो दिवसे ब्रह्मन् मनवः स्युश्चतुर्दश ।
भवन्ति भागशस्तेषां सहस्रं तद्विभज्यते ॥ ३२ ॥
देवाः सप्तर्षयः सेन्द्रा मनुस्तत्सूनवो नृपाः ।
मनुना सह सृज्यन्ते संह्रियन्ते च पूर्व्ववत् ॥ ३३ ॥
चतुर्युगानां संख्याता साधिका ह्येकसप्ततिः ।
मन्वन्तरं तस्य संख्यां मानुषाब्दैर्निबोध मे ॥ ३४ ॥
त्रिंशत् कोट्यस्तु संपूर्णाः संख्याताः संख्यया द्विज ।
सप्तषष्टिस्तथान्यानि नियुतानि च संख्यया ॥ ३५ ॥
विंशतिश्च सहस्राणि कालोऽयं साधिकं विना ।
एतन्मन्वन्तरं प्रोक्तं दिव्यैर्वर्षैर्न्निबोध मे ॥ ३६ ॥
अष्टौ वर्षसहस्राणि दिव्यया संख्यया युतं ।
द्विपञ्चाशत्तथान्यानि सहस्राण्यधिकानि तु ॥ ३७ ॥

चतुर्द्दशगुणो ह्येष कालो ब्राह्यमहः स्मृतं ।
तस्यान्ते प्रलयः प्रोक्तो ब्रह्मन् नैमित्तिको बुधैः ॥ ३८ ॥
भूर्लोकोऽथ भुवर्ल्लोकः स्वर्लोकश्च विनाशिनः ।
तथा विनाशमायाति महर्लोकश्च तिष्ठति ॥ ३९ ॥
तद्वासिनोऽपि तापेन जनलोकं प्रयान्ति वै ।
एकार्णवे च त्रैलोक्ये ब्रह्मा स्वपिति वै निशि ॥ ४० ॥
तत्प्रमाणैव सा रात्रिस्तदन्ते सृज्यते पुनः ।
एवन्तु ब्रह्मणो वर्षमेकं वर्षशतन्तु तत् ॥ ४१ ॥
शतं हि तस्य वर्षाणां परमित्यभिधीयते ।
पञ्चाशद्भिस्तथा वर्षैः परार्द्धमिति कीर्त्त्यते ॥ ४२ ॥
एवमस्य परार्द्धन्तु व्यतीतं द्विजसत्तम ।
यस्यान्तेऽभून्महाकल्पः पाद्मइत्यभिविश्रुतः ॥ ४३ ॥
द्वितीयस्य परार्द्धस्य वर्त्तमानस्य वै द्विज ।
वाराह इति कल्पोऽयं प्रथमः परिकल्पितः ॥ ४४ ॥

इति श्रीमार्कण्डेयपुराणे ब्रह्मायुः प्रमाणं ॥ ४६ ॥

सप्तचत्वारिंशोऽध्यायः ॥



क्रौष्टुकिरुवाच ॥

यथा ससर्ज वै ब्रह्मा भगवानादिकृत्प्रजाः ।
प्रजापतिः पतिर्द्देवस्तन्मे विस्तरतो वद ॥ १ ॥

मार्कण्डेय उवाच ॥

कथयाम्येष ते ब्रह्मन् ससर्ज भगवान् यथा ।
लोककृच्छाश्वतः कृत्स्नं जगत् स्थावरजङ्गमं ॥ २ ॥
पद्मावसाने प्रलये निशासुप्तोत्थितः प्रभुः ।
सत्त्वोद्रिक्तस्तदा ब्रह्मा शून्यं लोकमवैक्षत ॥ ३ ॥
इमञ्चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।
ब्रह्मस्वरूपिणं देवं जगतः प्रभवाव्ययं ॥ ४ ॥
आपो नारा वै तनव इत्यपां नाम शुश्रुम ।
तासु शेते स यस्माच्च तेन नारायणः स्मृतः ॥ ५ ॥
विबुद्धः सलिले तस्मिन् विज्ञायान्तर्गतां महीं ।
अनुमानात् समुद्धारं कर्त्तुकामस्तदा क्षितेः ॥ ६ ॥
अकरोत् स तनूरन्याः कल्पादिषु यथा पुरा ।
मत्स्यकूर्म्मादिकास्तद्वद्वाराहं वपुरास्थितः ॥ ७ ॥
वेदयज्ञमयं दिव्यं वेदयज्ञमयो विभुः ।
रूपं कृत्वा विवेशाप्सु सर्व्वगः सर्व्वसम्भवः ॥ ८ ॥
समुद्धृत्य च पातालान्मुमोच सलिले भुवं ।
जनलोकस्थितैः सिद्धैश्चिन्त्यमानो जगत्पतिः ॥ ९ ॥
तस्योपरि जलौघस्य महती नौरिव स्थिता ।
विततत्वात्तु देहस्य न मही याति संप्लवं ॥ १० ॥
ततः क्षितिं समीकृत्य पृथिव्यां सोऽचिनोद्गिरीन् ।
प्राक् सर्गे दह्यमाने तु तदा सम्वर्त्तकाग्निना ॥ ११ ॥
तेनाग्निना विशीर्णास्ते पर्व्वता भुवि सर्व्वशः ।

गौत्वा एकार्णवे मग्ना वायुनापस्तु संहताः ॥ १२ ॥
निपन्ना यत्र यत्रासंस्तत्र तत्राचला भवन् ।
भूविभागन्ततः कृत्वा सप्तद्वीपोपशोभितं ॥ १३ ॥
भूराद्यांश्चतुरो लोकान् पूर्ववत् समकल्पयत् ।
सृष्टिञ्चिन्तयतस्तस्य कल्पादिषु यथा पुरा ॥ १४ ॥
अबुद्धिपूर्वकस्तस्मात् प्रादुर्भूतस्तमोमयः ।
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ॥ १५ ॥
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ।
पञ्चधावस्थितः सर्गो ध्यायतोऽप्रतिबोधवान् ॥ १६ ॥
वहिरन्तश्चाप्रकाशः संवृतात्मा नगात्मकः ।
मुख्या नगा यतश्चोक्ता मुख्यसर्गस्ततस्त्वयं ॥ १७ ॥
तं दृष्ट्वा साधकं सर्गममन्यदपरं पुनः ।
तस्याभिध्यायतः सर्गं तिर्य्यक्स्रोतो ह्यवर्त्तत ॥ १८ ॥
यस्मात्तिर्य्यक्प्रवृत्तिः सा तिर्य्यक्स्रोतस्ततः स्मृतः ।
पश्वादयस्ते विख्यातास्तमःप्राया ह्यवेदिनः ॥ १९ ॥
उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः ।
अहंकृता अहंमाना अष्टाविंशद्विधात्मकाः ॥ २० ॥
अन्तःप्रकाशास्ते सर्व्वे आवृतास्तु परस्परं ।
तमप्यसाधकं मत्वा ध्यायतोऽन्यस्ततोऽभवत् ॥ २१ ॥
ऊर्द्धस्रोतस्तृतीयस्तु सात्त्विकोर्द्धमवर्त्तत ।
ते सुखप्रीतिबहुला वहिरन्तस्त्वनावृताः ॥ २२ ॥
प्रकाशा वहिरन्तश्च ऊर्द्धस्रोतःसमुद्भवाः ।

तुष्टात्मनस्तृतीयस्तु देवसर्गो हि स स्मृतः ॥ २३ ॥
तस्मिन् सर्गेऽभवत् प्रीतिर्निष्पन्ने ब्रह्मणस्तदा ।
ततोऽन्यं स तदा दध्यौ साधकं सर्गमुत्तमं ॥ २४ ॥
तथाभिध्यायतस्तस्य सत्याभिध्यायिनस्ततः ।
प्रादुर्बभौ तदाव्यक्तादर्व्वाक्स्रोतस्तु साधकः ॥ २५ ॥
यस्मादर्व्वाग्व्यवर्त्तन्त ततोऽर्वाक्स्रोतसस्तु ते ।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः ॥ २६ ॥
तस्मात्ते दुःखबहुला भूयोभूयश्च कारिणः ।
प्रकाशा बहिरन्तश्च मनुष्याः साधकाश्च ते ॥ २७ ॥
पञ्चमोऽनुग्रहः सर्गः स चतुर्द्धा व्यवस्थितः ।
विपर्य्ययेण सिद्ध्या च शान्त्या तुष्ट्या तथैव च ॥ २८ ॥
निर्वृत्तं वर्त्तमानञ्च तेऽर्थं जानन्ति वै पुनः ।
भूतादिकानां भूतानां षष्ठः सर्गः स उच्यते ॥ २९ ॥
ते परिग्रहिणः सर्व्वे संविभागरतास्तथा ।
चोदनाश्चाप्यशीलाश्च ज्ञेया भूतादिकाश्च ते ॥ ३० ॥
प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ।
तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ॥ ३१ ॥
वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियकः स्मृतः ।
इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्व्वकः ॥ ३२ ॥
मुख्यः सर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्य्यक्स्रोतस्तु यः प्रोक्तस्तिर्य्यग्योन्यः स पञ्चमः ॥ ३३ ॥
ततोऽर्द्धस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ।

ततोर्व्वाकस्रोतसां सर्गः सप्तमः स तु मानुषः ॥ ३४ ॥
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च सः ।
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ॥ ३५ ॥
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ।
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ॥ ३६ ॥

इति श्रीमार्कण्डेयपुराणे प्राकृतवैकृतसर्गः ॥ ४७ ॥



अष्टचत्वारिंशोऽध्यायः ॥

क्रौष्टुकिरुवाच ॥

समासात् कथिता सृष्टिः सम्यग्भगवता मम ।
देवादीनां भवं ब्रह्मन् विस्तरात्तु ब्रवीहि मे ॥ १ ॥

मार्कण्डेय उवाच ॥

कुशला कुशलैर्ब्रह्मन् भाविता पूर्व्वकर्म्मभिः ।
ख्याता तया ह्यनिर्मुक्ताः प्रलये ह्युपसंहृताः ॥ २ ॥
देवाद्याः स्थावरान्ताश्च प्रजा ब्रह्मंश्चतुर्व्विधाः ।
ब्रह्मणः कुर्व्वतः सृष्टिं जज्ञिरे मानसास्तदा ॥ ३ ॥
ततो देवासुरपितॄन् मानुषांश्च चतुष्टयं ।
सिसृक्षुरम्भांस्येतानि स्वमात्मानमयूयुजत् ॥ ४ ॥
युक्तात्मनस्तमोमात्रा उद्रिक्ताभूत् प्रजापतेः ।

सिसृक्षोर्जघनात् पूर्वमसुरा जज्ञिरे ततः ॥ ५ ॥
उत्ससर्ज ततस्तान्तु तमोमात्रात्मिकां तनुं ।
सापविद्धा तनुस्तेन सद्यो रात्रिरजायत ॥ ६ ॥
अन्यां तनुमुपादाय सिसृक्षुः प्रीतिमाप सः ।
सत्त्वोद्रेकास्ततो देवा मुखतस्तस्य जज्ञिरे ॥ ७ ॥
उत्ससर्ज च भूतेशस्तनुं तामप्यसौ विभुः ।
सा चापविद्धा दिवसं सत्त्वप्रायमजायत ॥ ८ ॥
सत्त्वमात्रात्मिकामेव ततोऽन्यां जगृहे तनुं ।
पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे ॥ ९ ॥
सृष्ट्वा पितॄनुत्ससर्ज तनुं तामपि स प्रभुः ।
सा चोत्सृष्टाभवत् सन्ध्या दिननक्तान्तरस्थिता ॥ १० ॥
रजोमात्रात्मिकामन्यां तनुं भेजेऽथ स प्रभुः ।
ततो मनुष्याः सम्भूता रजोमात्रासमुद्भवाः ॥ ११ ॥
सृष्ट्वा मनुष्यान् स विभुरुत्ससर्ज तनुं ततः ।
ज्योत्स्ना समभवत् सा च नक्तान्तेऽहर्मुखे च या ॥ १२ ॥
इत्येतास्तनवस्तस्य देवदेवस्य धीमतः ।
ख्याता रात्र्यहनी चैव सन्ध्या ज्योत्स्ना च वै द्विज ॥ १३ ॥
ज्योत्स्ना सन्ध्या तथैवाहः सत्त्वमात्रात्मकं त्रयं ।
तमोमात्रात्मिका रात्रिः सा वै तस्मात् त्रियामिका ॥ १४ ॥
तस्माद्देवा दिवा रात्रावसुरास्तु बलान्विताः ।
ज्योत्स्नागमे च मनुजाः सन्ध्यायां पितरस्तथा ॥ १५ ॥
भवन्ति बलिनोऽधृष्या विपक्षाणां न संशयः ।

तद्विपर्य्ययमासाद्य प्रयान्ति च विपर्य्ययं ॥ १६ ॥
ज्योत्स्ना राज्यहनी सन्ध्या चत्वार्य्येतानि वै प्रभोः ।
ब्रह्मणस्तु शरीराणि त्रिगुणोपश्रितानि तु ॥ १७ ॥
चत्वार्य्येतान्यथोत्पाद्य ततमन्यां प्रजापतिः ।
रजस्तमोमयीं रात्रौ जगृहे क्षुतृड्डन्वितः ॥ १८ ॥
तदन्धकारे क्षुत्क्षामानसृजद्भगवानजः ।
विरूपान् श्मश्रुलानतुमारब्धास्ते च तां ततं ॥ १९ ॥
रक्षाम इति तेभ्योऽन्ये य ऊचुस्ते तु राक्षसाः ।
खादाम इति ये चोचुस्ते यक्षा यक्षणात् द्विज ॥ २० ॥
तान् दृष्ट्वा ह्यप्रियेणास्य केशाः शीर्य्यन्त वेधसः ।
समारोहणहीनाश्च शिरसो ब्रह्मणस्तु ते ॥ २१ ॥
सर्पणात्तेऽभवन् सर्पा हीनत्वादहयः स्मृताः ।
सर्पान् दृष्ट्वा ततः क्रोधात् क्रोधात्मानो विनिर्ममे ॥ २२ ॥
वर्णेन कपिलेनोग्रास्ते भूताः पिशिताशनाः ।
ध्यायतो गां ततस्तस्य गन्धर्व्वा जज्ञिरे सुताः ॥ २३ ॥
जज्ञिरे पिवतो वाचं गन्धर्व्वास्तेन ते स्मृताः ।
अष्टास्वेतासु सृष्टासु देवयोनिषु स प्रभुः ॥ २४ ॥
ततः स्वदेहतोऽन्यानि वयांसि पशवोऽसृजत् ।
मुखतोऽजाः ससर्जाथ वक्षसश्चावयोऽसृजत् ॥ २५ ॥
गावश्चैवोदराद्ब्रह्मा पार्श्वाभ्याञ्च विनिर्ममे ।
पद्भ्याञ्चाश्वान् समातङ्गान्रासभान् शशकान् मृगान् ॥२६॥
उष्ट्रानश्वतरांश्चैव नानारूपाश्च जातयः ।

ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे ॥ २७ ॥
एवं पश्वोषधीः सृष्ट्वा ह्ययजच्चाध्वरे विभुः ।
तस्मादादौ तु कल्पस्य त्रेतायुगमुखे तदा ॥ २८ ॥
गौरजः पुरुषो मेषो ह्यश्वाश्वतरगर्द्दभाः ।
एतान् ग्राम्यान् पशूनाहुरारण्यांश्च निबोध मे ॥ २९ ॥
श्वापदं द्विखुरं हस्ती वानराः पक्षिपञ्चमाः ।
औदकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः ॥ ३० ॥
गायत्रीञ्च ऋचश्चैव त्रिवृत् साम रथन्तरं ।
अग्निष्टोमञ्च यज्ञानां निर्ममे प्रथमान्मुखात् ॥ ३१ ॥
यजूंषि त्रैष्टुभं छन्दः स्तोमं पञ्चदशन्तथा ।
बृहत् साम तथोक्थञ्च दक्षिणादसृजन्मुखात् ॥ ३२ ॥
सामानि जगतीछन्दः स्तोमं पञ्चदशन्तथा ।
वैरूपमतिरात्रञ्च निर्ममे पश्चिमान्मुखात् ॥ ३३ ॥
एकविंशमथर्व्वाणमाप्तोर्य्यामाणमेव च ।
अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् ॥ ३४ ॥
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ।
वयांसि च ससर्ज्जादौ कल्पस्य भगवान् विभुः ॥ ३५ ॥
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ।
सृष्ट्वा चतुष्टयं पूर्व्वं देवासुरपितॄन् प्रजाः ॥ ३६ ॥
ततोऽसृजत् स भूतानि स्थावराणि चराणि च ।
यक्षान् पिशाचान् गन्धर्व्वांस्तथैवाप्सरसाङ्गणान् ॥ ३७ ॥
नरकिन्नररक्षांसि वयःपशुमृगोरगान् ।

अव्ययञ्च व्ययञ्चैव यदिदं स्थाणुजङ्गमं ॥ ३८ ॥
तेषां ये यानि कर्म्माणि प्राक् सृष्टेः प्रतिपेदिरे ।
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ॥ ३९ ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ४० ॥
इन्द्रियार्थेषु भूतेषु शरीरेषु च स प्रभुः ।
नानात्वं विनियोगञ्च धातैव व्यदधात् स्वयं ॥ ४१ ॥
नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनं ।
वेदशब्देभ्य एवादौ देवादीनाञ्चकार सः ॥ ४२ ॥
ऋषीणां नामधेयानि याश्च देवेषु सृष्टयः ।
सर्व्वर्य्यन्ते प्रसूतानामन्येषाञ्च ददाति सः ॥ ४३ ॥
यथार्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ ४४
एवंविधाः सृष्टयस्तु ब्रह्मणोऽव्यक्तजन्मनः ।
सर्व्वर्य्यन्ते प्रबुद्धस्य कल्पे कल्पे भवन्ति वै ॥ ४५ ॥

इति श्रीमार्कण्डेयपुराणे सृष्टिप्रकरणे ॥ ४८ ॥

---

ऊनपञ्चाशोऽध्यायः ॥

---

क्रौष्टुकिरुवाच ।

अर्व्वाक्स्रोतस्तु कथितो भवताऽयस्तु मानुषः ।
ब्रह्मन् विस्तरतो ब्रूहि ब्रह्मा समसृजद्यथा ॥ १ ॥

यथा च वर्णानसृजद्यद्गुणांश्च महामते ।
यच्च येषां स्मृतं कर्म्म विप्रादीनां वदस्व तत् ॥ २ ॥

मार्कण्डेय उवाच ।

ब्रह्मणः सृजतः पूर्व्वं सत्याभिध्यायिनस्तथा ।
मिथुनानां सहस्रन्तु मुखात्सोऽथासृजन्मुने ॥ ३ ॥
जातास्ते ह्युपपद्यन्ते सत्त्वोद्रिक्ताः सुतेजसः ।
सहस्रमन्यद्वक्षस्तो मिथुनानां ससर्ज्ज ह ॥ ४ ॥
ते सर्व्वे रजसोद्रिक्ताः शुष्मिणश्चाप्यमर्षिणः ।
ससर्जान्यत् सहस्रन्तु दुःस्थानां मरुतः पुनः ॥ ५ ॥
रजस्तमोभ्यामुद्रिक्ता ईहाशीलास्तु ते स्मृताः ।
पद्भ्यां सहस्रमन्यच्च मिथुनानां ससर्ज ह ॥ ६ ॥
उद्रिक्तास्तमसा सर्व्वे निःश्रीका ह्यल्पचेतसः ।
ततः संहर्षमानास्ते द्वन्द्वोत्पन्नास्तु प्राणिनः ॥ ७ ॥
अन्योन्यहृच्छयाविष्टा मैथुनायोपचक्रमुः ।
ततः प्रभृति कल्पेऽस्मिन् मिथुनानां हि सम्भवः ॥ ८ ॥
मासि मास्यार्त्तवं यत्तु न तदासीत्तु योषितां ।
तस्मात्तदा न सुषुवुः सेवितैरपि मैथुनैः ॥ ९ ॥
आयुषोऽन्ते प्रसूयन्ते मिथुनान्येव ताः सकृत् ।
ततः प्रभृति कल्पेऽस्मिन् मिथुनानां हि सम्भवः ॥ १० ॥
ध्यानेन मनसा तासां प्रजानां जायते सकृत् ।
शब्दादिर्विषयः शुद्धः प्रत्येकं पञ्चलक्षणः ॥ ११ ॥
इत्येषा मानुषी सृष्टिर्या पूर्व्वं वै प्रजापतेः ।

तस्यान्ववायसम्भूता यैरिदं पूजितं जगत् ॥ १२ ॥
सरित्सरःसमुद्रांश्च सेवन्ते पर्व्वतानपि ।
तास्तदा ह्यल्पशीतोष्णा युगे तस्मिंश्चरन्ति वै ॥ १३ ॥
तृप्तिं स्वाभाविकीं प्राप्ता विषयेषु महामते ।
न तासां प्रतिघातोऽस्ति न द्वेषो नापि मत्सरः ॥ १४ ॥
पर्व्वतोदधिसेविन्यो ह्यनिकेतास्तु सर्व्वशः ।
ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः ॥ १५ ॥
पिशाचोरगरक्षांसि तथा मत्सरिणो जनाः ।
पशवः पक्षिणश्चैव नक्रा मत्स्याः सरीसृपाः ॥ १६ ॥
अवारका ह्यण्डजा वा ते ह्यधर्म्मप्रसूतयः ।
न मूलफलपुष्पाणि नार्त्तवा वत्सराणि च ॥ १७ ॥
सर्व्वकालसुखः कालो नात्यर्थं घर्म्मशीतता ।
कालेन गच्छता तेषां चित्ता सिद्धिरजायत ॥ १' ॥
ततश्च तेषां पूर्व्वाह्ने मध्याह्ने च वितृप्तता ।
पुनस्तथेच्छतां तृप्तिरनायासेन साभवत् ॥ १९ ॥
इच्छताञ्च तथायासो मनसः समजायत ।
अपां सौक्ष्म्यं ततस्तासां सिद्धिर्नाम्नावयो न सा ॥ २० ॥
समजायत चैवान्या सर्व्वकामप्रदायिनी ।
असंस्कार्य्यैः शरीरैश्च प्रजास्ताः स्थिरयौवनाः ॥ २१ ॥
तासां विना तु संकल्पं जायन्ते मिथुनाः प्रजाः ।
समं जन्म च रूपञ्च म्रियन्ते चैव ताः समं ॥ २२ ॥
अनिच्छाद्वेषसंयुक्ता वर्त्तन्ते तु परस्परं ।

तुल्यरूपायुषः सर्व्वा अधमोत्तमतां विना ॥ २३ ॥
चत्वारि तु सहस्राणि वर्षाणां मानुषाणि तु ।
आयुःप्रमाणं जीवन्ति न च क्लेशादिपत्तयः ॥ २४ ॥
क्वचित्क्वचित्पुनः साभूत् क्षितिर्भाग्येन सर्व्वशः ।
कालेन गच्छता नाशमुपयान्ति यथा प्रजाः ॥ २५ ॥
तथा ताः क्रमशो नाशं जग्मुः सर्व्वत्र सिद्धयः ।
तासु सर्व्वासु नष्टासु नभसः प्रच्युता नराः ॥ २६ ॥
प्रायशः कल्पवृक्षास्ते सम्भूता गृहसंज्ञिताः ।
सर्व्वे प्रत्युपभोगाश्च तासां तेभ्यः प्रजायते ॥ २७ ॥
वर्त्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे तदा ।
ततः कालेन वै रागस्तासामाकस्मिकोऽभवत् ॥ १८ ॥
मासि मास्यार्त्तवोत्पत्त्या गर्भोत्पत्तिः पुनः पुनः ।
रागोत्पत्त्या ततस्तासां वृक्षास्ते गृहसंज्ञिताः ॥ २८ ॥
ब्रह्मन्नन्यपरेषान्तु पेतुः शाखा महीरुहां ।
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥ ३० ॥
तेष्वेव जायते तेषां गन्धवर्णरसान्वितं ।
अमाक्षिकं महावीर्य्यं पुटके पुटके मधु ॥ ३१ ॥
तेन ता वर्त्तयन्ति स्म मुखे त्रेतायुगस्य वै ।
ततः कालान्तरेणैव पुनर्लोभान्वितास्तु ताः ॥ ३२ ॥
वृक्षास्ताः पर्य्यगृह्णन्त ममत्वाविष्टचेतसः ।
नेशुस्तेनापचारेण तेऽपि तासां महीरुहाः ॥ ३३ ॥
ततो द्वन्द्वान्यजायन्त शीतोष्णक्षुन्मुखानि वै ।

तास्तद्वन्धोपघातार्थं चक्रुः पूर्व्वं पुराणि तु ॥ ३४ ॥
मरुधन्वसु दुर्गेषु पर्व्वतेषु दरीषु च ।
संश्रयन्ति च दुर्गाणि वार्क्षं पार्व्वतमौदकं ॥ ३५ ॥
कृत्रिमञ्च तथा दुर्गं मित्वा मित्वात्मनोऽङ्गुलैः ।
मानार्थानि प्रमाणानि तास्तु पूर्व्वं प्रचक्रिरे ॥ ३६ ॥
परमाणुः परं सूक्ष्मं त्रसरेणुर्महीरजः ।
बालाग्रञ्चैव निष्कां च यूकां चाथ यवोदरं ॥ ३७ ॥
एकादशगुणं तेषां यवमध्यं तथाङ्गुलं ।
षड़ङ्गुलं पदन्तञ्च वितस्तिद्विगुणं स्मृतं ॥ ३८ ॥
द्वे वितस्ती तथा हस्तो ब्राह्मतीर्थादिवेष्टनं ।
चतुर्हस्तं धनुर्दण्डो नाड़िकायुगमेव च ॥ ३९ ॥
धनुषां द्वे सहस्रे तु गव्यूतिस्तच्चतुर्गुणं ।
प्रोक्तञ्च योजनं प्राज्ञैः संख्यानार्थमिदं परं ॥ ४० ॥
चतुर्णामथ दुर्गाणां स्वसमुत्थानि त्रीणि तु ।
चतुर्थं कृत्रिमं दुर्गं तच्च कुर्य्यात् सतस्तु ते ॥ ४१ ॥
पुरञ्च खेटकञ्चैव तद्वद्द्रोणीमुखं द्विजः ।
शाखानगरकञ्चापि तथा कर्व्वटकं त्रयी ॥ ४२ ॥
ग्रामसंघोषविन्यासं तेषु चावसथान् पृथक् ।
सोत्सेधवप्रकारञ्च सर्व्वतः परिखावृतं ॥ ४३ ॥
योजनार्द्धार्द्धविष्कम्भमष्टभागाय तं पुरं ।
प्रागुदक्प्लवनं शस्तं शुद्धवंशवहिर्गमं ॥ ४४ ॥
तदर्द्धेन तथा खेटं तत्पादेन च कर्व्वटं ।

न्यूनं द्रोणीमुखं तस्मादन्तभागेन चोच्यते ॥ ४५ ॥
प्राकारं परिखाहीनं पुरं वर्म्मवदुच्यते ।
शाखानगरकञ्चान्यन्मन्त्रिसामन्तभुक्तिमत् ॥ ४६ ॥
तथा शूद्रजलप्रायाः स्वसमृद्धिकृषीवलाः ।
क्षेत्रोपभोग्यभूमध्ये वसतिर्ग्रामसंज्ञिता ॥ ४७ ॥
अन्यस्मान्नगरादेर्या कार्य्यमुद्दिश्य मानवैः ।
क्रियते वसतिः सा वै विज्ञेया वसतिर्नवैः ॥ ४८ ॥
दुष्टप्रायो विना क्षेत्रैः परभूमिचरो बली ।
ग्राम एवाक्रिमीसंज्ञो राजवल्लभसंश्रयः ॥ ४९ ॥
शकटारूढभाण्डैश्च गोपालैर्व्विपणं विना ।
गोसमूहस्तथा घोषो यथेच्छा भूमिकेतनः ॥ ५० ॥
तएवं नगरादींस्तु कृत्वा वासार्थमात्मनः ।
निकेतनानि द्वन्द्वानां चक्रुरावसथाय वै ॥ ५१ ॥
गृहाकारा यथा पूर्व्वं तेषामासन्महीरुहाः ।
तथा संस्मृत्य तत्सर्व्वं चक्रुर्व्वेश्मानि ताः प्रजाः ॥ ५२ ॥
वृक्षस्यैवङ्गताः शाखास्तथैवञ्चापरा गताः ।
नताश्चैवोन्नताश्चैव तद्वच्छाखाः प्रचक्रिरे ॥ ५३ ॥
याः शाखाः कल्पवृक्षाणां पूर्व्वमासन् द्विजोत्तम ।
ताएव शाखा गेहानां शालात्वं तेन तासु तत् ॥ ५४ ॥
कृत्वा द्वन्द्वोपघातन्ते वार्त्तोपायमचिन्तयत् ।
नष्टेषु मधुना सार्द्धं कल्पवृक्षेष्वशेषतः ॥ ५५ ॥
विषादव्याकुलास्ता वै प्रजास्तृष्णाक्षुधार्दिताः ।

ततः प्रादुर्बभौ तासां सिद्धिस्त्रेतामुखे तदा ॥ ५६ ॥
वार्त्तास्वसाधिता ह्यन्या वृष्टिस्तासां निकामतः ।
तासां वृष्ट्युदकानीह यानि निम्नगतानि वै ॥ ५७ ॥
वृष्ट्यावरुद्धैरभवत् स्रोतःखातानि निम्नगाः ।
ये पुरस्तादपां स्तोका आपन्नाः पृथिवीतले ॥ ५८ ॥
ततो भूमेश्च संयोगादोषध्यस्तास्तदाभवन् ।
अफालकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्दश ॥ ५९ ॥
ऋतुपुष्पफलाश्चैव वृक्षा गुल्माश्च जज्ञिरे ।
प्रादुर्भावस्तु त्रेतायामाद्योऽयमौषधस्य तु ॥ ६० ॥
तेनौषधेन वर्त्तन्ते प्रजास्त्रेतायुगे मुने ।
रागलोभौ समासाद्य प्रजाश्चाकस्मिकौ तदा ॥ ६१ ॥
ततस्ताः पर्य्यगृह्णन्त नदीक्षेत्राणि पर्व्वतान् ।
वृक्षगुल्मौषधीश्चैवमात्मन्यायाद्यथा बलं ॥ ६२ ॥
तेन दोषेण ता नेशुरौषध्यो मिषतां द्विजः ।
अग्रसद्भूर्युगपत्तास्तदौषध्यो महामते ॥ ६३ ॥
पुनस्तासु प्रणष्टासु विभ्रान्तास्ताः पुनः प्रजाः ।
ब्रह्माणं शरणं जग्मुः क्षुधार्त्ताः परमेष्ठिनं ॥ ६४ ॥
स चापि तत्त्वतो ज्ञात्वा तदा ग्रस्तां वसुन्धरां ।
वत्सं कृत्वा सुमेरुन्तु दुदोह भगवान् विभुः ॥ ६५ ॥
दुग्धेयं गौस्तदा तेन सस्यानि पृथिवीतले ।
जज्ञिरे तानि वीजानि ग्राम्यारण्यास्तु ताः पुनः ॥ ६६ ॥
ओषध्यः फलपाकान्ता गणाः सप्तदश स्मृताः ।

व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ॥ ६७ ॥
प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः ।
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ॥ ६८ ॥
आढकाश्चनकाश्चैव शणाः सप्तदश स्मृताः ।
इत्येता ओषधीनान्तु ग्राम्याणां जातयः पुरा ॥ ६९ ॥
ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्द्दश ।
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ॥ ७० ॥
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलत्थकाः ।
श्यामाकास्त्वथ नीवारा यत्तिला सगवेधुकाः ॥ ७१ ॥
कुरुविन्दा मर्कटकास्तथावेणुयवाश्च ये ।
ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्द्दश ॥ ७२ ॥
यदा प्रसृष्टा ओषध्यो न प्ररोहन्ति ताः पुनः ।
ततः स तासां वृद्ध्यर्थं वार्त्तोपायञ्चकार ह ॥ ७३ ॥
ब्रह्मा स्वयम्भुर्भगवान् हस्तसिद्धिञ्च कर्म्मजां ।
ततः प्रभृत्यथौषध्यः कृष्टपच्यास्तु जज्ञिरे ॥ ७४ ॥
संसिद्धायान्तु वार्त्तायां ततस्तासां स्वयं प्रभुः ।
मर्य्यादां स्थापयामास यथान्यायं यथागुणं ॥ ७५ ॥
वर्णानामाश्रमाणाञ्च धर्म्मान् धर्म्मभृतांवर ।
लोकानां सर्व्ववर्णानां सम्यक्धर्म्मार्थपालिनां ॥ ७६ ॥
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावतां ।
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनां ॥ ७७ ॥
वैश्यानां मारुतं स्थानं स्वधर्म्ममनुवर्त्ततां ।

गान्धर्व्वं शूद्रजातीनां परिचर्य्यानुवर्त्तिनां ॥ ७८ ॥
अष्टाशीतिसहस्राणामृषीणामूर्द्ध्वरेतसां ।
स्मृतं तेषान्तु यत् स्थानं तदेव गुरुवासिनां ॥ ७९ ॥
सप्तर्षीणान्तु यत् स्थानं स्मृतं तद्वै वनौकसां ।
प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मणः क्षयं ॥
योगिनाममृतं स्थानमिति वै स्थानकल्पना ॥ ८० ॥

इति श्रीमार्कण्डेयपुराणे सृष्टिप्रकरणे ॥ ४९ ॥

---

पञ्चाशोऽध्यायः ॥

मार्कण्डेय उवाच ॥

ततोऽभिध्यायतस्तस्य जज्ञिरे मानसीः प्रजाः ।
तच्छरीरसमुत्पन्नैः कार्य्यैस्तैः कारणैः सह ॥ १ ॥
क्षेत्रज्ञाः समवर्त्तन्त गात्रेभ्यस्तस्य धीमतः ।
ते सर्व्वे समवर्त्तन्त ये मया प्रागुदाहृताः ॥ २ ॥
देवाद्याः स्थावरान्ताश्च त्रैगुण्यविषयाः स्मृताः ।
एवम्भूतानि सृष्टानि स्थावराणि चराणि च ॥ ३ ॥
यदास्य ताः प्रजाः सर्व्वा न व्यवर्द्धन्त धीमतः ।
अथान्यान्मानसान् पुत्रान् सदृशानात्मनोऽसृजत् ॥ ४ ॥
भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसन्तथा ।
मरीचिं दक्षमत्रिञ्च वशिष्ठञ्चैव मानसं ॥ ५ ॥

नव ब्रह्मण इत्येते पुराणे निश्चयङ्गताः ।
ततोऽसृजत् पुनर्ब्रह्मा रुद्रं क्रोधात्मसम्भवं ॥ ६ ॥
सङ्कल्पञ्चैव धर्म्मञ्च पूर्व्वेषामपि पूर्व्वजं ।
सनन्दनादयो ये च पूर्व्वं सृष्टाः स्वयम्भुवा ॥ ७ ॥
न ते लोकेषु सज्जन्तो निरपेक्षाः समाहिताः ।
सर्व्वे तेऽनागतज्ञाना वीतरागा विमत्सराः ॥ ८ ॥
तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः ।
ब्रह्मणोऽभून्महाक्रोधस्तत्रोत्पन्नोऽर्कसन्निभः ॥ ९ ॥
अर्द्धनारीनरवपुः पुरुषोऽतिशरीरवान् ।
विभजात्मानमित्युक्ता स तदान्तर्दधे ततः ॥ १० ॥
स चोक्तो वै पृथक् स्त्रीत्वं पुरुषत्वं तथाकरोत् ।
बिभेद पुरुषत्वञ्च दशधा चैकधा तु सः ॥ ११ ॥
सौम्यासौम्यैस्तथा शान्तैः पुंस्त्वं स्त्रीत्वञ्च स प्रभुः ।
बिभेद बहुधा देवः पुरुषैरसितैः सितैः ॥ १२ ॥
ततो ब्रह्मात्मसम्भूतं पूर्व्वं स्वायम्भुवं प्रभुः ।
आत्मनः सदृशं कृत्वा प्रजापाल्यो मनुं द्विजः ॥ १३ ॥
शतरूपाञ्च तां नारीं तपोनिर्धूतकल्मषां ।
स्वायम्भुवो मनुर्द्देवः पत्नीत्वे जगृहे विभुः ॥ १४ ॥
तस्माच्च पुरुषात्पुत्रौ शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ प्रख्यातावात्मकर्म्मभिः ॥ १५ ॥
कन्ये द्वे च तथाकूतिं प्रसूतिञ्च ततः पिता ।
ददौ प्रसूतिं दक्षाय तथा ऋद्धिं रुचेः पुरा ॥ १६ ॥

प्रजापतिः स जग्राह तयोर्यज्ञः सदक्षिणः ।
पुत्रो जज्ञे महाभाग दम्पतीमिथुनं ततः ॥ १७ ॥
यज्ञस्य दक्षिणायान्तु पुत्रा द्वादश जज्ञिरे ।
यामाइति समाख्याता देवाः स्वायम्भुवोऽन्तरे ॥ १८ ॥
तस्य पुत्रास्तु यज्ञस्य दक्षिणायां सभास्वराः ।
प्रसूत्याञ्च तथा दक्षश्चतस्रो विंशतिस्तथा ॥ १९ ॥
ससर्ज्ज कन्यास्तासाञ्च सम्यङ्नामानि मे शृणु ।
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ॥ २० ॥
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदशी ।
पत्न्यर्थे प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ॥ २१ ॥
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ।
ख्यातिः सत्यथ सम्भूतिः स्मृतिः प्रीतिस्तथा क्षमा ॥ २२ ॥
सन्नतिश्चानसूया च ऊर्ज्जा स्वाहा स्वधा तथा ।
भृगुर्भवो मरीचिश्च तथा चैवाङ्गिरा मुनिः ॥ २३ ॥
पुलस्त्यः पुलहश्चैव क्रतुश्च ऋषयस्तथा ।
वशिष्ठोऽचिस्तथा वह्निः पितरश्च यथा क्रमं ॥ २४ ॥
ख्यात्याद्या जगृहुः कन्या मुनयो मुनिसत्तमाः ।
श्रद्धा कामं श्रीश्च दर्प्पं नियमं धृतिरात्मजं ॥ २५ ॥
सन्तोषञ्च तथा तुष्टिर्लोभं पुष्टिरजायत ।
मेधा श्रुतं क्रिया दण्डं नयं विनयमेव च ॥ २६ ॥
बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजं ।
व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ॥ २७ ॥

सुखं सिद्धिर्यशः कीर्त्तिरित्येते धर्म्मयोनयः ।
कामादतिमुदं हर्षं धर्म्मपौत्रमसूयत ॥ २८ ॥
हिंसा भार्य्या त्वधर्म्मस्य तस्यां जज्ञे तथानृतं ।
कन्या च निर्ऋतिस्तस्यां सुतौ द्वौ नरकं भयं ॥ २९ ॥
माया च वेदना चैव मिथुनं द्वयमेतयोः ।
तयोर्जज्ञेऽथ वै माया मृत्युं भूतापहारिणं ॥ ३० ॥
वेदनात्मसुतश्चापि दुःखं जज्ञेऽथ रौरवात् ।
मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे ॥ ३१ ॥
दुःखोद्भवाः स्मृता ह्येते सर्व्वे वाधर्म्मलक्षणाः ।
नैषां भार्य्यास्ति पुत्रो वा सर्व्वे ते ह्यूर्द्ध्वरेतसः ॥ ३२ ॥
निर्ऋतिश्च तथा चान्या मृत्योर्भार्य्याभवन्मुने ।
अलक्ष्मीर्नाम तस्याश्च मृत्योः पुत्राश्चतुर्द्दश ॥ ३३ ॥
अलक्ष्मीपुत्रका ह्येते मृत्योरादेशकारिणः ।
विनाशकालेषु नरान् भजन्त्येते शृणुष्व तान् ॥ ३४ ॥
इन्द्रियेषु दशस्वेते तथा मनसि च स्थिताः ।
स्वे स्वे नरं स्त्रियं वापि विषये योजयन्ति हि ॥ ३५ ॥
अथेन्द्रियाणि चाक्रम्य रागक्रोधादिभिर्नरान् ।
योजयन्ति यथा हानिं यान्त्यधर्म्मादिभिर्द्विज ॥ ३६ ॥
अहङ्कारगतश्चान्यस्तथान्यो बुद्धिसंस्थितः ।
विनाशाय नराः स्त्रीणां यतन्ते मोहसंश्रिताः ॥ ३७ ॥
तथैवान्ये गृहे पुंसां दुःसहो नाम विश्रुतः ।
क्षुत्क्षामोऽधोमुखो नग्नश्चीरी काकसमस्वनः ॥ ३८ ॥

स सर्व्वान् खादितुं सृष्टो ब्रह्मणा तपसो निधिः ।
दंष्ट्राकरालमत्यर्थं विवृतास्यं सुभैरवं ॥ ३९ ॥
तमत्तुकाममाहेदं ब्रह्मा लोकपितामहः ।
सर्व्वब्रह्ममयः शुद्धः कारणं जगतोऽव्ययः ॥ ४० ॥

ब्रह्मोवाच ॥

नात्तव्यन्ते जगदिदं जहि कोपं शमं व्रज ।
त्यजैनान्तामसीं वृत्तिमपास्य रजसः कलां ॥ ४१ ॥

दुःसह उवाच ॥

क्षुत्क्षामोऽस्मि जगन्नाथ पिपासुश्चापि दुर्ब्बलः ।
कथं तृप्तिमियां नाथ भवेयं बलवान् कथं ॥
कश्चाश्रयो ममाख्याहि वर्त्तेयं यत्र निर्वृतः ॥ ४२ ॥

ब्रह्मोवाच ॥

तवाश्रयो गृहं पुंसां जनश्चाधार्म्मिको बलं ।
पुष्टिं नित्यक्रियाहान्या भवान् वत्स गमिष्यति ॥ ४३
व्रणा स्फोटाश्च ते वस्त्रमाहारञ्च ददामि ते ।
क्षतं कीटावपन्नञ्च तथा श्वभिरवेक्षितं ॥ ४४ ॥
भग्नभाण्डगतन्तद्वत् मुखवातोपशामितं ।
उच्छिष्टापक्वमस्विन्नमवलीढमसंस्कृतं ॥ ४५ ॥
भग्नासनस्थितैर्भुक्तमासन्नागतमेव च ।
विदिक्मुखं सन्ध्ययोश्च नृत्यवाद्यस्वरोत्तमं ॥ ४६ ॥
उदक्योपहतं भुक्तमुदक्या दृष्टमेव च ।
यच्चोपघातवत् किञ्चित् भक्ष्यं पेयमथापि वा ॥ ४७ ॥

एतानि तव पुष्ट्यर्थमन्यच्चापि ददामि ते ।
अश्रद्धया हुतं दत्तमस्नातैर्यद्‌वज्ञया ॥ ४८ ॥
यन्नाम्बुपूर्व्वकं क्षिप्तमनर्थीकृतमेव च ।
त्यक्तुमाविष्कृतं यत्तु दत्तं चैवातिविस्मयात् ॥ ४९ ॥
दुष्टं क्रुद्धार्त्तदत्तञ्च यक्ष तद्भागि तत्फलं ।
यच्च पौनर्भवः किञ्चित् करोत्यामुष्मिकं क्रमं ॥ ५० ॥
यक्ष पौनर्भवा योषित् तद्यक्ष तव तृप्तये ।
कन्या शुल्कोपधानाय समुपास्ते धर्म्मक्रियाः ॥ ५१ ॥
तथैव यक्ष पुष्ट्यर्थमसच्छास्त्रक्रियाश्च याः ।
यच्चार्थं निर्हतं किञ्चिदधीतं यन्न सत्यतः ॥ ५२ ॥
तत्सर्व्वं तव कालांश्च ददामि तव सिद्धये ।
गुर्व्विण्यभिगमे सन्ध्यानित्यकार्य्यव्यतिक्रमे ॥ ५३ ॥
असच्छास्त्रक्रियालापदूषितेषु च दुःसह ।
तवाभिभवसामर्थ्यं भविष्यति सदा नृषु ॥ ५४ ॥
पङ्क्तिभेदे वृथापाके पाकभेदे तथा क्रिया ।
नित्यञ्च गेहकलहे भविता वसतिस्तव ॥ ५५ ॥
अपोष्यमाणे च तथा बद्धे गोवाहनादिके ।
असन्ध्याभ्युक्षितागारे काले त्वत्तो भयं नृणां ॥ ५६ ॥
नक्षत्रग्रहपीड़ासु त्रिविधोत्पातदर्शने ।
अशान्तिकपरान् यक्ष नरानभिभविष्यसि ॥ ५७ ॥
वृथोपवासिनो मर्त्या द्यूतस्त्रीषु सदा रताः ।
त्वद्भाषणोपकर्त्तारो वैड़ालव्रतिकाश्च ये ॥ ५८ ॥

अब्रह्मचारिणाधीतमिज्या चाविदुषा कृता।
तपोवने ग्राम्यभुजां तथैवानिर्ज्जितात्मनां ॥ ५९ ॥
ब्राह्मणक्षत्रियविशां शूद्राणाञ्च स्वकर्म्मतः।
परिच्युतानां या चेष्टा परलोकार्थमिप्सतां ॥ ६० ॥
तस्याश्च यत्फलं सर्व्वं तत्ते यक्ष भविष्यति।
अन्यच्च ते प्रयच्छामि पुष्ट्यर्थं सन्निबोध तत् ॥ ६१ ॥
भवतो वैश्वदेवान्ते नामोच्चारणपूर्व्वकं।
एतत्तवेति दास्यन्ति भवतो बलिमूर्ज्जितं ॥ ६२ ॥
यः संस्कृताशी विधिवच्छुचिरन्तस्तथा बहिः।
अलोलुपोऽजितस्त्रीकस्तद्गेहमपवर्ज्जय ॥ ६३ ॥
पूज्यन्ते हव्यकव्याभ्यां देवताः पितरस्तथा।
यामयोऽतिथयश्चापि तद्गेहं यक्ष वर्ज्जय ॥ ६४ ॥
यत्र मैत्रीगृहे बालवृद्धयोषिन्नरेषु च।
तथा स्वजनवर्गेषु गृहं तत्रापि वर्जय ॥ ६५ ॥
योषितोऽभिरता यत्र न बहिर्गमनोत्सुकाः।
लज्जान्विताः सदा गेहं यक्ष तत्परिवर्जय ॥ ६६ ॥
वयःसम्बन्धयोग्यानि शयनान्यशनानि च।
यत्र गेहे त्वया यक्ष तद्वर्ज्यं वचनान्मम ॥ ६७ ॥
यत्र कारुणिका नित्यं साधुकर्म्मण्यवस्थिताः।
सामान्योपस्करैर्युक्तास्त्यजेथा यत्त तद्गृहं ॥ ६८ ॥
यत्रासनस्थास्तिष्ठत्सु गुरुवृद्धद्विजातिषु।
न तिष्ठन्ति गृहं तत्र वर्ज्यं यक्ष त्वया सदा ॥ ६९ ॥

तरुगुल्मादिभिर्द्वारं न विद्धं यस्य वेश्मनः ।
मर्म्मभेदोऽथवा पुंसस्तच्छ्रेयो भवनं न ते ॥ ७० ॥
देवतापितृमर्त्यानामतिथीनाञ्च वर्त्तनं ।
यस्यावशिष्टेनान्नेन पुंसस्तस्य गृहं त्यज ॥ ७१ ॥
सत्यवाक्यान् क्षमाशीलानहिंस्रान्नानुतापिनः ।
पुरुषानीदृशान यत्त त्यजेथास्त्वानसूयकान् ॥ ७२ ॥
भर्त्तृशुश्रूषणे युक्तामसत्स्त्रीसङ्गवर्जितां ।
कुटुम्बभर्त्तृशेषान्नपुष्टाञ्च त्यज योषितं ॥ ७३ ॥
यजनाध्ययनाभ्यासदानासक्तमतिं सदा ।
याजनाध्यापनादानकृतवृत्तिं द्विजं त्यज ॥ ७४ ॥
दानाध्ययनयज्ञेषु सदोद्युक्तञ्च दुःसह ।
क्षत्रियं त्यज सच्छुल्कशस्त्राजीवात्तवेतनं ॥ ७५ ॥
त्रिभिः पूर्व्वगुणैर्युक्तं पाशुपाल्यवणिज्ययोः ।
कृषेश्चावाप्तवृत्तिञ्च त्यज वैश्यमकल्मषं ॥ ७६ ॥
दानेज्याद्विजशुश्रूषातत्परं यक्ष सन्त्यज ।
शूद्रञ्च ब्राह्मणादीनां शुश्रूषावृत्तिपोषकं ॥ ७७ ॥
श्रुतिस्मृत्यविरोधेन कृतवृत्तिर्गृहे गृही ।
यत्र तत्र च तत्पत्नी तस्यैवानुगतात्मिका ॥ ७८ ॥
यत्र पुत्त्रो गुरोः पूजां देवानाञ्च तथा पितुः ।
पत्नी च भर्त्तुः कुरुते तत्रालक्ष्मीभयं कुतः ॥ ७९ ॥
यदानुलिप्तं सन्ध्यासु गृहंमम्बुसमुक्षितं ।
कृतपुष्पवलिं यत्त न त्वं शक्नोषि वीक्षितुं ॥ ८० ॥

भास्करादृष्टशय्यानि नित्याग्निसलिलानि च ।
सर्य्याविल्लोकदीपानि लक्ष्म्या गेहानि भाजनं ॥ ८१ ॥
यत्रोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषाज्यताम्रपात्राणि तद्गृहं न तवाश्रयः ॥ ८२ ॥
यत्र कण्टकिनो वृक्षा यत्र निष्पाववल्लरी ।
भार्य्या पुनर्भूर्वल्मीकस्तत्रच्च तव मन्दिरं ॥ ८३ ॥
यस्मिन् गृहे नराः पञ्च स्त्रीत्रयं तावतीश्च गाः ।
अन्धकारेन्धनाग्निश्च तद्गृहं वसतिस्तव ॥ ८४ ॥
एकच्छागं द्विवालेयं त्रिगवं पञ्चमाहिषं ।
षडश्वं सप्तमातङ्गं गृहं यक्षाशु शोषय ॥ ८५ ॥
कुद्दालदात्रपिटकं तद्वत् स्थाल्यादिभाजनं ।
यत्र तत्रैव क्षिप्तानि तव दद्युः प्रतिश्रयं ॥ ८६ ॥
मुषलोदूखले स्त्रीणामास्या तद्वदुदुम्बरे ।
अवस्करे मन्त्रणञ्च यत्रैतदुपक्षत् तव ॥ ८७ ॥
लङ्घ्यन्ते यत्र धान्यानि पक्वापक्वानि वेश्मनि ।
तद्वच्छास्त्राणि तत्र त्वं यथेष्टं चर दुःसह ॥ ८८ ॥
स्थालीपिधाने यत्राग्निर्दत्तो दर्व्वीफलेन वा ।
गृहे तत्र हि रिष्टानामशेषाणां समाश्रयः ॥ ८९ ॥
मानुषास्थि-गृहे यत्र दिवारात्रं मृतस्थितिः ।
तत्र यत्त तवावासस्तथान्येषाञ्च रक्षसां ॥ ९० ॥
अदत्वा भुञ्जते ये वै बन्धोः पिण्डं तथोदकं ।
सपिण्डान् सोदकांश्चैव तत्काले तान् नरान् भज ॥ ९१ ॥

यत्र पद्ममहापद्मौ युवती मोदकाशिनी ।
रूपभैरावती यत्र कल्प्यते तद्गृहं त्यज ॥ ९२ ॥
अशस्ता देवता यत्र सशस्त्रास्त्राहवं विना ।
कल्प्यन्ते मनुजैरर्च्यास्तत्परित्यज मन्दिरं ॥ ९३ ॥
पौरजानपदा यत्र प्राक्प्रसिद्धमहोत्सवाः ।
क्रियन्ते पूर्व्ववद्गेहे न त्वं तत्र गृहे चर ॥ ९४ ॥
शूर्पवातघटाम्भोभिः स्नानं वस्त्राम्बुविप्रुषैः ।
नखाग्रसलिलैश्चैव तान् याहि हतमङ्गलान् ॥ ९५ ॥
देशाचारान् समयान् जातिधर्म्मं
जयं होमं मङ्गलं देवतेष्टिं ।
सम्यक् शौचं विधिवल्लोकवादान्
पुंसस्त्वया कुर्व्वतो माऽस्तु सङ्गः ॥ ९६ ॥

मार्कण्डेय उवाच ॥

इत्युक्ता दुःसहं ब्रह्मा तत्रैवान्तरधीयत ।
चकार शासनं सोऽपि तथा पङ्कजजन्मनः ॥ ९७ ॥

इति श्रीमार्कण्डेयपुराणे यक्ष्मानुशासनं नाम पञ्चाशोऽध्यायः ॥ ५० ॥

एकपञ्चाशोऽध्यायः ॥

मार्कण्डेय उवाच ॥

दुःसहस्याभवद्भार्य्या निर्माष्टिर्नाम नामतः ।
जाता कलेस्तु भार्य्यायामृतौ चाण्डालदर्शनात् ॥ १ ॥
तयोरपत्यान्यभवन् जगद्व्यापीनि षोड़श ।
अष्टौ कुमाराः कन्याश्च तथाष्टावतिभीषणाः ॥ २ ॥
दन्ताकृष्टिस्तथोक्तिश्च परिवर्त्तस्तथापरः ।
अङ्गधृक् शकुनिश्चैव गण्डप्रान्तरतिस्तथा ॥ ३ ॥
गर्भहा सस्यहा चान्यः कुमारास्तनयास्तयोः ।
कन्याश्चान्यास्तथैवाष्टौ तासां नामानि मे शृणु ॥ ४ ॥
नियोजिका वै प्रथमा तथैवान्या विरोधिनी ।
स्वयंहारकरी चैव भ्रामणी ऋतुहारिका ॥ ५ ॥
स्मृतिवीजहरे चान्ये तयोः कन्येऽतिदारुणे ।
विद्वेषण्यष्टमी नाम कन्या लोकभयावहा ॥ ६ ॥
एतासां कर्म्म वक्ष्यामि दोषप्रशमनञ्च यत् ।
अष्टानाञ्च कुमाराणां श्रूयतां द्विजसत्तम ॥ ७ ॥
दन्ताकृष्टिः प्रसूतानां बालानां दशनस्थितः ।
करोति संहर्षमतो चिकीर्षुर्दुःसहागमं ॥ ८ ॥
तस्योपशमनं कार्य्यं सुप्तस्य सितसर्षपैः ।
शयनस्योपरि क्षिप्तैर्मानुषैर्दशनोपरि ॥ ९ ॥

सुवर्च्चसौषधीस्नानात्तथा सच्छास्त्रकीर्त्तनात् ।
उद्धकगटकखड्गास्थिक्षौमवस्त्रविधारणात् ॥ १० ॥
तिष्ठत्यन्यकुमारस्तु तथास्त्वित्यसकृदब्रुवन् ।
शुभाशुभं नृणां यूंक्ते तथोक्तिस्तच्च नान्यथा ॥ ११ ॥
तस्मादद्दृष्टं मङ्गल्यं वक्तव्यं पण्डितैः सदा ।
दृष्टे श्रुते तथैवोक्ते कीर्त्तनीयो जनार्द्दनः ॥ १२ ॥
चराचरगुरुर्ब्रह्मा या यस्य कुलदेवता ।
अन्यगर्भे परान् गर्भान् सदैव परिवर्त्तयन् ॥ १३ ॥
रतिमाप्नोति वाक्यञ्च विवक्षोरन्यदेव यत् ।
परिवर्त्तकसंज्ञोऽयं तस्यापि सितसर्षपैः ॥ १४ ॥
रक्षोघ्नमन्त्रजप्यैश्च रक्षां कुर्व्वीत तत्त्ववित् ।
अन्यश्चानिलवन्नृणामङ्गेषु स्फुरणोदितं ॥ १५ ॥
शुभाशुभं समाचष्टे कुशैस्तस्याङ्गताड़नं ।
काकादिपक्षिसंस्थोऽन्यः खादेन खगतोऽपिवा ॥ १६ ॥
शुभाशुभञ्च कुशलैः कुमारोऽन्यो ब्रवीति वै ।
तत्रापि दुष्टे व्याक्षेपः प्रारम्भत्यागएव च ॥ १७ ॥
शुभे द्रुततरं कार्य्यमिति प्राह प्रजापतिः ।
गण्डान्तेषु स्थितश्चान्यो मुहूर्त्तार्द्धं द्विजोत्तम ॥ १८ ॥
सर्व्वारम्भान् कुमारोऽत्ति शस्तताञ्चानसूयतरं ।
विप्रान्नत्या देवतास्तुत्या मूलोत्खातेन च द्विज ॥ १९ ॥
गोमूत्रसर्षपस्नानैस्तट्टञ्चग्रहपूजनैः ।
पुनश्च धर्म्मोपनिषत्करणैः शस्त्रदर्शनैः ॥ २० ॥

अवज्ञया जन्मनश्च प्रशमं याति गण्डवान् ।
गर्भस्त्रीणां तथाऽन्यस्तु फलनाशी सुदारुणः ॥ २१ ॥
तस्य रक्षा सदा कार्य्या नित्यं शौचनिषेवणात् ।
प्रसिद्धमन्त्रलिखनाच्छस्तमाल्यादिधारणात् ॥ २२ ॥
विशुद्धगेहावसथादनायासाच्च ते द्विज ।
तथैव सस्यहा चान्यः सस्यर्द्धिमुपहन्ति यः ॥ २३ ॥
तस्यापि रक्षां कुर्व्वीत जीर्णोपानद्विधारणात् ।
तथापसव्यगमनाच्चाण्डालस्य प्रवेशनात् ॥ २४ ॥
बहिर्बलिप्रदानाच्च सोमाम्बुपरिकीर्त्तनात् ।
परदारपरद्रव्यहरणादिषु मानवान् ॥ २५ ॥
नियोजयति चैवान्यान् कन्या सा च नियोजिका ।
तस्याः पवित्रपठनात् क्रोधलोभादिवर्ज्जनात् ॥ २६ ॥
नियोजयति मामेषु विरोधाच्च विवर्ज्जनं ।
आक्रुष्टोऽन्येन मन्येत ताडितो वा नियोजिका ॥ २७ ॥
नियोजयत्येनमिति न गच्छेत्तद्वशं बुधः ।
परदारादिसंसर्गे चित्तमात्मानमेव च ॥ २८ ॥
नियोजयत्यच सा मामिति प्राज्ञो विचिन्तयेत् ।
विरोधं कुरुते चान्या दम्पत्योः प्रीयमाणयोः ॥ २९ ॥
बन्धूनां सुहृदां पित्रोः पुत्रैः सावर्णिकैश्च या ।
विरोधिनी सा तद्रक्षां कुर्व्वीत बलिकर्म्मणा ॥ ३० ॥
तथातिवादसहनाच्छास्त्राचारनिषेवणात् ।
धान्यं खलाद्गृहाद्गोभ्यः पयः सर्पिस्तथापरा ॥ ३१ ॥

सम्वृद्धिम्वृद्धिमद्द्रव्यादपहन्ति च कन्यका ।
सा स्वयंहारिकेत्युक्ता सदान्तर्धानतत्परा ॥ ३२ ॥
महानसादर्द्धसिद्धमन्नागारस्थितं तथा ।
परिविश्यमाणञ्च सदा सार्द्धं भुङ्क्ते च भुञ्जता ॥ ३३ ॥
उच्छेषणं मनुष्याणां हरत्यन्नञ्च दुर्हरा ।
कर्म्मान्तागारशालाभ्यः सिद्धर्द्धिं हरति द्विज ॥ ३४ ॥
गोस्त्रीस्तनेभ्यश्च पयः क्षीरहारी सदैव सा ।
दध्नो घृतं तिलात्तैलं सुरागारात्तथा सुरां ॥ ३५ ॥
रागं कुसम्भकादीनां कार्पासात् सूत्रमेव च ।
सा स्वयंहारिका नाम हरत्यविरतं द्विज ॥ ३६ ॥
कुर्य्याच्छिखण्डिनो द्वन्द्वं रक्षार्थं कृत्रिमां स्त्रियं ।
रक्षाश्चैव गृहे लख्या वर्ज्या च सोच्छिता तथा ॥ ३७ ॥
होमाग्निदेवताधूपभस्मना च परिक्रिया ।
कार्य्या क्षीरादिभाण्डानामेव तद्रक्षणं स्मृतं ॥ ३८ ॥
उद्वेगं जनयत्यन्या एकस्थाननिवासिनः ।
पुरुषस्य तु या प्रोक्ता भ्रामणी सा तु कन्यका ॥ ३९ ॥
तस्याथ रक्षां कुर्व्वीत विक्षिप्तैः सितसर्षपैः ।
आसने शयने चोर्व्व्यां यत्रास्ते स तु मानवः ॥ ४० ॥
चिन्तयेच्च नरः पापा मामेषा दुष्टचेतना ।
भ्रामयत्यसकृज्जप्यं भुवः सूक्तं समाधिना ॥ ४१ ॥
स्त्रीणां पुष्पं हरत्यन्या प्रवृत्तं सा तु कन्यका ।
अथ प्रवृत्तं सा ज्ञेया दौःसहा ऋतुहारिका ॥ ४२ ॥

कुर्व्वीत तीर्थदेवौकश्चैत्यपर्व्वतसानुषु ।
नदीसङ्गमखातेषु स्नपनं तत्प्रशान्तये ॥ ४३ ॥
मन्त्रवित् कृततत्त्वज्ञः पर्व्वसूर्पसि च द्विज ।
चिकित्साज्ञश्च वै वैद्यः संप्रयुक्तैर्वरौषधैः ॥ ४४ ॥
स्मृतिश्चापहरत्यन्या स्त्रीणां सा स्मृतिहारिका ।
विविक्ताद्देशसंविल्लानस्याश्चोपशमो भवेत् ॥ ४५ ॥
वीजापहारिणी चान्या स्त्रीपुंसोरतिभीषणा ।
मेध्यान्नभोजनैः स्नानैस्तस्याश्चोपशमो भवेत् ॥ ४६ ॥
अष्टमी द्वेषणी नाम कन्या लोकभयावहा ।
या करोति नवद्विष्टं नरं नारीमथापिवा ॥ ४७ ॥
मधुक्षीरघृताक्तांस्तु शान्त्यर्थं होमयेत्तिलान् ।
कुर्व्वीत मित्रविन्दाञ्च तथेष्टिन्तत्प्रशान्तये ॥ ४८ ॥
एतेषान्तु कुमाराणां कन्यानां द्विजसत्तम ।
अष्टत्रिंशदपत्यानि तेषां नामानि मे शृणु ॥ ४९ ॥
दन्ताकृष्टेरभूत् कन्या विजल्पा कलहा तथा ।
अवज्ञान्तदृष्टोक्तिर्विजल्पा तत्प्रशान्तये ॥ ५० ॥
तामेव चिन्तयेत प्राज्ञः प्रयतश्च गृही भवेत ।
कलहा कलहं गेहे करोत्यविरतं नृणां ॥ ५१ ॥
कुटुम्बनाशहेतुः सा तत्प्रशान्तिं निशामय ।
दूर्व्वाङ्कुरान्मधुघृतक्षीराक्तान् बलिकर्म्मणि ॥ ५२ ॥
विक्षिपेज्जुहुयाच्चैवानलं मित्रञ्च कीर्त्तयेत् ।
भूतानां मातृभिः सार्द्धं बालकानान्तु शान्तये ॥ ५३ ॥

विद्यानां तपसाञ्चैव संयमस्य यमस्य च ।
कृष्यां बाणिज्यलाभे च शान्तिं कुर्व्वन्तु मे सदा ॥ ५४ ॥
पूजिताश्च यथान्यायं तुष्टिं गच्छन्तु सर्व्वशः ।
कुष्माण्डा यातुधानाश्च ये चान्ये गणसंज्ञिताः ॥ ५५ ॥
महादेवप्रसादेन महेश्वरमतेन च ।
सर्व्वे एते नृणां नित्यं तुष्टिमाशु व्रजन्तु ते ॥ ५६ ॥
तुष्टाः सर्व्वं निरस्यन्तु दुष्कृतं दुरनुष्ठितं ।
महापातकजं सर्व्वं यच्चान्यद्विघ्नकारणं ॥ ५७ ॥
तेषामेव प्रसादेन विघ्ना नश्यन्तु सर्व्वशः ।
उद्वाहेषु च सर्व्वेषु वृद्धिकर्म्मसु चैव हि ॥ ५८ ॥
पुण्यानुष्ठानयोगेषु गुरुदेवार्च्चनेषु च ।
जपयज्ञविधानेषु यात्रासु च चतुर्द्दश ॥ ५९ ॥
शरीरारोग्यभोग्येषु सुखदानधनेषु च ।
वृद्धबालातुरेष्वेव शान्तिं कुर्व्वन्तु मे सदा ॥ ६० ॥
सोमाम्बुपौ तथाम्भोधिः सविता चानिलानलौ ।
तथोक्तः कालजिह्वोऽभूत् पुत्त्रस्तालनिकेतनः ॥ ६१ ॥
स येषां जननीसंस्थस्तानसाधून् विबाधते ।
परिवर्त्तसुतौ द्वौ तु विरूपविकृतौ द्विज ॥ ६२ ॥
तौ तु वृत्ताग्रपरिखाप्राकाराम्भोधिसंश्रयौ ।
गुर्व्विण्याः परिवर्त्तन्तौ कुरुतः पादपादिषु ॥ ६३ ॥
क्रोष्टुके परिवर्त्तन्त्या गर्भस्यान्योदरान्ततः ।
न वृक्षं चैव नैवाट्टं न प्राकारं महोदधिं ॥ ६४ ॥

कुर्व्वीत तीर्थदेवौकश्चैत्यपर्व्वतसानुषु ।
नदीसङ्गमखातेषु स्नपनं तत्प्रशान्तये ॥ ४३ ॥
मन्त्रवित् कृततत्त्वज्ञः पर्व्वसूर्पसि च द्विज ।
चिकित्साज्ञश्च वै वैद्यः संप्रयुक्तैर्वरौषधैः ॥ ४४ ॥
स्मृतिश्चापहरत्यन्या स्त्रीणां सा स्मृतिहारिका ।
विविक्तदेशसंवित्वात्तस्याश्चोपशमो भवेत् ॥ ४५ ॥
वीजापहारिणी चान्या स्त्रीपुंसोरतिभीषणा ।
मेध्यान्नभोजनैः स्नानैस्तस्याश्चोपशमो भवेत् ॥ ४६ ॥
अष्टमी द्वेषणी नाम कन्या लोकभयावहा ।
या करोति नवद्विष्टं नरं नारीमथापिवा ॥ ४७ ॥
मधुक्षीरघृताक्तांस्तु शान्त्यर्थं होमयेत्तिलान् ।
कुर्व्वीत मित्रविन्दाञ्च तथेष्टिन्तत्प्रशान्तये ॥ ४८ ॥
एतेषान्तु कुमाराणां कन्यानां द्विजसत्तम ।
अष्टत्रिंशदपत्यानि तेषां नामानि मे शृणु ॥ ४९ ॥
दन्ताकृष्टेरभूत् कन्या विजल्पा कलहा तथा ।
अवज्ञानृतदुष्टोक्तिर्विजल्पा तत्प्रशान्तये ॥ ५० ॥
तामेव चिन्तयेत् प्राज्ञः प्रयतश्च गृही भवेत् ।
कलहा कलहं गेहे करोत्यविरतं नृणां ॥ ५१ ॥
कुटुम्बनाशहेतुः सा तत्प्रशान्तिं निशामय ।
दूर्व्वाङ्कुरान्मधुघृतक्षीराक्तान् बलिकर्म्मणि ॥ ५२ ॥
विक्षिपेज्जुहुयाच्चैवानलं मित्रञ्च कीर्त्तयेत् ।
भूतानां मातृभिः सार्द्धं बालकानान्तु शान्तये ॥ ५३ ॥

विद्यानां तपसाञ्चैव संयमस्य यमस्य च ।
कृष्यां वाणिज्यलाभे च शान्तिं कुर्व्वन्तु मे सदा ॥ ५४ ॥
पूजिताश्च यथान्यायं तुष्टिं गच्छन्तु सर्व्वशः ।
कुष्माण्डा यातुधानाश्च ये चान्ये गणसंज्ञिताः ॥ ५५ ॥
महादेवप्रसादेन महेश्वरमतेन च ।
सर्व्व एते नृणां नित्यं तुष्टिमाशु व्रजन्तु ते ॥ ५६ ॥
तुष्टाः सर्व्वं निरस्यन्तु दुष्कृतं दुरनुष्ठितं ।
महापातकजं सर्व्वं यच्चान्यद्विघ्नकारणं ॥ ५७ ॥
तेषामेव प्रसादेन विघ्ना नश्यन्तु सर्व्वशः ।
उद्वाहेषु च सर्व्वेषु वृद्धिकर्म्मसु चैव हि ॥ ५८ ॥
पुण्यानुष्ठानयोगेषु गुरुदेवार्च्चनेषु च ।
जपयज्ञविधानेषु यात्रासु च चतुर्द्दश ॥ ५९ ॥
शरीरारोग्यभोग्येषु सुखदानधनेषु च ।
वृद्धबालातुरेष्वेव शान्तिं कुर्व्वन्तु मे सदा ॥ ६० ॥
सोमाम्बुपौ तथाम्भोधिः सविता चानिलानलौ ।
तथार्कः कालजिह्वोऽभूत् पुत्त्रस्तालनिकेतनः ॥ ६१ ॥
स येषां जननीसंस्थस्तानसाधून् विबाधते ।
परिवर्त्तसुतौ द्वौ तु विरूपविकृतौ द्विज ॥ ६२ ॥
तौ तु वृक्षाग्रपरिखाप्राकाराम्भोधिसंश्रयौ ।
गुर्व्विण्याः परिवर्त्तन्तौ कुरुतः पादपादिषु ॥ ६३ ॥
क्रोष्टुके परिवर्त्तन्त्या गर्भस्यान्योदरान्ततः ।
न वृक्षं चैव नैवाट्टं न प्राकारं महोदधिं ॥ ६४ ॥

परिग्वां वा समाक्रामेदबला गर्भधारिणी ।
अङ्गधक् तनयं लेभे पिशुनं नाम नामतः ॥ ६५ ॥
सोऽस्थिमज्जागतः पुंसां बलमत्त्यजितात्मनां ।
श्येनकाककपोतांश्च गृध्रोलूकैश्च वै सुतान् ॥ ६६ ॥
अवाप शकुनिः पञ्च जगृहुस्तान् सुरासुराः ।
श्येनं जग्राह मृत्युश्च काकं कालो गृहीतवान् ॥ ६७ ॥
उलूकं निर्ऋतिश्चैव जग्राहातिभयावहं ।
गृध्रं व्याधिस्तदीशोऽस्य कपोतं च स्वयं यमः ॥ ६८ ॥
एतेषामेव चैवोक्ता भूताः पापोपपादने ।
तस्माच्छ्येनादयो यस्य निलीयेयुः शिरस्यथ ॥ ६९ ॥
तेनात्मरक्षणायालं शान्तिं कुर्य्याद्विजोत्तम ।
गेहे प्रसूतिरेतेषां तद्वन्नीड़निवेशनं ॥ ७० ॥
नरस्तं वर्ज्जयेद्गेहं कपोताक्रान्तमस्तकं ।
श्येनः कपोतो गृध्रश्च काकोलूकौ गृहे द्विज ॥ ७१ ॥
प्रविष्टः कथयेदन्तं वसतां तत्र वेश्मनि ।
ईदृक् परित्यजेद्गेहं शान्तिं कुर्य्याच्च पण्डितः ॥ ७२ ॥
स्वप्नेऽपि हि कपोतस्य दर्शनं न प्रशस्यते ।
षडपत्यानि कथ्यन्ते गण्डप्रान्तरतेस्तथा ॥ ७३ ॥
स्त्रीणां रजस्यवस्थानं तेषां कालांश्च मे शृणु ।
चत्वार्य्यहानि पूर्व्वानि तथैवान्यत् त्रयोदश ॥ ७४ ॥
एकादश तथैवान्यदपत्यं तस्य वै दिने ।
अन्यद्दिनाभिगमने श्राद्धदाने तथापरे ॥ ७५ ॥

पर्व्वस्वथान्यत् तस्मात्तु वर्ज्यान्येतानि पण्डितैः ।
गर्भहन्तुः सुतो निघ्नो मोहनो चापि कन्यका ॥ ७६ ॥
प्रविश्य गर्भमन्त्यको भुक्त्वा मोहयतेऽपरा ।
जायन्ते मोहनात्तस्याः सर्पमण्डूककच्छपाः ॥ ७७ ॥
सरीसृपाणि चान्यानि पुरीषमथवा पुनः ।
षण्मासान् गुर्व्विणीमांसमश्नुवानामसंयतां ॥ ७८ ॥
वृक्षच्छायाश्रयां रात्रावथवा चिचतुष्पथे ।
श्मशानकटभूमिष्ठामुत्तरीयविवर्ज्जितां ॥ ७९ ॥
रुदमानां निशीथेऽथ आविशेत्तामसौ स्त्रियं ।
सस्यहन्तुस्तथैवैकः चुद्रको नाम नामतः ॥ ८० ॥
सस्यर्द्धिं स सदा हन्ति लब्ध्वा रन्ध्रं शृणुष्व तत् ।
अमङ्गल्यदिनारम्भे सुतभो वपते च यः ॥ ८१ ॥
क्षेत्रेष्वनुप्रवेशं वै करोत्यन्तोपसर्ङ्गिषु ।
तस्मात् कल्यः सुप्रशस्ते दिनेऽभ्यर्च्च्य निशाकरं ॥ ८२ ॥
कुर्य्यादारम्भमुप्तिञ्च हृष्टस्तुष्टः सहायवान् ।
नियोजिकेति या कन्या दुःसहस्य मयोदिता ॥ ८३ ॥
जातं प्रचोदिकासंज्ञं तस्याः कन्याचतुष्टयं ।
मत्तोन्मत्तप्रमत्तास्तु नवा नार्य्यस्तु ताः सदा ॥ ८४ ॥
समाविशन्ति नाशाय चोदयन्तीह दारुणां ।
अधर्म्मं धर्म्मरूपेण कामञ्चाकामरूपिणं ॥ ८५ ॥
अनर्थञ्चार्थरूपेण मोक्षञ्चामोक्षरूपिणं ।
दुर्विनीता विना शौचं दर्शयन्ति पृथङ्नरान् ॥ ८६ ॥

भ्राम्यन्ते ताभिरष्टाभिः पुरुषार्थात् पृथङ्नराः ।
तासां प्रवेशश्च गृहे सन्ध्यत्तेषु उदुम्बरे ॥ ८७ ॥
धाताविधाचोश्च बलिर्यत्र काले न दीयते ।
भुञ्जतां पिवतां वापि सद्भिर्भिर्जलविप्रुषैः ॥ ८८ ॥
नवनारीषु संक्रान्तिस्तासामास्वभिजायते ।
विरोधिन्यास्त्रयः पुत्राश्चोदकग्राहकस्तथा ॥ ८९ ॥
तमःप्रच्छादकश्चान्यस्तत्स्वरूपं शृणुष्व मे ।
प्रदीपतैलसंसर्गदूषिते,लङ्घिते तथा ॥ ९० ॥
मुषलोलूखले यत्र पादुके वासने स्त्रियः ।
सर्पदाचादिकं यत्र पदाकृष्य तथासनं ॥ ९१ ॥
यत्रापल्लिप्तस्थानस्थ विहारः क्रियते गृहे ।
दर्व्वीमुखेन यत्राग्निराहृतोऽन्यत्र नीयते ॥ ९२ ॥
विरोधिनीसुतास्तत्र विजृम्भन्ते प्रचोदिताः ।
एका जिह्वागतः पुंसां स्त्रीणाञ्चालीकसत्यवान् ॥ ९३ ॥
चोदको नाम स प्रोक्तः पैशुन्यं कुरुते गृहे ।
अवधानकृतश्चान्यः श्रवणस्थोऽतिदुर्म्मतिः ॥ ९४ ॥
करोति ग्रहणन्तेषां वचसां ग्राहकस्तु सः ।
आक्रम्यान्यो मनो नृणां तमसाच्छाद्य दुर्म्मतिः ॥ ९५ ॥
क्रोधं जनयते यस्तु तमःप्रच्छादकस्तु सः ।
स्वयंहार्य्यास्तु चौर्य्येन जनितन्तनयत्रयं ॥ ९६ ॥
सर्व्वहार्य्यर्द्धहारी च वीर्य्यहारी तथैव च ।
अनाचान्तगृहेष्वेते मन्दाचारगृहेषु च ॥ ९७ ॥

अप्रक्षालितपादेषु प्रविशत्सु महानसं ।
खलेषु गोष्ठेषु च वै द्रोहो येषु गृहेषु वै ॥ ९८ ॥
तेषु सर्व्वे यथान्यायं विहरन्ति रमन्ति च ।
भ्रामयत्यास्तनयस्त्वेकः काकजङ्घ इति स्मृतः ॥ ९९ ॥
तेनाविष्टो रतिं सर्व्वो नैव प्राप्नोति वै पुरे ।
भुञ्जन् यो गायते मैत्रे गायते हसते च यः ॥ १०० ॥
सन्ध्यामैथुनिनश्चैव नरमाविशति द्विज ।
कन्याचयं प्रसूता सा या कन्या ऋतुहारिणी ॥ १०१ ॥
एका कुचहरा कन्या अन्या व्यञ्जनहारिका ।
तृतीया तु समाख्याता कन्यका जातहारिणी ॥ १०२ ॥
यस्या न क्रियते सर्व्वः सम्यक् वैवाहिको विधिः ।
कालातीतोऽथवा तस्या हरत्येका कुचद्वयं ॥ १०३ ॥
सम्यक् श्राद्धमदत्त्वा च तथानर्च्चेर च मातरं ।
विवाहितायाः कन्याया हरति व्यञ्जनं तथा ॥ १०४ ॥
अग्न्यम्बुशून्ये च तथा विधूपे सूतिकागृहे ।
अदीपशस्त्रमुषले भूतिसर्षपवर्जिते ॥ १०५ ॥
अनुप्रविश्य सा जातमपहृत्यात्मसम्भवं ।
क्षणप्रसविनी बालं तत्रैवोत्सृजते द्विज ॥ १०६ ॥
सा जातहारिणी नाम सुघोरा पिशिताशना ।
तस्मात् संरक्षणं कार्य्यं यत्नतः सूतिकागृहे ॥ १०७ ॥
स्मृतिश्चाप्रयतानाञ्च शून्यागारनिषेवणात् ।
अपहन्ति सुतस्तस्याः प्रचण्डो नाम नामतः ॥ १०८ ॥

पांशुभ्यस्तस्य सम्भूता लोकाः शतसहस्रशः ।
चण्डालयोनयश्चाष्टौ दण्डपाशातिभीषणाः ॥ १०९ ॥
क्षुधाविष्टास्ततो लोकास्ताश्च चण्डालयोनयः ।
अभ्यधावन्त चान्योन्यमत्तुकामाः परस्परं ॥ ११० ॥
प्रचण्डो वारयित्वा तु तास्ताश्चण्डालयोनयः ।
समये स्थापयामास यादृशे तादृशं शृणु ॥ १११ ॥
अद्य प्रभृति लोकानामावासं यो हि दास्यति ।
दण्डं तस्याहमतुलं पातयिष्ये न संशयः ॥ ११२ ॥
चण्डालयोन्योऽवसथे लोका या प्रसविष्यति ।
तस्याश्च सन्ततिः पूर्व्वा साच सद्यो न शिष्यति ॥ ११३ ॥
प्रसूते कन्यके द्वे तु स्त्रीपुंसोर्वीजहारिणी ।
वातरूपामरूपाञ्च तस्याः प्रहरणन्तु ते ॥ ११४ ॥
वातरूपा निषेकान्ते सा यस्मै क्षिपते सुतं ।
स पुमान् वातशुक्रत्वं प्रयाति वनितापि वा ॥ ११५ ॥
तथैव गच्छतः सद्यो निर्वीजत्वमरूपया ।
अस्नाताशी नरो योऽसौ तथा चापि वियोगिनः ॥ ११६ ॥
विद्वेषिणी तु या कन्या भ्रुकुटीकुटिलानना ।
तस्या द्वौ तनयौ पुंसामपकारप्रकाशकौ ॥ ११७ ॥
निर्वीजत्वं नरो याति नारी वा शौचवर्ज्जिता ।
पैशुन्याभिरतं लोलमसज्जलनिषेवणं ॥ ११८ ॥
पुरूपद्वेषिणञ्चैतौ नरमाक्रम्य तिष्ठतः ।
मात्रा भ्रात्रा तथा मित्रैरभीष्टैः स्वजनैः परैः ॥ ११९ ॥

विद्विष्टो नाशमायाति पुरुषो धर्म्मतोऽर्थतः ।
एकस्तु स्वगुणाँल्लोके प्रकाशयति पापकृत् ॥ १२० ॥
द्वितीयस्तु गुणान् मैत्रीं लोकस्थामपकर्षति ।
इत्येते दौःसहाः सर्व्वे यक्ष्मणः सन्ततावध ॥
पापाचाराः समाख्याता येर्व्याप्तमखिलं जगत् ॥१२१ ॥

इति श्रीमार्कण्डेयपुराणे दौःसहोत्पत्तिसमापनं नाम ॥ ५१ ॥

द्विपञ्चाशोऽध्यायः ॥



मार्कण्डेय उवाच ॥

इत्येष तामसः सर्गो ब्रह्मणोऽव्यक्तजन्मनः ।
रुद्रसर्गं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ १ ॥
तनयाश्च तथैवाष्टौ पत्न्यः पुत्राश्च ते तथा ।
कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतः प्रभोः ॥ २ ॥
प्रादुरासीदथाङ्कोऽस्य कुमारो नीललोहितः ।
रुरोद सुस्वरं सोऽथ द्रवंश्च द्विजसत्तम ॥ ३ ॥
किं रोदिषीति तं ब्रह्मा रुदन्तं प्रत्युवाच ह ।
नाम देहीति तं सोऽथ प्रत्युवाच जगत्पतिं ॥ ४ ॥
रुद्रस्त्वं देव नाम्नासि मा रोदीर्धैर्य्यमावह ।
एवमुक्तस्ततः सोऽथ सप्तकृत्वो रुरोद ह ॥ ५ ॥

ततोऽन्यानि ददौ तस्मै सप्त नामानि वै प्रभुः ।
स्थानानि चैषामष्टानां पत्नीः पुत्रांश्च वै द्विज ॥ ६ ॥
भवं सर्व्वं तथेशानं तथा पशुपतिं प्रभुः ।
भीममुग्रं महादेवमुवाच स पितामहः ॥ ७ ॥
चक्रे नामान्यथैतानि स्थानान्येषाञ्चकार ह ।
सूर्य्यो जलं मही वह्निर्व्वायुराकाशमेव च ॥ ८ ॥
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात् ।
सुवर्च्चला तथैवोमा विकेशी चापरा स्वधा ॥ ९ ॥
स्वाहा दिशस्तथा दीक्षा रोहिणी च यथाक्रमं ।
सूर्य्यादीनां द्विजश्रेष्ठ रुद्राद्यैर्नामभिः सह ॥ १० ॥
शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः ।
स्कन्दः सर्गोऽथ सन्तानो बुधश्चानुक्रमात् सुतः ॥ ११ ॥
एवम्प्रकारो रुद्रोऽसौ सतीं भार्य्यामविन्दत ।
दक्षकोपाच्च तत्याज सा सती स्वं कलेवरं ॥ १२ ॥
हिमवद्दुहिता साभून्मेनायां द्विजसत्तम ।
तस्या भ्राता तु मैनाकः सखाम्भोधिरनुत्तमः ॥ १३ ॥
उपयेमे पुनश्चैनामनन्यां भगवान् भवः ।
देवौ धाताविधातारौ भृगोः ख्यातिरसूयत ॥ १४ ॥
श्रियञ्च देवदेवस्य पत्नी नारायणस्य या ।
आयतिर्नियतिश्चैव मेरोः कन्ये महात्मनः ॥ १५ ॥
धाताविधात्रोस्ते भार्य्ये तयोर्ज्जातौ सुतावुभौ ।
प्राणश्चैव मृकण्डुश्च पिता मम महायशाः ॥ १६ ॥

मनस्विन्यामहं तस्मात् पुत्रो वेदशिरा मम ।
मृत्रवत्यां ममभवत् प्राणस्यापि निबोध मे ॥ १७ ॥
प्राणस्य द्युतिमान् पुत्र उत्पन्नस्तस्य चात्मजः ।
अजराश्च तयोः पुत्राः पौत्राश्च बहवोऽभवन् ॥ १८ ॥
पत्नी मरीचेः सम्भूतिः पौर्णमासमसूयत ।
विरजाः पर्वतश्चैव तस्य पुत्रौ महात्मनः ॥ १९ ॥
तयोः पुत्रांस्तु रक्षिष्ये वंशसंकीर्त्तने द्विज ।
स्मृतिश्चाङ्गिरसः पत्नी प्रसूता कन्यकास्तथा ॥ २० ॥
शिनीवाली कुहूश्चैव राका चानुमती तथा ।
अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ॥ २१ ॥
सोमं दुर्वाससञ्चैव दत्तात्रेयञ्च योगिनं ।
प्रीत्यां पुलस्त्यभार्य्यायां दत्तोलिस्तत्सुतोऽभवत् ॥ २२ ॥
पूर्व्वजन्मनि सोऽगस्त्यः स्मृतः स्वायम्भुवेऽन्तरे ।
कर्द्दमश्चार्व्ववीरश्च सहिष्णुश्च सुतत्रयं ॥ २३ ॥
क्षमा तु सुषुवे भार्य्या पुलहस्य प्रजापतेः ।
क्रतोस्तु सन्नतिर्भार्य्या वालिखिल्यानसूयत ॥ २४ ॥
षष्टिर्यानि सहस्राणि ऋषीणामूर्द्धरेतसां ।
ऊर्ज्जायान्तु वशिष्ठस्य सप्ताजायन्त वै सुताः ॥ २५ ॥
रजोगोत्रोर्द्ध्वबाहुश्च सवलश्चानघस्तथा ।
सुतपाः शुक्र इत्येते सर्व्वे सप्तर्षयः स्मृताः ॥ २६ ॥
योऽसावग्निरभीमानी ब्रह्मणस्तनयोऽग्रजः ।
तस्मात् स्वाहा सुतान् लेभे त्रीनुदारौजसो द्विज ॥ २७ ॥

पावकं पवमानञ्च शुचिञ्चापि जलाशिनं ।
तेषान्तु सन्ततावन्ये चत्वारिंशच्च पञ्च च ॥ २८ ॥
कथ्यन्ते बहुशश्चैते पिता पुत्रत्रयञ्च यत् ।
एवमेकोनपञ्चाशद्वह्नयः परिकीर्त्तिताः ॥ २९ ॥
पितरो ब्रह्मणा सृष्टा ये व्याख्याता मया तव ।
अग्निस्वात्ता वर्हिषदोऽनग्नयः साग्नयश्च ये ॥ ३० ॥
तेभ्यः स्वधा सुते जज्ञे मेनां वै धारिणीं तथा ।
ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज ॥ ३१ ॥

इति श्रीमार्कण्डेयपुराणे रुद्रसर्गाभिधानो नाम ॥ ५२ ॥

त्रिपञ्चाशोऽध्यायः ॥



क्रौष्टुकिरुवाच ॥

स्वायम्भुवं त्वयाख्यातमेतन्मन्वन्तरञ्च यत् ।
तदहं भगवन् सम्यक् श्रोतुमिच्छामि कथ्यतां ॥ १ ॥
मन्वन्तरप्रमाणञ्च देवा देवर्षयस्तथा ।
ये च क्षितीशा भगवन् देवेन्द्रश्चैव यस्तथा ॥ २ ॥

मार्कण्डेय उवाच ॥

मन्वन्तराणां संख्याता साधिका ह्येकसप्ततिः ।
मानुषेण प्रमाणेन शृणु मन्वन्तरञ्च मे ॥ ३ ॥

त्रिंशत्कोट्यस्तु संख्याताः सहस्राणि च विंशतिः ।
सप्तषष्टिस्तथान्यानि नियुतानि च संख्यया ॥ ४ ॥
मन्वन्तरप्रमाणञ्च इत्येतत् साधिकं विना ।
अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृतं ॥ ५ ॥
द्विपञ्चाशत्तथान्यानि सहस्राण्यधिकानि च ।
स्वायम्भुवो मनुः पूर्व्वं मनुः स्वारोचिषस्तथा ॥ ६ ॥
औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ।
षडेते मनवोऽतीतास्तथा वैवस्वतोऽधुना ॥ ७ ॥
सावर्णाः पञ्च रौच्याश्च भौत्याश्चागमिनस्त्वमी ।
एतेषां विस्तरं भूयो मन्वन्तरपरिग्रहे ॥ ८ ॥
वक्ष्ये देवानृषींश्चैव यक्षेन्द्राः पितरश्च ये ।
उत्पत्तिं संयहं ब्रह्मन् श्रूयतामस्य सन्ततिः ॥ ९ ॥
यच्च तेषामभूत् क्षेत्रं तत्पुत्राणां महात्मनां ।
मनोःस्वायम्भुवस्यासन् दश पुत्रास्तु तत्समाः ॥ १० ॥
यैरियं पृथिवी सर्व्वा सप्तद्वीपा सपर्व्वता ।
ससमुद्रा करवती प्रतिवर्षं निवेशिता ॥ ११ ॥
स्वायम्भुवेऽन्तरे पूर्व्वमाद्ये त्रेतायुगे तथा ।
प्रियव्रतस्य पुत्रैस्तैः पौत्रैः स्वायम्भुवस्य च ॥ १२ ॥
प्रियव्रतात् प्रजावत्यां वीरात् कन्या व्यजायत ।
कन्या सा तु महाभागा कर्द्दमस्य प्रजापतेः ॥ १३ ॥
कन्ये द्वे दश पुत्रांश्च सम्राट्कुक्षी च ते उभे ।
तयोर्वै भ्रातरः शूराः प्रजापतिसमा दश ॥ १४ ॥

अग्नीध्रो मेधातिथिश्च वपुष्मांश्च तथापरः ।
ज्योतिष्मान्द्युतिमान् भव्यः सवनः सप्त एव ते ॥ १५ ॥
प्रियव्रतोऽभ्यषिञ्चत्तान् सप्त सप्तसु पार्थिवान् ।
द्वीपेषु तेन धर्म्मेण द्वीपांश्चैव निबोध मे ॥ १६ ॥
जम्बुद्वीपे तथाग्नीध्रं राजानं कृतवान् पिता ।
प्लक्षद्वीपेश्वरश्चापि तेन मेधातिथिः कृतः ॥ १७ ॥
शाल्मले तु वपुष्मन्तं ज्योतिष्मन्तं कुशाह्वये ।
क्रौञ्चद्वीपे द्युतिमन्तं भव्यं शाकाह्वयेश्वरं ॥ १८ ॥
पुष्कराधिपतिञ्चापि सवनं कृतवान् सुतं ।
महावीतो धातकिश्च पुष्कराधिपतेः सुतौ ॥ १९ ॥
द्विधा कृत्वा तयोर्वर्षं पुष्करः सन्न्यवेशयत् ।
भव्यस्य पुत्राः सप्तासन्नामतस्तान्निबोध मे ॥ २० ॥
जलदश्च कुमारश्च सुकुमारो मनीवकः ।
कुशोत्तरोऽथ मेधावी सप्तमस्तु महाद्रुमः ॥ २१ ॥
तन्नामकानि वर्षाणि शाकद्वीपे चकार सः ।
तथा द्युतिमतः सप्त पुत्रास्तांश्च निबोध मे ॥ २२ ॥
कुशलो मनुगश्चोष्णः प्राकरश्चार्थकारकः ।
मुनिश्च दुन्दुभिश्चैव सप्तमः परिकीर्त्तितः ॥ २३ ॥
तेषां स्वनामधेयानि क्रौञ्चद्वीपे तथाभवन् ।
ज्योतिष्मतः कुशद्वीपे पुत्रनामाङ्कितानि वै ॥ २४ ॥
तत्रापि सप्त वर्षाणि तेषां नामानि मे शृणु ।
उद्भिदं वैणवञ्चैव सुरथं लम्बनं तथा ॥ २५ ॥

धृतिमत् प्राकरश्चैव कापिलं चापि सप्तमं ।
वपुष्मतः सुताः सप्त शाल्मलेशस्य चाभवन् ॥ २६ ॥
श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा ।
वैद्युतो मानसश्चैव केतुमान् सप्तमस्तथा ॥ २७ ॥
तथैव शाल्मलेस्तेषां समनामानि सप्त वै ।
सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य वै ॥ २८ ॥
येषां नामाङ्कितैर्वर्षैः प्लक्षद्वीपस्तु सप्तधा ।
पूर्व्वं शाकभवं वर्षं शिशिरन्तु सुखोदयं ॥ २९ ॥
आनन्दञ्च शिवञ्चैव क्षेमकञ्च ध्रुवन्तथा ।
प्लक्षद्वीपादिभूतेषु शाकद्वीपान्तिमेषु वै ॥ ३० ॥
ज्ञेयः पञ्चसु धर्म्मश्च वर्णाश्रमविभागजः ।
नित्यः स्वाभाविकश्चैव अहिंसाविधिवर्ज्जितः ॥ ३१ ॥
पञ्चस्वेतेषु वर्षेषु सर्व्वसाधारणः स्मृतः ।
अग्नीध्राय पिता पूर्व्वं जम्बुद्वीपं ददौ द्विज ॥ ३२ ॥
तस्य पुत्रा बभूवुर्हि प्रजापतिसमा नव ।
ज्येष्ठो नाभिरिति ख्यातस्तस्य किंपुरुषोऽनुजः ॥ ३३ ॥
हरिवर्षस्तृतीयस्तु चतुर्थोऽभूदिलावृतः ।
रम्यश्च पञ्चमः पुत्रो हिरण्मयःषष्ठ उच्यते ॥ ३४ ॥
कुरुस्तु सप्तमस्तेषां भद्राश्वश्चाष्टमः स्मृतः ।
नवमः केतुमालश्च तन्नाम्ना वर्षसंस्थितिः ॥ ३५ ॥
यानि किंपुरुषाख्यानि वर्ज्जयित्वा हिमाह्वयं ।
तेषां स्वभावतः सिद्धिः सुखप्राया ह्ययत्नतः ॥ ३६ ॥

विपर्य्ययो न तेष्वस्ति जरामृत्युभयं न च ।
धर्म्माधर्म्मौ न तेष्वास्तां नोत्तमाधममध्यमाः ॥ ३७ ॥
न वै चतुर्युगावस्था नार्त्तवा ऋतवो न च ।
आग्नीध्रसूनोर्नाभेस्तु ऋषभोऽभूत्सुतो द्विज ॥ ३८ ॥
ऋषभाद्भरतो जज्ञे वीरः पुत्रशताद्वरः ।
सोऽभिषिच्यर्षभः पुत्रं महाप्राव्राज्यमास्थितः ॥ ३९ ॥
तपस्तेपे महाभागः पुलहाश्रमसंश्रयः ।
हिमाह्वं दक्षिणं वर्षं भरताय पिता ददौ ॥ ४० ॥
तस्मात्तु भारतं वर्षं तस्य नाम्ना महात्मनः ।
भरतस्याप्यभूत्पुत्रः सुमतिर्नाम धार्म्मिकः ॥ ४१ ॥
तस्मिन्राज्यं समावेश्य भरतोऽपि वनं ययौ ।
एतेषां पुत्रपौत्रैस्तु सप्तद्वीपा वसुन्धरा ॥ ४२ ॥
प्रियव्रतस्य पुत्रैस्तु भुक्ता स्वायम्भुवेऽन्तरे ।
एष स्वायम्भुवः सर्गः कथितस्ते द्विजोत्तम ॥ ४३ ॥
पूर्व्वमन्वन्तरे सम्यक् किमन्यत् कथयामि ते ॥ ४४ ॥

इति श्रीमार्कण्डेय पुराणे मन्वन्तरकथनं नाम ॥ ५३ ॥

चतुःपञ्चाशोऽध्यायः ॥

क्रौष्टुकिरुवाच ॥

कति द्वीपाः समुद्रा वा पर्व्वताश्वा कति द्विज ।
कियन्ति चैव वर्षाणि तेषां नद्यश्च का मुने ॥ १ ॥

महाभूतप्रमाणञ्च लोकालोकन्तथैव च।
पर्य्याप्तं परिमाणञ्च गतिञ्चन्द्रार्कयोरपि ॥ २ ॥
एतत् प्रब्रूहि मे सर्व्वं विस्तरेण महामुने ॥ ३ ॥

मार्कण्डेय उवाच ॥

शतार्द्धकोटिविस्तारा पृथिवी कृत्स्नशो द्विज।
तस्या हि स्थानमखिलं कथयामि शृणुष्व तत् ॥ ४ ॥
ये ते द्वीपा मया प्रोक्ता जम्बुद्वीपादयो द्विज।
पुष्करान्ता महाभाग शृणुवेषां विस्तरं पुनः ॥ ५ ॥
द्वीपात्तु द्विगुणो द्वीपो जम्बुः प्लक्षोऽथ शाल्मलः।
कुशः क्रौञ्चस्तथा शाकः पुष्करद्वीप एव च ॥ ६ ॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलाब्धिभिः।
द्विगुणैर्द्विगुणैर्वृद्ध्या सर्व्वतः परिवेष्टिताः ॥ ७ ॥
जम्बुद्वीपस्य संस्थानं प्रवक्ष्येऽहं निबोध मे।
लक्षमेकं योजनानां वृत्तो विस्तारदैर्घतः ॥ ८ ॥
हिमवान् हेमकूटश्च ऋषभो मेरुरेव च।
नीलः श्वेतस्तथा शृङ्गी सप्तास्मिन् वर्षपर्व्वताः ॥ ९ ॥
द्वौ लक्षयोजनायामौ मध्ये तत्र महाचलौ।
तयोर्दक्षिणतो यौ तु यौ तथोत्तरतो गिरी ॥ १० ॥
दशभिर्दशभिर्न्यूनैः सहस्रैस्तैः परस्परं।
द्विसाहस्रोच्छ्रयाः सर्व्वे तावद्विस्तारिणश्च ते ॥ ११ ॥
समुद्रान्तःप्रविष्टाश्च षड़स्मिन् वर्षपर्व्वताः।
दक्षिणोत्तरतो निम्ना मध्ये तुङ्गायता क्षितिः ॥ १२ ॥

वर्षार्द्धे दक्षिणे त्रीणि त्रीणि वर्षाणि चोत्तरे।
इलावृतं तयोर्म्मध्ये चन्द्रार्द्धाकारवत् स्थितं ॥ १३ ॥
ततः पूर्व्वेण भद्राश्वं केतुमालञ्च पश्चिमे।
इलावृतस्य मध्ये तु मेरुः कनकपर्व्वतः ॥ १४ ॥
चतुरशीतिसाहस्रस्तस्योच्छ्रायो महागिरेः।
प्रविष्टः षोड़शाधस्ताद्विस्तीर्णः षोड़शैव तु ॥ १५ ॥
शरावसंस्थितत्वाच्च द्वात्रिंशन्मूर्द्ध्नि विस्तृतः।
शुक्लः पीतोऽसितो रक्तः प्राच्यादिषु यथाक्रमं ॥ १६ ॥
विप्रो वैश्यस्तथा शूद्रः क्षत्रियश्च सवर्णतः।
तस्योपरि तथैवाष्टौ पूर्व्वादिषु यथाक्रमं ॥ १७ ॥
इन्द्रादिलोकपालानां तन्मध्ये ब्रह्मणः सभा।
योजनानां सहस्राणि चतुर्द्दश समुच्छ्रिता ॥ १८ ॥
अयुतोच्छ्रायस्तस्याधस्तथा विष्कम्भपर्व्वतः।
प्राच्यादिषु क्रमेणैव मन्दरो गन्धमादनः ॥ १९ ॥
विपुलश्च सुपार्श्वश्च केतुपादपशोभिताः।
कदम्बो मन्दरे केतुर्जम्बुर्व्वै गन्धमादने ॥ २० ॥
विपुले च तथाश्वत्थः सुपार्श्वे च वटो महान्।
एकादशशतायामा योजनानामिमे नगाः ॥ २१ ॥
जठरो देवकूटश्च पूर्व्वस्यां दिशि पर्व्वतौ।
आनीलनिषधौ प्राप्तौ परस्परनिरन्तरौ ॥ २२ ॥
निषधः पारिपात्रश्च मेरोः पार्श्वे तु पश्चिमे।
यथा पूर्व्वौ तथाचैतावानीलनिषधायतौ ॥ २३ ॥

कैलासो हिमवांश्चैव दक्षिणेन महाचलौ ।
पूर्व्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥ २४ ॥
शृङ्गवान जारुधिश्चैव तथैवोत्तरपर्व्वतौ ।
यथैव दक्षिणे तद्वदन्तर्वान्तर्व्यवस्थितौ ॥ २५ ॥
मर्य्यादपर्व्वता ह्येते कथ्यन्तेऽष्टौ द्विजोत्तम ।
हिमवद्धेमकूटादिपर्व्वतानां परस्परं ॥ २६ ॥
नव योजनसाहस्रं प्रागुदग्दक्षिणोत्तरं ।
मेरोरिलावृते तद्वदन्तरं वै चतुर्द्दिशं ॥ २७ ॥
फलानि यानि वै जम्ब्वा गन्धमादनपर्व्वते ।
गजदेहप्रमाणानि पतन्ति गिरिमूर्द्धनि ॥ २८ ॥
तेषां स्रावात् प्रभवति ख्याता जम्बुनदीति वै ।
यत्र जाम्बूनदं नाम कनकं सम्प्रजायते ॥ २९ ॥
सा परिक्रम्य वै मेरुं जम्बूमूलं पुनर्नदी ।
विशति द्विजशार्दूल पीयमाना जनैश्च तैः ॥ ३० ॥
भद्राश्वेऽश्वशिरा विष्णुर्भारते कूर्म्मसंस्थितिः ।
वराहः केतुमाले च मत्स्यरूपस्तथोत्तरे ॥ ३१ ॥
तेषु नक्षत्रविन्यासाद्विषयाः समवस्थिताः ।
चतुर्ष्वपि द्विजश्रेष्ठ ग्रहाभिभवपाठकाः ॥ ३२ ॥

इति श्रीमार्कण्डेय पुराणे भुवनकोषे जम्बूद्वीपवर्णनं नाम ॥ ५४ ॥

पञ्चपञ्चाशोऽध्यायः ।

मार्कण्डेय उवाच ॥

शैलेषु मन्दराद्येषु चतुर्ष्वेव द्विजोत्तम ।
वनानि यानि चत्वारि सरांसि च निबोध मे ॥ १ ॥
पूर्वं चैत्ररथं नाम दक्षिणे नन्दनं वनं ।
वैभ्राजं पश्चिमे शैले सावित्रं चोत्तराचले ॥ २ ॥
अरुणोदं सरः पूर्वं मानसं दक्षिणे तथा ।
शीतोदं पश्चिमे मेरोर्महाभद्रं तथोत्तरे ॥ ३ ॥
शीतार्तश्चक्रमुञ्जश्च कुलीरोऽथ सुकङ्कवान् ।
मणिशैलोऽथ वृषवान् महानीलो भवाचलः ॥ ४ ॥
सबिन्दुर्मन्दरो वेणुस्तामसो निषधस्तथा ।
देवशैलश्च पूर्वेण मन्दरस्य महाचलः ॥ ५ ॥
त्रिकूटशिखराद्रिश्च कलिङ्गोऽथ पतङ्गकः ।
रुचकः सानुमांश्चाद्रिस्ताम्रकोऽथ विशाखवान् ॥ ६ ॥
श्वेतोदरः समूलश्च वसुधारश्च रत्नवान् ।
एकशृङ्गो महाशैलो राजशैलः पिपाठकः ॥ ७ ॥
पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः ।
इत्येते दक्षिणे पार्श्वे मेरोः प्रोक्ता महाचलाः ॥ ८ ॥
सुरक्षः शिशिराक्षश्च वैदूर्यः कपिलस्तथा ।
पिञ्जरोऽथ महाभद्रः सुरसः कपिलो मधुः ॥ ९ ॥

अञ्जनः कुक्कुटः कृष्णः पाण्डरश्चाचलोत्तमः।
सहस्रशिखरश्चाद्रिः पारियात्रः सशृङ्गवान्॥ १० ॥
पश्चिमेन तथा मेरोर्विष्कम्भात् पश्चिमाद्बहिः।
एतेऽचलाः समाख्याताः शृणुष्वान्यांस्तथोत्तरान्॥ ११ ॥
शङ्खकूटोऽथ वृषभो हंसनाभस्तथाचलः।
कपिलेन्द्रस्तथा शैलः सानुमान् नील एव च॥ १२ ॥
स्वर्णशृङ्गी शातशृङ्गी पुष्पको मेघपर्व्वतः।
विरजाक्षो वराहाद्रिर्मयूरो जारुधिस्तथा॥ १३ ॥
इत्येते कथिता ब्रह्मन् मेरोरुत्तरतो नगाः।
एतेषां पर्व्वतानान्तु द्रोण्योऽतीवमनोहराः॥ १४ ॥
वनैरमलपानीयैः सरोभिरुपशोभिताः।
तासु पुण्यकृतां जन्म मनुष्याणां द्विजोत्तम॥ १५ ॥
एते भौमा द्विजश्रेष्ठ स्वर्गाः स्वर्गगुणाधिकाः।
न तासु पुण्यपापानामपूर्व्वाणामुपार्ज्जनं॥ १६ ॥
पुण्योपभोगा एवोक्ता देवानामपि तास्वपि।
शीतान्ताद्येषु चैतेषु शैलेषु द्विजसत्तम॥ १७ ॥
विद्याधराणां यक्षाणां किन्नरोरगरक्षसां।
देवानाञ्च महावासा गन्धर्व्वाणां च शोभनाः॥ १८ ॥
महापुण्या मनोज्ञैश्च सदैवोपवनैर्युताः।
सरांसि च मनोज्ञानि सर्व्वर्त्तुसुखदोऽनिलः॥ १९ ॥
न चैतेषु मनुष्याणां वैमनस्यानि कुत्रचित्।
तदेवं पार्थिवं पद्मं चतुष्पत्रं मयोदितं॥ २० ॥

भद्राश्वभारताद्यानि पत्राण्यस्य चतुर्द्दिशं ।
भारतं नाम यद्वर्षं दक्षिणेन मयोदितं ॥ २१ ॥
तत् कर्म्मभूमिर्नान्यत्र संप्राप्तिः पुण्यपापयोः ।
एतत् प्रधानं विज्ञेयं यत्र सर्व्वं प्रतिष्ठितं ॥ २२ ॥
तस्मात् स्वर्गापवर्गौ च मानुष्यनारकावपि ।
तिर्य्यक्त्वमथवाप्यन्यत् नरः प्राप्नोति वै द्विज ॥ २३ ॥

इति मार्कण्डेयपुराणे भुवनकोशे ५५

षट्पञ्चाशोऽध्यायः ।

मार्कण्डेय उवाच ।

सर्वाधारं जगद्योनिं पदं नारायणस्य च ।
ततः प्रवृत्ता या देवी गङ्गा त्रिपथगामिनी ॥ १ ॥
सा प्रविश्य सुधायोनिं सोममाधारमम्भसां ।
ततः सम्बध्यमानार्करश्मिसङ्गातिपावनी ॥ २ ॥
पपात मेरुपृष्ठे च सा चतुर्द्धा ततो ययौ ।
मेरुकूटतटान्तेभ्यो निपतन्ती विवर्त्तिता ॥ ३ ॥
विकीर्य्यमाणसलिला निरालम्बा पपात सा ।
मन्दराद्येषु पादेषु प्रविभक्तोदका समं ॥ ४ ॥
पूर्व्वेऽपि पपाताम्बुविभिन्नाद्रिशिलोच्चया ।
पूर्व्वां शीतेऽतिविख्याता ययौ चैत्ररथं वनं ॥ ५ ॥

तत्प्लावयित्वा च ययौ वरुणादं सरोवरं ।
शीतान्तञ्च गिरिं तस्मात्ततश्चान्यान् गिरीन् क्रमात् ॥ ६ ॥
गत्वा भुवं समासाद्य भद्राश्वाज्जलधिं गता।
तथैवालकनन्दाख्यं दक्षिणे गन्धमादने ॥ ७ ॥
मेरुपादवनं गत्वा नन्दनं देवनन्दनं ।
मानसञ्च महावेगात् प्लावयित्वा सरोवरं ॥ ८ ॥
आसाद्य शैलराजानं रम्यं हि शिखरन्तथा ।
तस्माच्च पर्व्वतान् सर्व्वान् दक्षिणोपक्रमादितान् ॥ ९ ॥
तान् प्लावयित्वा संप्राप्ता हिमवन्तं महागिरिं ।
दधार तत्र तां शम्भुर्न मुमोच वृषध्वजः ॥ १० ॥
भगीरथेनोपवासैः स्तुत्या चाराधितो विभुः ।
तत्र मुक्ता च शर्व्वेन सप्तधा दक्षिणोदधिं ॥ ११ ॥
प्रविवेश त्रिधा प्राच्यां प्लावयन्ती महानदी ।
भगीरथरथस्यानु स्रोतसैकेन दक्षिणां ॥ १२ ॥
तथैव पश्चिमे पादे विपुले सा महानदी ।
स्वरक्षुरिति विख्याता वैभ्राजं साचलं ययौ ॥ १३ ॥
शीतोदञ्च सरस्तस्मात् प्लावयन्ती महानदी ।
स्वरक्षुः पर्व्वतं प्राप्ता ततश्च त्रिशिखं गता ॥ १४ ॥
तस्मात् क्रमेण चाद्रीणां शिखरेषु निपत्य सा ।
केतुमालं समासाद्य प्रविष्टा लवणोदधिं ॥ १५ ॥
सुपार्श्वन्तु तथैवाद्रिं मेरुपादं हि सा गता ।
तत्र सोमेति विख्याता सा ययौ सवितुर्वनं ॥ १६ ॥

तत्पावयन्ती संप्राप्ता महाभद्रं सरोवरं ।
ततश्च शङ्खकूटं सा प्रयाता वै महानदी ॥ १७ ॥
तस्माच्च वृषभादीन् सा क्रमात् प्राप्य शिलोच्चयान् ।
महार्णवमनुप्राप्ता प्लावयित्वोत्तरान् कुरून् ॥ १८ ॥
एतमेषा मया गङ्गा कथिता ते द्विजर्षभ ।
जम्बुद्वीपनिवेशाश्च वर्षाणि च यथातथं ॥ १९ ॥
वसन्ति तेषु सर्व्वेषु प्रजाः किंपुरुषादिषु ।
सुखप्राया निरातङ्का न्यूनतोत्कर्षवर्ज्जिताः ॥ २० ॥
नवस्वपि च वर्षेषु सप्त सप्त कुलाचलाः ।
एकैकस्मिंस्तदा देशे नद्यश्चाद्रिविनिःसृताः ॥ २१ ॥
यानि किंपुरुषाद्यानि वर्षाण्यष्टौ द्विजोत्तम ।
तेषूद्भिदानि तोयानि मेघवार्य्यत्र भारते ॥ २२ ॥
वार्क्षी स्वाभाविकी देश्या तोयोत्था मानसी तथा ।
कर्म्मजा च नृणां सिद्धिर्व्वर्षेष्वेतेषु चाष्टमु ॥ २३ ॥
कामप्रदेभ्यो वृक्षेभ्यो वार्क्षी सिद्धिः स्वभावजा ।
स्वाभाविकी समाख्याता तृप्तिर्देश्या च देशिकी ॥ २४ ॥
अपां सौक्ष्म्याच्च तोयोत्था ध्यानोपेता च मानसी ।
उपासनादिकार्य्यात्तु धर्म्मजा साप्युदाहृता ॥ २५ ॥
न चैतेषु युगावस्था नाधयो व्याधयो न च ।
पुण्यापुण्यसमारम्भो नैव तेषु द्विजोत्तम ॥ २६ ॥

इति श्रीमार्कण्डेयपुराणे गङ्गावतारो नाम । ५६ ॥

सप्तपञ्चाशोऽध्यायः ॥

क्रौष्टुकिरुवाच ॥

भगवन् कथितन्त्वेतज्जम्बुद्वीपं समासतः ।
यदेतद्भवता प्रोक्तं कर्म्म नान्यत्र पुण्यदं ॥ १ ॥
पापाय वा महाभाग वर्ज्जयित्वा तु भारतं ।
इतः स्वर्गश्च मोक्षश्च मध्यञ्चान्तञ्च गम्यते ॥ २ ॥
न खल्वन्यत्र मर्त्यानां भूमौ कर्म्म विधीयते ।
तस्माद्विस्तरशो ब्रह्मन् ममैतद्भारतं वद ॥ ३ ॥
ये चास्य भेदा यावन्तो यथावत् स्थितिरेव च ।
वर्षोऽयं द्विजशार्द्दूल ये चास्मिन् देशपर्व्वताः ॥ ४ ॥

मार्कण्डेय उवाच ॥

भारतस्यास्य वर्षस्य नव भेदान्निबोध मे ।
समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परं ॥ ५ ॥
इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् ।
नागद्वीपस्तथा सौम्यो गान्धर्व्वो वारुणस्तथा ॥ ६ ॥
अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः ।
योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात् ॥ ७ ॥
पूर्व्वे किराता यस्यान्ते पश्चिमे यवनास्तथा ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्तःस्थिता द्विज ॥ ८ ॥
इज्याध्यायवणिज्याद्यैः कर्म्मभिः कृतपावनाः ।
तेषां संव्यवहारश्च एभिः कर्म्मभिरिष्यते ॥ ९ ॥

स्वर्गापवर्गप्राप्तिश्च पुण्यं पापञ्च वै तदा ।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः ॥ १० ॥
विन्ध्यश्च पारिपात्रश्च सप्तैवात्र कुलाचलाः ।
तेषां सहस्रशश्चान्ये भूधरा ये समीपगाः ॥ ११ ॥
विस्तारोच्छ्रायिणो रम्या विपुलाश्चात्र सानवः ।
कोलाहलः सवैभ्राजो मन्दरो दर्दुराचलः ॥ १२ ॥
वातस्वनो वैद्युतश्च मैनाकः स्वरसस्तथा ।
तुङ्गप्रस्थो नागगिरी रोचनः पाण्डराचलः ॥ १३ ॥
पुष्पो गिरिर्दुर्ज्जयन्तो रैवतोऽर्व्वुद एव च ।
ऋष्यमूकः सगोमन्तः कूटशैलः कृतस्मरः ॥ १४ ॥
श्रीपर्व्वतश्च कोरश्च शतशोऽन्ये च पर्व्वताः ।
तैर्विमिश्रा जनपदा म्लेच्छाश्चार्य्याश्च भागशः ॥ १५ ॥
तैः पीयन्ते सरितश्रेष्ठा यास्ताः सम्यङ्निबोध मे ।
गङ्गा सरस्वती सिन्धुश्चन्द्रभागा तथापरा ॥ १६ ॥
यमुना च शतद्रुश्च वितस्तैरावती कुहूः ।
गोमती धूतपापा च बाहुदा सदृशद्वती ॥ १७ ॥
विपाशा देविका रंक्षुर्निश्चीरा गण्डकी तथा ।
कौशिकी चापगा विप्र हिमवत्पादनिःसृताः ॥ १८ ॥
वेदस्मृतिर्व्वेदवती वृत्रघ्नी सिन्धुरेव च ।
वेणवा सानन्दनी चैव सदानीरा मही तथा ॥ १९ ॥
पारा चर्म्मण्वती नूपी विदिशा वेत्रवत्यपि ।
शिप्रा ह्यवर्णी च तथा पारिपात्राश्रयाः स्मृताः ॥ २० ॥

शोणो महानदश्चैव नर्म्मदा सुरथा ऽद्रिजा ।
मन्दाकिनी दशार्णा च चित्रकूटा तथापरा ॥ २१ ॥
चित्रोत्पला सतमसा करमोदा पिशाचिका ।
तथान्या पिप्पलिश्रोणिर्विपाशा वञ्जुला नदी ॥ २२ ॥
सुमेरुजा शुक्तिमती शकुली त्रिदिवाक्रमुः ।
स्कन्धपादप्रसूता वै तथान्या वेगवाहिनी ॥ २३ ॥
शिप्रा पयोष्णी निर्व्विन्ध्या तापी सनिषधावती ।
वेण्या वैतरणी चैव सिनीवाली कुमुद्वती ॥ २४ ॥
करतोया महागौरी दुर्गा चान्तःशिरा तथा ।
विन्ध्यपादप्रसूतास्ता नद्यः पुण्यजलाः शुभाः ॥ २५ ॥
गोदावरी भीमरथी कृष्णा वेण्या तथापरा ।
तुङ्गभद्रा सुप्रयोगा वाह्या कावेर्यथापगा ॥ २६ ॥
विन्ध्यपादविनिष्क्रान्ता* इत्येताः सरिदुत्तमाः ।
कृतमाला ताम्रपर्णी पुष्पजा मत्पलावती ॥ २७ ॥
मलयाद्रिसमुद्भूता नद्यः शीतजलास्त्विमाः ।
पितृसोमर्षिकुल्या च इक्षुका त्रिदिवा च या ॥ २८ ॥
लाङ्गलिनी वंशकरा महेन्द्रप्रभवाः स्मृताः ।
ऋषिकुल्या कुमारी च मन्दगा मन्दवाहिनी ॥ २९ ॥
कृपा पलाशिनी चैव शुक्तिमत्प्रभवाः स्मृताः ।
सर्व्वाः पुण्याः सरस्वत्यः सर्व्वा गङ्गाःसमुद्रगाः ॥ ३० ॥

* सह्यपादविनिष्क्रान्ता इति पाठान्तरं

विश्वस्य मातरः सर्व्वाः सर्व्वपापहराः स्मृताः ।
अन्याः सहस्रशश्चोक्ताः क्षुद्रनद्यो द्विजत्तम ॥ ३१ ॥
प्रावृट्कालवहाः सन्ति सदाकालवहाश्च याः ।
मत्स्याश्वकूटाः कुल्याश्च कुन्तलाः काशिकोशलाः ॥ ३२ ॥
अथर्वाश्चार्कलिङ्गाश्च मल्लकाश्च वृकैः सह ।
मध्यदेश्या जनपदाः प्रायशोऽमी प्रकीर्त्तिताः ॥ ३३ ॥
सह्यस्य चोत्तरे यास्तु यत्र गोदावरी नदी ।
पृथिव्यामपि कृत्स्नायां स प्रदेशो मनोरमः ॥ ३४ ॥
गोवर्द्धनं पुरं रम्यं भार्गवस्य महात्मनः ।
वाह्लीका वाटधानाश्च आभीराः कालतोयकाः ॥ ३५
अपरान्ताश्च शूद्राश्च पल्लवाश्चर्म्मखण्डिकाः ।
गान्धारा गवलाश्चैव सिन्धुसौवीरमद्रकाः ॥ ३६ ॥
शतद्रुजाः कलिङ्गाश्च पारदा हारभूषिकाः ।
माठरा बहुभद्राश्च कैकेया दशमालिकाः ॥ ३७ ॥
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ।
काम्बोजा दरदाश्चैव बर्व्वरा हर्षवर्द्धनाः ॥ ३८ ॥
चीनाश्चैव तु खाराश्च बहुला बाह्यतोनराः ।
आत्रेयाश्च भरद्वाजाः पुष्कलाश्च कशेरुकाः ॥३९ ॥
लम्पाकाः शूलकाराश्च चुलिका जागुडैः सह ।
औपधाश्चानिमद्राश्च किरातानाञ्च जातयः ॥ ४० ॥
तामसा हंसमार्गाश्च काश्मीरास्तुङ्गनास्तथा ।
शूलिकाः कुहकाश्चैव ऊर्णा दर्व्वास्तथैव च ॥ ४१ ॥

एते देशा ह्युदीच्यास्तु प्राच्यान्देशान्निबोध मे ।
अन्धारका मुद्करा अन्तर्गिर्य्या बहिर्गिराः ॥ ४२ ॥
तथा प्रवङ्गा रङ्गेया मानदा मानवर्त्तिकाः ।
ब्रह्मोत्तराः प्रविजया भार्गवा ज्ञेयमल्लकाः ॥ ४३ ॥
प्राग्ज्योतिषाश्च मद्राश्च विदेहास्ताम्रलिप्तकाः ।
मल्ला मगधगोमन्ताः प्राच्या जनपदाः स्मृताः ॥ ४४ ॥
अथापरे जनपदा दक्षिणापथवासिनः ।
पुण्ड्राश्च केरलाश्चैव गोलाङ्गूलास्तथैव च ॥ ४५ ॥
शैलूषा मूषिकाश्चैव कुसुमा नाम वासकाः ।
महाराष्ट्रा माहिषका कलिङ्गाश्चैव सर्व्वशः ॥ ४६ ॥
आभीराः सह वैशिक्या आढक्याः शबराश्च ये ।
पुलिन्दा विन्ध्यमौलेया वैदर्भा दण्डकैःसह ॥ ४७ ॥
पौरिका मौलिकाश्चैव अश्मका भोगवर्द्धनाः ।
नैषिकाः कुन्तला अन्धा उद्भिदा वनदारकाः ॥ ४८ ॥
दाक्षिणात्यास्त्वमी देशा अपरान्तान् निबोध मे ।
सूर्य्यारकाः कालिवला दुर्गाश्चानीकटैःसह ॥ ४९ ॥
पुलिन्दाश्च सुमीनाश्च रूपपाः स्वापदैः सह ।
तथा कुरुमिनश्चैव सर्व्वे चैव कठाक्षराः ॥ ५० ॥
नासिक्यावाश्च ये चान्ये ये चैवोत्तरनर्म्मदाः ।
भीरुकच्छाः समाहेयाः सह सारस्वतैरपि ॥ ५१ ॥
काश्मीराश्च सुराष्ट्राश्च अवन्त्याश्चार्व्वुदैः सह ।
इत्येते ह्यपरान्ताश्च शृणु विन्ध्यनिवासिनः ॥ ५२ ॥

सरजाश्च करूषाश्च केरलाश्चोत्कलैःसह ।
उत्तमर्णा दशार्णाश्च भोज्याः किष्किन्धकैःसह ॥ ५३ ॥
तोशलाः कोशलांश्चैव त्रैपुरा वैदिशस्तथा ।
तुम्बुरास्तुम्बुलाश्चैव पटवो नैषधैः सह ॥ ५४ ॥
अन्नजास्तुष्टिकाराश्च वीरहोत्रा ह्यवन्तयः ।
एते जनपदाः सर्व्वे विन्ध्यपृष्ठनिवासिनः ॥ ५५ ॥
अतो देशान् प्रवक्ष्यामि पर्व्वताश्रयिणश्च ये ।
नीहारा हंसमार्गाश्च कुरवो गुर्गणाः खसाः ॥ ५६ ॥
कुन्तप्रावरणाश्चैव ऊर्णा दार्व्वाः सकूचकाः ।
त्रिगर्त्ता गालवाश्चैव किरातास्तामसैः सह ॥ ५७ ॥
कृतत्रेतादिकश्चात्र चतुर्युगकृतो विधिः ।
एतत्तु भारतं वर्षं चतुःसंस्थानसंस्थितं ॥ ५८ ॥
दक्षिणापरतो ह्यस्य पूर्व्वेण च महोदधिः ।
हिमवानुत्तरेणास्य कार्म्मुकस्य यथा गुणः ॥ ५९ ॥
तदेतद्भारतं वर्षं सर्व्वबीजं द्विजोत्तम ।
ब्रह्मत्वममरेशत्वं देवत्वं मरुतस्तथा ॥ ६० ॥
मृगपश्वप्सरोयोनिस्तद्वत्सर्व्वे सरीसृपाः ।
स्थावराणाञ्च सर्व्वेषामितो ब्रह्मन् शुभाशुभैः ॥ ६१ ॥
प्रयान्ति कर्म्मभूर्ब्रह्मन् नान्या लोकेषु विद्यते ।
देवानामपि विप्रर्षे सदा एष मनोरथः ॥ ६२ ॥
अपि मानुष्यमाप्स्यामो देवत्वात्प्रच्युताः क्षितौ ।
मनुष्यः कुरुते तत्तु यन्न शक्यं सुरासुरैः ॥ ६३ ॥

तत्कर्म्मनिगड़ग्रस्तैः स्वकर्म्मख्यापनोत्सुकैः ।
न किञ्चित् क्रियते कर्म्म सुखलेशोपबृंहितैः ॥ ६४ ॥

इति श्रीमार्कण्डेयपुराणे नाम ॥ ५७ ॥

अष्टपञ्चाशोऽध्यायः ॥



क्रौष्टुकिरुवाच ॥

भगवन् कथितं सम्यक् भवता भारतं मम ।
सरितः पर्व्वता देशा ये च तत्र वसन्ति वै ॥ १ ॥
किन्तु कूर्म्मस्त्वया पूर्व्वं भारते भगवान् हरिः ।
कथितस्तस्य संस्थानं श्रोतुमिच्छाम्यशेषतः ॥ २ ॥
कथं स संस्थितो देवः कूर्म्मरूपी जनार्द्दनः ।
शुभाशुभं मनुष्याणां व्यज्यते च ततः कथं ॥
यथामुखं यथापादन्तस्य तद्‌ब्रूह्यशेषतः ॥ ३ ॥

मार्कण्डेय उवाच ॥

प्राङ्मुखो भगवान् देवः कूर्म्मरूपी व्यवस्थितः ।
आक्रम्य भारतं वर्षं नवभेदमिमं द्विज ॥ ४ ॥
नवधा संस्थितान्यस्य नक्षत्राणि समन्ततः ।
विषयाश्च द्विजश्रेष्ठ ये सम्यक् तान्निबोध मे ॥ ५ ॥
वेदमन्त्रा विमाण्डव्याः शाल्वनीपास्तथा शकाः ।
उज्जिहानास्तथा वत्स घोषसंख्यास्तथा खशाः ॥ ६ ॥

मध्ये सारस्वता मत्स्याः शूरसेनाः समाथुराः ।
धर्मारण्या ज्योतिषिका गौरग्रीवा गुडाश्मकाः ॥ ७ ॥
वैदेहकाः सपाञ्चालाः संकेताः कङ्कमा[redacted]ाः ।
कालकोटिसपाषण्डाः पारिपात्रनिवासिनः ॥ ८ ॥
कापिङ्गलाः कुरुर्वाह्यास्तथैवोडुम्बरा जनाः ।
गजाह्वयाश्च कूर्म्मस्य जलमध्यनिवासिनः ॥ ९ ॥
कृत्तिका रोहिणी सौम्या एतेषां मध्यवासिनां ।
नक्षत्रत्रितयं विप्र शुभाशुभविपाटकं ॥ १० ॥
वृषध्वजोऽञ्जनश्चैव जम्ब्वाख्यो मानवाचलः ।
शूर्पकर्णो व्याघ्रमुखः खर्म्मकः कर्व्वटाशनः ॥ ११ ॥
तथा चन्द्रेश्वराश्चैव खशाश्च मगधास्तथा ।
गिरयो मैथिलाः शुभ्रास्तथा वदनदन्तुराः ॥ १२ ॥
प्राग्ज्योतिषाः सलौहित्याः सामुद्राः पुरुषादकाः ।
पूर्णोत्कटो भद्रगौरस्तथोदयगिरिर्द्विज ॥ १३ ॥
कशाया मेखलामुष्टास्ताम्रलिप्तैकपादपाः ।
वर्द्धमानाः कोशलाश्च मुखे कूर्म्मस्य संस्थिताः ॥ १४ ॥
रौद्रः पुनर्व्वसुः पुष्यो नक्षत्रत्रितयं मुखे ।
पादे तु दक्षिणे देशाः क्रोष्टुके वदतः शृणु ॥ १५ ॥
कलिङ्गवङ्गजठराः कोशला मूषिकास्तथा ।
चेदयश्चोर्द्ध्वकर्णाश्च मत्स्याद्या विन्ध्यवासिनः ॥ १६ ॥
विदर्भा नारिकेलाश्च धर्म्मद्वीपास्तथैलिकाः ।
व्याघ्रग्रीवा महाग्रीवास्त्रैपुराः श्मश्रुधारिणः ॥ १७ ॥

कैष्किन्ध्या हैमकूटाश्च निषधाः कटकस्थलाः ।
दशार्णा हारिका नग्ना निषादाः काकुलालकाः ॥ १८ ॥
तथैव पर्णशवराः पादे वै पूर्व्वदक्षिणे ।
अश्लेषर्क्षं तथा पैत्र्यं फाल्गुन्यः प्रथमास्तथा ॥ १९ ॥
नक्षत्रत्रितयं पादमाश्रितं पूर्व्वदक्षिणं ।
लङ्का कालाजिनाश्चैव शैलिका निकटास्तथा ॥ २० ॥
महेन्द्रमलयाद्रौ च दर्दुरे च वसन्ति ये ।
कर्कोटकवने ये च भृगुकच्छाः सकोङ्कना ॥ २१ ॥
सर्व्वाश्चैव तथाभीरा वेण्यास्तीरनिवासिनः ।
अवन्तयो दासपुरास्तथैवाकणिनो जनाः ॥ २२ ॥
महाराष्ट्राः सकर्णाटा गोनर्द्दाश्चित्रकूटकाः ।
चोलाः कोलगिराश्चैव क्रौञ्चद्वीपजटाधराः ॥ २३ ॥
कावेरी ऋष्यमूकस्था नासिक्याश्चैव ये जनाः ।
शङ्खमुक्तादिवैदूर्य्यशैलप्रान्तचराश्च ये ॥ २४ ॥
तथा वारिचराः कोलाः चर्म्मपट्टनिवासिनः ।
गणवाह्याःपराः कृष्णाद्वीपवासिनिवासिनः ॥ २५ ॥
सूर्य्याद्रौ कुमुदाद्रौ च ते वसन्ति तथा जनाः ।
औखावनाः सपिशिकास्तथा ये कर्म्मनायकाः ॥ २६ ॥
दक्षिणाः कौरुषा ये च ऋषिकास्तापसाश्रमाः ।
ऋषभाः सिंहलाश्चैव तथा काञ्चीनिवासिनः ॥ २७ ॥
तिलङ्गा कुञ्जरदरीकच्छवासाश्च ये जनाः ।
ताम्रपर्णी तथा कुक्षिरिति कूर्म्मस्य दक्षिणः ॥ २८ ॥

फाल्गुण्यश्चोत्तरा हस्ता चित्रा चर्क्षत्रयं द्विज।
कूर्म्मस्य दक्षिणे कुक्षौ बाह्यपादस्तथापरं ॥ २९ ॥
काम्बोजाः पह्लवाश्चैव तथैव वडवामुखाः।
तथा च सिन्धुसौवीराः सानर्त्ता वनितामुखाः ॥ ३० ॥
द्रावणाः मार्गिगाः शूद्राः कर्णप्राधेयबर्ब्बराः।
किराताः पारदाः पाण्ड्यास्तथा पारशवाः कलाः ॥ ३१ ॥
धूर्त्तका हैमगिरिकाः सिन्धुकालकवैरताः।
सौराष्ट्रा दरदाश्चैव द्राविडाश्च महार्णवाः ॥ ३२ ॥
एते जनपदाः पादे स्थिता वै दक्षिणेऽपरे।
स्वात्यो विशाखा मैत्रञ्च नक्षत्रत्रयमेवच ॥ ३३ ॥
मणिमेघः चुराद्रिश्च खञ्जनोऽस्तगिरिस्तथा।
अपरान्तिका हैहयाश्च शान्तिका विप्रशस्तकाः ॥ ३४ ॥
कोकङ्कणाः पञ्चदका वमना ह्यवरा स्तथा।
तारक्षुरा ह्यङ्गतकाः शकराः शाल्मवेश्मकाः ॥ ३५ ॥
गुरुस्वराः फल्गुणका वेणुमत्याश्च ये जनाः।
तथा फल्गुनुका घोरा गुरुहाश्च कलास्तथा ॥ ३६ ॥
एकेक्षणा वाजिकेशा दीर्घग्रीवाः सचूलिकाः।
अश्वकेशास्तथा पुच्छे जनाः कूर्म्मस्य संस्थिताः ॥ ३७ ॥
ऐन्द्रमूलन्तथाषाढा नक्षत्रत्रयमेव च।
माण्डव्याश्चण्डखाराश्च अश्वकालनतास्तथा ॥ ३८ ॥
कुन्यतालडहाश्चैव स्त्रीवाह्या बालिकास्तथा।
नृसिंहा वेणुमत्याश्च वलावस्थास्तथापरे ॥ ३९ ॥

धर्म्मबद्धास्तथालूका उरुकर्म्मस्थिता जनाः ।
वामपार्श्वे जनाः पार्श्वे स्थिताः कूर्म्मस्य भागुरे ॥ ४० ॥
आषाढाश्रवणे चैव धनिष्ठा यत्र संस्थिता ।
कैलासो हिमवांश्चैव धनुष्मान् वसुमांस्तथा ॥ ४१ ॥
क्रौञ्चाः कुरुवकाश्चैव क्षुद्रवीणाश्च ये जनाः ।
रसालयाः सकैकया भोगप्रस्थाः सयामुनाः ॥ ४२ ॥
अन्तर्द्वीपास्त्रिगर्त्ताश्च अग्नीज्याः सार्दना जनाः ।
तथैवाश्वमुखाः प्राप्ताश्चिविडाः केशधारिणः ॥ ४३ ॥
दासेरका वाटधानाः शवधानास्तथैव च ।
पुष्कलाधमकैराताास्तथा तक्षशिलाश्रयाः ॥ ४४ ॥
अम्बाला मालवा मद्रा वेणुकाः सवदन्तिकाः ।
पिङ्गला मानकलहा हूणाः कोहलकास्तथा ॥ ४५ ॥
माण्डव्या भूतियुवकाः शातका हेमतारकाः ।
यशोमत्याः सगान्धाराः खरसागरराशयः ॥ ४६ ॥
यौधेया दासमेयाश्च राजन्याः श्यामकास्तथा ।
क्षेमधूर्त्ताश्च कूर्म्मस्य वामकुक्षिमुपाश्रिताः ॥ ४७ ॥
वारुणश्चात्र नक्षत्रं तत्र प्रौष्ठपदाद्वयं ।
येन किन्नरराज्यञ्च पशुपालं सकीचकं ॥ ४८ ॥
काश्मीरकं तथा राष्ट्रमभिसारजनस्तथा ।
दवदास्त्वङ्गनाश्चैव कुलटा वनराष्ट्रकाः ॥ ४९ ॥
सैरिष्ठा ब्रह्मपुरकास्तथैव वनवाह्यकाः ।
किरातकौशिकानन्दा जनाः पह्लवलोलनाः ॥ ५० ॥

दार्वादा मरकाश्चैव कुरटाश्चान्नदारकाः ।
एकपादाः खशा घोषाः स्वर्गभौमानवद्यकाः ॥ ५१ ॥
तथा सयवना हिङ्गाश्चीरप्रावरणाश्च ये ।
त्रिनेत्राः पौरवाश्चैव गन्धर्व्वाश्च द्विजोत्तम ॥ ५२ ॥
पूर्व्वोत्तरन्तु कूर्म्मस्य पादमेते समाश्रिताः ।
रेवत्याश्चाश्विदैवत्यं याम्यञ्चर्क्षमिति त्रयं ॥ ५३ ॥
तत्र पादे समाख्यातं पाकाय मुनिसत्तम ।
देशेष्वेतेषु चैतानि नक्षत्राण्यपि वै द्विज ॥ ५४ ॥
एतत्पीड़ा अमी देशाः पीड्यन्ते ये क्रमोदिताः ।
यान्ति चाभ्युदयं विप्र ग्रहैः सम्यगवस्थितैः ॥ ५५ ॥
यस्यर्क्षस्य पतिर्यो वै ग्रहस्तद्भाविता भयं ।
तद्देशस्य मुनिश्रेष्ठ तदुत्कर्षे शुभागमः ॥ ५६ ॥
प्रत्येकं देशसामान्यं नक्षत्रग्रहसम्भवं ।
भयं लोकस्य भवति शोभनं वा द्विजोत्तम ॥ ५७ ॥
स्वर्क्षैरशोभनैर्जन्तोः सामान्यमिति भीतिदं ।
ग्रहैर्भवति पीडोत्थमल्पायासमशोभनं ॥ ५८ ॥
तथैव शोभनः पाको दुःस्थितैश्च तथा ग्रहैः ।
अल्पोपकाराय नृणां देशज्ञैश्चात्मनो बुधैः ॥ ५९ ॥
द्रव्ये गोष्ठेऽथ भृत्येषु सुहृत्सु तनयेषु वा ।
भार्य्यायाञ्च ग्रहे दुःस्थे भयं पुण्यवतां नृणां ॥ ६० ॥
आत्मन्यथाल्पपुण्यानां सर्व्वत्रातिपापिनां ।
नैकत्रापि ह्यपापानां भयमस्ति कदाचन ॥ ६१ ॥

दिग्देशजनसामान्यं नृपसामान्यमात्मजं ।
नक्षत्रग्रहसामान्यं नरो भुङ्क्ते शुभाशुभं ॥ ६२ ॥
परस्पराभिरक्षा च ग्रहादौस्थ्येन जायते ।
एतेभ्य एव विप्रेन्द्र शुभहानिस्तथाशुभैः ॥ ६३ ॥
यदेतत्कर्म्मसंस्थानं नक्षत्रेषु मयोदितं ।
एतत्तु देशसामान्यमशुभं शुभमेव च ॥ ६४ ॥
तस्माद्विज्ञाय देशर्क्षं ग्रहपीडान्तथात्मनः ।
कुर्व्वीत शान्तिं मेधावी लोकवादांश्च सत्तम ॥ ६५ ॥
आकाशाद्देवतानाञ्च दैत्यादीनाञ्च दोहृदाः ।
पृथ्व्यां पतन्ति ते लोके लोकवादा इति श्रुताः ॥ ६६ ॥
तां तथैव बुधः कुर्य्यात् लोकवादान्न हापयेत् ।
तेषान्तत्करणान्नृणां यत्नो दुष्टागमक्षयः ॥ ६७ ॥
शुभोदयं प्रहानिञ्च पापानां द्विजसत्तम ।
प्रज्ञाहानिं प्रकुर्य्युस्ते द्रव्यादीनाञ्च कुर्व्वते ॥ ६८ ॥
तस्माच्छान्तिपरः प्राज्ञो लोकवादरतस्तथा ।
लोकवादांश्च शान्तींश्च ग्रहपीडास् कारयेत् ॥ ६९ ॥
अद्रोहानुपवासांश्च शस्तं चैत्यादिवन्दनं ।
जपं होमं तथा दानं स्नानं क्रोधादिवर्ज्जनं ॥ ७० ॥
अद्रोहः सर्व्वभूतेषु मैत्रीं कुर्य्याच्च पण्डितः ।
वर्ज्जयेदसतीं वाचमतिवादांस्तथैव च ॥ ७१ ॥
ग्रहपूजाञ्च कुर्व्वीत सर्व्वपीडासु मानवः ।
एवं शाम्यन्त्यशेषाणि घोराणि द्विजसत्तम ॥ ७२ ॥

प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यशेषतः ।
एष कूर्म्मो मया ख्यातो भारते भगवान् विभुः ॥ ७३ ।
नारायणो ह्यचिन्त्यात्मा यत्र सर्व्वं प्रतिष्ठितं ।
तत्र देवाःस्थिताः सर्व्वे प्रतिनक्षत्रसंश्रयाः ॥ ७४ ॥
तथा मध्ये हुतवहः पृथ्वी सोमश्च वै द्विज ।
मेषादयस्त्रयो मध्ये मुखे द्वौ मिथुनादिकौ ॥ ७५ ॥
प्राग्दक्षिणे तथा पादे कर्किसिंहौ व्यवस्थितौ ।
सिंहकन्यातुलाश्चैव कुक्षौ राशित्रयं स्थितं ॥ ७६ ॥
तुलाथ वृश्चिकश्चोभौ पादे दक्षिणपश्चिमे ।
पृष्ठे च वृश्चिकेनैव सह धन्वी व्यवस्थितः ॥ ७७ ॥
वायव्ये चास्य वै पादे धनुर्ग्राहादिकं त्रयं ।
कुम्भमीनौ तथैवास्य उत्तरां कुक्षिमाश्रितौ ॥ ७८ ॥
मीनमेषौ द्विजश्रेष्ठ पादे पूर्व्वोत्तरे स्थितौ ।
कूर्म्मे देशास्तथर्क्षाणि देशेष्वेतेषु वै द्विज ॥ ७९ ॥
राशयश्च तथर्क्षेषु ग्रहराशिष्ववस्थिताः ।
तस्माद्ग्रहर्क्षपीडासु देशपीडां विनिर्दिशेत् ॥ ८० ॥
तत्र स्नात्वा प्रकुर्व्वीत दानहोमादिकं विधिं ।
स एष वैष्णवः पादो ब्रह्मा मध्ये ग्रहस्य यः ॥ ८१ ॥

इति श्रीमार्कण्डेयपुराणे कूर्म्मनिवेशो नाम ॥ ५८ ॥

ऊनषष्टितमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

एवन्तु भारतं वर्षं यथावत् कथितं मुने ।
कृतं त्रेता द्वापरञ्च तथातिष्यचतुष्टयं ॥ १ ॥
अत्रैवैतद्युगानान्तु चातुर्व्वर्ण्योऽच वै द्विज ।
चत्वारि त्रीणि द्वे चैव तथैकञ्च शरच्छतं ॥ २ ॥
जीवन्त्यत्र नरा ब्रह्मन् कृतत्रेतादिके क्रमात् ।
देवकूटस्य पूर्व्वस्य शैलेन्द्रस्य महात्मनः ॥ ३ ॥
पूर्व्वेण यत् स्थितं वर्षं भद्राश्वं तन्निबोध मे ।
श्वेतपर्णश्च नीलश्च शैवालश्चाचलोत्तमः ॥ ४ ॥
कौरञ्जः पर्णशालाग्रः पञ्चैते तु कुलाचलाः ।
तेषां प्रसूतिरन्ये ये बहवः क्षुद्रपर्व्वताः ॥ ५ ॥
तैर्विशिष्टा जनपदा नानारूपाः सहस्रशः ।
ततः कुमुदसंकाशाः शुद्धसानुसमंगलाः ॥ ६ ॥
इत्येवमाद्योऽन्येऽपि शतशोऽथ सहस्रशः ।
शीता शंखावती भद्रा चक्रावर्त्तादिकास्तथा ॥ ७ ॥
नद्योऽथ बहुशो विस्तीर्णाः शीततोयौघवाहिकाः ।
अत्र वर्षे नराः शङ्खशुद्धहेमसमप्रभाः ॥ ८ ॥
दिव्यसङ्गमिनः पुण्या दशवर्षशतायुषः ।
अधमोत्तमो न तेषु स्तः सर्व्वे ते समदर्शनाः ॥ ९ ॥

तितिक्षादिभिरष्टाभिः प्रकृत्या ते गुणैर्युताः ।
तत्राप्यश्वशिरा देवश्चतुर्बाहुर्ज्जनार्द्दनः ॥ १० ॥
शिरोहृदयमेढ्राङ्घ्रिहस्तैश्चाक्षित्रयान्वितः ।
तस्याप्यथैवं विषया विज्ञेया जगतः प्रभोः ॥ ११ ॥
केतुमालमतो वर्षं निबोध मम पश्चिमं ।
विशालः कम्बलः कृष्णो जयन्तो हरिपर्व्वतः ॥ १२ ॥
विशोको वर्द्धमानश्च सप्तैते कुलपर्व्वताः ।
अन्ये सहस्रशः शैला येषु लोकगणाः स्थिताः ॥ १३ ॥
मौलयस्ते महाकायाः शाकपोतकरम्भकाः ।
अङ्गुलप्रमुखाश्चापि वसन्ति शतशो जनाः ॥ १४ ॥
ये पिबन्ति महानद्यो वंक्षुं श्यामां स्वकम्बलां ।
अमोघां कामिनीं श्यामां तथैवान्याः सहस्रशः ॥ १५ ॥
अत्राप्यायुः समं पूर्व्वैरत्रापि भगवान् हरिः ।
वराहरूपी पादास्यहृत्पृष्ठपार्श्वतस्तथा ॥ १६ ॥
त्रिनक्षत्रयुते देशे नक्षत्राणि शुभानि च ।
इत्येतत् केतुमालन्ते कथितं मुनिसत्तम ॥ १७ ॥
अतःपरं कुरून् वक्ष्ये निबोधेह ममोत्तरान् ।
तत्र वृक्षा मधुफला नित्यपुष्पफलोपगाः ॥ १८ ॥
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ।
सर्व्वकामप्रदास्ते हि सर्व्वकामफलप्रदाः ॥ १९ ॥
भूमिर्मणिमयी वायुः सुगन्धः सर्व्वदा सुखः ।
जायन्ते मानवास्तत्र देवलोकपरिच्युताः ॥ २० ॥

मिथुनानि प्रसूयन्ते समकालस्थितानि वै ।
अन्योन्यमनुरक्तानि चक्रवाकोपमानि च ॥ २१ ॥
चतुर्दशसहस्राणि तेषां सार्द्धानि वै स्थितिः ।
चन्द्रकान्तश्च शैलेन्द्रः सूर्य्यकान्तस्तथापरः ॥ २२ ॥
तस्मिन् कुलाचलौ वर्षे तन्मध्ये च महानदी ।
भद्रसोमा प्रयात्युर्व्वीं पुण्यामलजलौघिनी ॥ २३ ॥
सहस्रशस्तथैवान्या नद्यो वर्षेऽपि चोत्तरे ।
तथान्याः क्षीरवाहिन्यो घृतवाहिन्य एव च ॥ २४ ॥
दध्नो ह्रदास्तथा तत्र तथान्ये चानुपर्व्वताः ।
अमृतास्वादकल्पानि फलानि विविधानि च ॥ २५ ॥
वनेषु तेषु वर्षेषु शतशोऽथ सहस्रशः ।
तत्रापि भगवान् विष्णुः प्राक्शिरा मत्स्यरूपवान् ॥ २६ ॥
विभक्तो नवधा विप्र नक्षत्राणां त्रयं त्रयं ।
दिशस्तथापि नवधा विभक्ता मुनिसत्तम ॥ २७ ॥
चन्द्रद्वीपः समुद्रे च भद्रद्वीपस्तथापरः ।
तत्रापि पुण्यो विख्यातः समुद्रान्तर्महामुने ॥ २८ ॥
इत्येतत् कथितं ब्रह्मन् कुरुवर्षं मयोत्तरं ।
शृणु किंपुरुषादीनि वर्षाणि गदतो मम ॥ २९ ॥

इति श्रीमार्कण्डेयपुराणे उत्तरकुरुकथनं ॥ ५९ ॥

षष्टितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

यत्तु किम्पुरुषं वर्षं तत्प्रवक्ष्याम्यहं द्विज ।
यत्रायुर्दशसाहस्रं पुरुषाणां वपुष्मतां ॥ १ ॥
अनामया ह्यशोकाश्च नरा यत्र तथा स्त्रियः ।
प्लक्षः षण्डश्च तत्रोक्तः सुमहान्नन्दनोपमः ॥ २ ॥
तस्य ते वै फलरसं पिवन्तः पुरुषाः सदा ।
स्थिरयौवननिष्पन्ना स्त्रियश्चोत्पलगंधिकाः ॥ ३ ॥
अतः परं किंपुरुषाद्धरिवर्षं प्रचक्ष्यते ।
महारजतसङ्काशा जायन्ते तत्र मानवाः ॥ ४ ॥
देवलोकच्युताः सर्व्वे देवरूपाश्च सर्व्वशः ।
हरिवर्षे नराः सर्व्वे पिवन्तीक्षुरसं शुभं ॥ ५ ॥
न जरा बाधते तत्र न जीर्य्यन्ते च कर्हिचित् ।
तावन्तमेव ते कालं जीवन्त्यथ निरामयाः ॥ ६ ॥
मेरुवर्षं मया प्रोक्तं मध्यमं यदिलावृतं ।
न तत्र सूर्य्यस्तपति न ते जीर्य्यन्ति मानवाः ॥ ७ ॥
लभन्ते नात्मलाभञ्च रश्मयश्चन्द्रसूर्य्ययोः ।
नक्षत्राणां ग्रहाणाञ्च मेरोस्तत्र परा द्युतिः ॥ ८ ॥
पद्मप्रभाः पद्मगन्धाः जम्बूफलरसाशिनः ।
पद्मपत्रायताक्षास्तु जायन्ते तत्र मानवाः ॥ ९ ॥

वर्षाणान्तु सहस्राणि तत्राप्यायुस्त्रयोदश ।
मरावाकारसंस्थानो मेरुमध्ये इलावृते ॥ १० ॥
मेरुस्तत्र महाशैलस्तदाख्यातमिलावृतं ।
रम्यकं वर्षमस्मात्तु कथयिष्ये निबोध तं ॥ ११ ॥
वृक्षस्तत्रापि चोत्तुङ्गो न्यग्रोधो हरितच्छदः ।
तस्यापि ते फलरसं पिवन्तो वर्त्तयन्ति वै ॥ १२ ॥
वर्षायुतायुषस्तत्र नरास्तत्फलभोगिनः ।
रतिप्रधानविमला जरादौर्गन्ध्यवर्ज्जिताः ॥ १३ ॥
तस्मादथोत्तरं वर्षं नाम्ना ख्यातं हिरण्मयं ।
हिरण्वती नदी यत्र प्रभूतकमलोज्ज्वला ॥ १४ ॥
महाबलाः सतेजस्का जायन्ते तत्र मानवाः ।
महाकाया महासत्त्वा धनिनः प्रियदर्शनाः ॥ १५ ॥

इति श्रीमार्कण्डेयपुराणे भुवनकोषः समाप्तः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥



क्रौष्टुकिरुवाच ॥

कथितं भवता सम्यक् यत् पृष्टोऽसि महामुने ।
भूसमुद्रादिसंस्थानं प्रमाणानि तथा ग्रहाः ॥ १ ॥
तेषाञ्चैव प्रमाणञ्च नक्षत्राणाञ्च संस्थितिः ।
भूरादयस्तथा लोकाः पातालान्यखिलान्यपि ॥ २ ॥

स्वायम्भुवं तथा ख्यातं मुने मन्वन्तरं मम ।
तदन्तराण्यहं श्रोतुमिच्छे मन्वन्तराणि वै ॥
मन्वन्तराधिपान् देवान्दृषींस्तत्तनयान्नृपान् ॥ ३ ॥

मार्कण्डेय उवाच ॥

मन्वन्तरं मयाख्यातं तव स्वायम्भुवं च यत् ।
स्वरोचिषाख्यमन्यत्तु शृणु तस्मादनन्तरं ॥ ४ ॥
कश्चिद्द्विजातिप्रवरः पुरेऽभूदरुणास्पदे ।
वरुणायास्तटे विप्रो रूपेणात्यश्विनावपि ॥ ५ ॥
मृदुस्वभावः सद्वृत्तो वेदवेदाङ्गपारगः ।
सदातिथिप्रियो रात्रावागतानां समाश्रयः ॥ ६ ॥
तस्य बुद्धिरियं त्वासीदहं पश्ये वसुन्धरां ।
अतिरम्यवनोद्यानां नानानगरशोभितां ॥ ७ ॥
अथागतोऽथितिः कश्चित् कदाचित्तस्य वेश्मनि ।
नानौषधिप्रभावज्ञो मन्त्रविद्याविशारदः ॥ ८ ॥
अभ्यर्थितस्तु तेनासौ श्रद्धापूतेन चेतसा ।
तस्याचख्यौ स देशांश्च रम्याणि नगराणि च ॥ ९ ॥
वनानि नद्यः शैलांश्च पुण्यान्यायतनानि च ।
स ततो विस्मयाविष्टः प्राह तं द्विजसत्तमं ॥ १० ॥
अनेकदेशदर्शित्वेनातिश्रमसमन्वितः ।
त्वं नातिवृद्धो वयसा नातिवृत्तश्च यौवनात् ।
कथमल्पेन कालेन पृथिवीमटसि द्विज ॥ ११ ॥

ब्राह्मण उवाच ॥

मन्त्रौषधिप्रभावेन विप्राप्रतिहता गतिः ।
योजनानां सहस्रं हि दिनार्द्धेन व्रजाम्यहं ॥ १२ ॥

मार्कण्डेय उवाच ॥

ततः स विप्रस्तं भूयः प्रत्युवाचेदमादरात् ।
श्रद्धधानो वचस्तस्य ब्राह्मणस्य विपश्चितः ॥ १३ ॥
मम प्रसादं भगवन् कुरु मंत्रप्रभावजं ।
द्रष्टुमेतां मम महीमतीवेच्छा प्रवर्त्तते ॥ १४ ॥
प्रादात्स ब्राह्मणस्तस्मै पादलेपमुदारधीः ।
अभिमन्त्रयामास दिशं तेनाख्याताञ्च यत्नतः ॥ १५ ॥
तेनानुलिप्तपादोऽथ स द्विजो द्विजसत्तम ।
हिमवन्तमगाद्द्रष्टुं नानाप्रस्रवणान्वितं ॥ १६ ॥
सहस्रं योजनानां हि दिनार्द्धेन व्रजामि यत् ।
आयास्यामीति सञ्चिन्त्य तदर्द्धेनापरेण हि ॥ १७ ॥
संप्राप्तो हिमवत्पृष्ठं नातिश्रान्ततनुर्द्विज ।
विचचार ततस्तत्र तुहिनाचलभूतले ॥ १८ ॥
पादाक्रान्तेन तस्याथ तुहिनेन विलीयता ।
प्रक्षालितः पादलेपः परमौषधिसम्भवः ॥ १९ ॥
ततो जडगतिः सोऽथ इतश्चेतश्च पर्य्यटन् ।
ददर्शातिमनोज्ञानि सानूनि हिमभूभृतः ॥ २० ॥
सिद्धगन्धर्व्वजुष्टानि किन्नराभिरतानि च ।
क्रीडाविहाररम्याणि देवादीनामितस्ततः ॥ २१ ॥

दिव्याप्सरोगणशतैराकीर्णान्यवलोकयन् ।
नातृप्यत द्विजश्रेष्ठः प्रोद्भूतपुलको मुने ॥ २२ ॥
क्वचित् प्रस्रवणाकृष्टजलपातमनोरमं ।
प्रनृत्यच्छिखिकेकाभिरन्यतश्च निनादितं ॥ २३ ॥
दात्यूहकोयष्टिकाद्यैः क्वचिच्चातिमनोहरैः ।
पुंस्कोकिलकलालापैः श्रुतिहारिभिरन्वितं ॥ २४ ॥
प्रफुल्लतरुगन्धेन वासितानिलवीजितं ।
मुदा युक्तः स ददृशे हिमवन्तं महागिरिं ॥ २५ ॥
दृष्ट्वा चैतं द्विजसुतो हिमवन्तं महाचलं ।
श्वो द्रक्ष्यामीति संचिन्त्य मतिञ्चक्रे गृहं प्रति ॥ २६ ॥
विभ्रष्टपादलेपोऽथ चिरेण जडितक्रमः ।
चिन्तयामास किमिदं मयाज्ञानादनुष्ठितं ॥ २७ ॥
यदि प्रलेपो नष्टो मे विलीनो हिमवारिणा ।
शैलोऽतिदुर्गमश्चायं दूरञ्चाहमिहागतः ॥ २८ ॥
प्रयास्यामि क्रियाहानिमग्निशुश्रूषणादिकं ।
कथमच करिष्यामि सङ्कटं महदागतं ॥ २९ ॥
इदं रम्यमिदं रम्यमित्यस्मिन् वरपर्व्वते ।
सक्तदृष्टिरहं तृप्तिं न यास्येऽब्दशतैरपि ॥ ३० ॥
किन्नराणां कलालापाः समन्ताच्छ्रोत्रहारिणः ।
प्रफुल्लतरुगन्धांश्च घ्राणमत्यन्तमृच्छति ॥ ३१ ॥
सुखस्पर्शास्तथा वायुः फलानि रसवन्ति च ।
हरन्ति प्रसभं चेतो मनोज्ञानि सरांसि च ॥ ३२ ॥

एवं गते तु पश्येयं यदि कञ्चित् तपोनिधिं ।
स ममोपदिशेन्मार्गं गमनाय गृहं प्रति ॥ ३३ ॥

मार्कण्डेय उवाच ॥

स एवं चिन्तयन् विप्रो बभ्राम च हिमाचले ।
भ्रष्टपादौषधिबलो वैक्लवं परमं गतः ॥ ३४ ॥
तं ददर्श भ्रमन्तञ्च मुनिश्रेष्ठं वरूथिनी ।
वराप्सरा महाभागा मौलेया रूपशालिनी ॥ ३५ ॥
तस्मिन्दृष्टे ततः साभूद्विजवर्य्ये वरूथिनी ।
मदनाकृष्टहृदया सानुरागा हि तत्क्षणात् ॥ ३६ ॥
चिन्तयामास को न्वेष रमणीयतमाकृतिः ।
सफलं मे भवेज्जन्म यदि मां नावमन्यते ॥ ३७ ॥
अहोऽस्य रूपमाधुर्य्यमहोऽस्य ललिता गतिः ।
अहो गम्भीरता दृष्टेः कुतोऽस्य सदृशो भुवि ॥ ३८ ॥
दृष्टा देवास्तथा दैत्याः सिद्धगन्धर्व्वपन्नगाः ।
कथमेकोऽपि नास्त्यस्य तुल्यरूपो महात्मनः ॥ ३९ ॥
यथाहमस्मिन्नप्येष सानुरागस्तथा यदि ।
भवेद्व मया कार्य्यस्तत्कृतः पुण्यसञ्चयः ॥ ४० ॥
यद्येष मयि सुस्निग्धां दृष्टिमद्य निपातयेत् ।
कृतपुण्या न मत्तोऽन्या त्रैलोक्ये वनिता ततः ॥ ४१ ॥

मार्कण्डेय उवाच ॥

एवं सञ्चिन्तयन्ती सा दिव्ययोषित् स्मरातुरा ।
आत्मानं दर्शयामास कमनीयतराकृतिं ॥ ४२ ॥

तान्तु दृष्ट्वा द्विजसुतश्चारुरूपां वरूथिनीं ।
सोपचारं समागम्य वाक्यमेतदुवाच ह ॥ ४३ ॥
का त्वं कमलगर्भाभे कस्य किंवानुतिष्ठसि ।
ब्राह्मणोऽहमिहायातो नगरादरुणास्पदात् ॥ ४४ ॥
पादलेपोऽच मे ध्वस्तो विलीनो हिमवारिणा ।
यस्यानुभावादत्राहमागतो मदिरेक्षणे ॥ ४५ ॥

वरूथिन्युवाच ॥

मौलेयाहं महाभागा नाम्ना ख्याता वरूथिनी ।
विचरामि सदैवात्र रमणीये महाचले ॥ ४६ ॥
साहं त्वद्दर्शनाद्विप्र कामवक्तव्यताङ्गता ।
प्रशाधि यन्मया कार्य्यं त्वदधीनास्मि साम्प्रतं ॥ ४७ ॥

ब्राह्मण उवाच ॥

येनोपायेन गच्छेयं निजगेहं शुचिस्मिते ।
तन्ममाचक्ष्व कल्याणि हानिर्नोऽखिलकर्म्मणां ॥ ४८ ॥
नित्यनैमित्तिकानान्तु महाहानिर्द्विजन्मनः ।
भवत्यतस्त्वं हे भद्रे मामुद्धर हिमालयात् ॥ ४९ ॥
प्रशस्यते न प्रवासो ब्राह्मणानां कदाचन ।
अपराद्धं न मे भीरु देशदर्शनकौतुकं ॥ ५० ॥
सतो गृहे द्विजाग्रस्य निष्पत्तिः सर्व्वकर्म्मणां ।
नित्यनैमित्तिकानाञ्च हानिरेवं प्रवासिनः ॥ ५१ ॥
सा त्वं किं बहुनोक्तेन तथा कुरु यशस्विनि ।
यथा नास्तं गते सूर्य्ये पश्यामि निजमालयं ॥ ५२ ॥

वरूथिन्युवाच ॥

एवं ब्रूहि महाभाग माभूत्स दिवसो मम ।
मां परित्यज्य यत्र त्वं निजगेहमुपैष्यसि ॥ ५३ ॥
अहो रम्यतरः स्वर्गो न यतो द्विजनन्दन ।
अतो वयं परित्यज्य तिष्ठामोऽत्र सुरालयं ॥ ५४ ॥
स त्वं सह मया कान्त कान्तेऽत्र तुहिनाचले ।
रममाणो न मर्त्यानां बान्धवानां स्मरिष्यसि ॥ ५५ ॥
स्रजो वस्त्राण्यलङ्कारान् भोज्यभोज्यानुलेपनं ।
दास्याम्यत्र तथाहन्ते स्मरेण वशगा हृता ॥ ५६ ॥
वीणावेणुस्वनं गीतं किन्नराणां मनोरमं ।
अङ्गाह्लादकरो वायुरुष्णान्नमुदकं शुचि ॥ ५७ ॥
मनोभिलषिता शय्या सुगन्धमनुलेपनं ।
इहासतो महाभाग गृहे किन्ते निजेऽधिकं ॥ ५८ ॥
इहासतो नैव जरा कदाचित्ते भविष्यति ।
त्रिदशानामियं भूमिर्यौवनोपचयप्रदा ॥ ५९ ॥
इत्युक्त्वा सानुरागा सा सहसा कमलेक्षणा ।
आलिलिङ्ग प्रसीदेति वदन्ती कलमुन्मनाः ॥ ६० ॥

ब्राह्मण उवाच ॥

मा मां स्प्राक्षीर्व्रजान्यत्र दुष्टे यः सदृशस्तव ।
मयान्यथा याचिता त्वमन्यथैवाप्युपैषि मां ॥ ६१ ॥
सायं प्रातर्हुतं हव्यं लोकान् यच्छति शाश्वतान् ।
त्रैलोक्यमेतदखिलं मूढे हव्ये प्रतिष्ठितं ॥ ६२ ॥

वरूथिन्युवाच ॥

किन्ते नाहं प्रिया विप्र रमणीयो न किं गिरिः ।
गन्धर्व्वान् किन्नरांदींश्च त्यक्त्वाभीष्टो हि कस्तव ॥ ६३ ॥
निजमालयमप्यस्माद्भवान् यास्यत्यसंशयं ।
स्वल्पकालं मया सार्द्धं भुङ्क्ष्व भोगान् सुदुर्लभान् ॥ ६४ ॥

ब्राह्मण उवाच ॥

अभीष्टा गार्हपत्याद्याः सततं मे चयोऽग्नयः ।
रम्यं ममाग्निशरणं देवी विस्तरणी प्रिया ॥ ६५ ॥

वरूथिन्युवाच ॥

अष्टावात्मगुणा ये हि तेषामादौ दया द्विज ।
तां करोषि कथं न त्वं मयि सद्धर्म्मपालक ॥ ६६ ॥
त्वद्विमुक्ता न जीवामि तथा प्रीतिमती त्वयि ।
नैतद्वदाम्यहं मिथ्या प्रसीद कुलनन्दन ॥ ६७ ॥

ब्राह्मण उवाच ॥

यदि प्रीतिमती सत्यं नोपचाराद्ब्रवीषि मां ।
तदुपायं समाचक्ष्व येन यामि स्वमालयं ॥ ६८ ॥

वरूथिन्युवाच ॥

निजमालयमप्यस्माद्भवान् यास्यत्यसंशयं ।
स्वल्पकालं मया सार्द्धं भुङ्क्ष्व भोगान् सुदुर्लभान् ॥ ६९ ॥

ब्राह्मण उवाच ॥

न भोगार्थाय विप्राणां शस्यते हि वरूथिनी ।
इह क्लेशाय विप्राणां चेष्टा प्रेत्याफलप्रदा ॥ ७० ॥

वरूथिन्युवाच ॥

सन्त्राणं म्रियमाणाया मम कृत्वा परत्र ते ।
पुण्यस्यैव फलं भावि भोगाश्चान्यत्र जन्मनि ॥ ७१ ॥
एवं च द्वयमप्यत्र तवोपचयकारणं ।
प्रत्याख्यानादहं मृत्युं त्वञ्च पापमवाप्स्यसि ॥ ७२ ॥

ब्राह्मण उवाच ॥

परस्त्रियं नाभिलषेदित्यूचुर्गुरवो मम ।
तेन त्वां नाभिवाञ्छामि कामं विलप शुष्य वा ॥ ७३ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा स महाभागः स्पृष्ट्वापः प्रयतः शुचिः ।
प्राहेदं प्रणिपत्याग्निं गार्हपत्यमुपांशुना ॥ ७४ ॥
भगवन् गार्हपत्याग्ने योनिस्त्वं सर्व्वकर्म्मणां ।
त्वत्त आहवनीयोऽग्निर्दक्षिणाग्निश्च नान्यतः ॥ ७५ ॥
युष्मदाप्यायनाद्देवा वृष्टिसस्यादिहेतवः ।
भवन्ति सस्यादखिलं जगद्भवति नान्यतः ॥ ७६ ॥
एवं त्वत्तो भवत्येतद्येन सत्येन वै जगत् ।
तथाहमद्य स्वं गेहं पश्येयं सति भास्करे ॥ ७७ ॥
यथा वै वैदिकं कर्म्म स्वकाले नोज्झितं मया ।
तेन सत्येन पश्येयं गृहस्थोऽद्य दिवाकरं ॥ ७८ ॥
यथा च न परद्रव्ये परदारे च मे मतिः ।
कदाचित् साभिलाषाभूत्तथैतत् सिद्धिमेतु मे ॥ ७९ ॥

इति श्रीमार्कण्डेयपुराणे स्वारोचिषे मन्वन्तरे ब्राह्मणवाक्यं ॥ ६१ ॥

द्विषष्टितमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

एवन्तु वदतस्तस्य द्विजपुत्रस्य पावकः ।
गार्हपत्यः शरीरे तु सन्निधानमथाकरोत् ॥ १ ॥
तेन चाधिष्ठितः सोऽथ प्रभामण्डलमध्यगः ।
व्यदीपयत तं देशं मूर्त्तिमानिव हव्यवाट् ॥ २ ॥
तस्यास्तु सुतरां तत्र तादृग्रूपे द्विजन्मनि ।
अनुरागोऽभवद्विप्रं पश्यन्त्या देवयोषितः ॥ ३ ॥
ततः सोऽधिष्ठितस्तेन हव्यवाहेन तत्क्षणात् ।
यथा पूर्व्वं तथा गन्तुं प्रवृत्तो द्विजनन्दनः ॥ ४ ॥
जगाम च त्वरायुक्तस्तया देव्या निरीक्षितः ।
आदृष्टिपातात्तन्वङ्ग्या निश्वासोत्कम्पिकन्धरं ॥ ५ ॥
ततः क्षणेनैव तदा निजगेहमवाप्य सः ।
यथा प्रोक्तं द्विजश्रेष्ठश्चकार सकलाः क्रियाः ॥ ६ ॥
अथ सा चारुसर्व्वाङ्गी तत्रासक्तात्ममानसा ।
निश्वासपरमा निन्ये दिनशेषं तथा निशां ॥ ७ ॥
निश्वसन्त्यनवद्याङ्गी हाहेति रुदती मुहुः ।
मन्दभाग्येति चात्मानं निनिन्द मदिरेक्षणा ॥ ८ ॥
न विहारे न चाहारे रमणीये न वा वने ।
न कन्दरेषु रम्येषु सा बबन्ध तदा रतिं ॥ ९ ॥

चकार रममाणे च चक्रवाकयुगे स्पृहां ।
मुक्ता तेन वरारोहा निनिन्द निजयौवनं ॥ १० ॥
क्वागताहमिमं शैलं दुष्टदैवबलात्कृता ।
क्व च प्राप्तः स मे दृष्टिगोचरं तादृशो नरः ॥ ११ ॥
यद्यद्य स महाभागो न मे सङ्गमुपैष्यति ।
तत्कामाग्निरवश्यं मां क्षययिष्यति दुःसहः ॥ १२ ॥
रमणीयमभूद्यत्तत्पुंस्कोकिलनिनादितं ।
तेन हीनन्तदेवैतदहहतीवाद्य मामलं ॥ १३ ॥

मार्कण्डेय उवाच ॥

इत्थं सा मदनाविष्टा जगाम मुनिसत्तमं ।
ववृधे च तदा रागस्तस्यास्तस्मिन् प्रतिक्षणं ॥ १४ ॥
कलिर्नाम्ना तु गन्धर्व्वः सानुरागो निराकृतः ।
तया पूर्व्वमभूत्सोऽथ तदवस्थां ददर्श तां ॥ १५ ॥
स चिन्तयामास तदा किं न्वेषा गजगामिनी ।
निश्वासपवनम्लाना गिरावत्र वरूथिनी ॥ १६ ॥
मुनिशापक्षता किंनु केनचित् किं विमानिता ।
वाष्पवारिपरिक्लिन्नमियन्धत्ते यता मुखं ॥ १७ ॥
ततः स दध्यौ सुचिरं तमर्थं कौतुकात् कलिः ।
ज्ञातवांश्च प्रभावेन समाधेः स यथातथं ॥ १८ ॥
पुनः स चिन्तयामास तद्विज्ञाय मुनेः कलिः ।
ममोपपादितं साधु भाग्यैरेतत्पुराकृतैः ॥ १९ ॥
मयैषा सानुरागेन बहुशः प्रार्थिता सती ।

निराकृतवती सेयमद्य प्राप्या भविष्यति ॥ २० ॥
मानुषे मानुरागेयं तव तद्रूपधारिणि ।
रंस्यते मय्यसन्दिग्धं किं कालेन करोमि तत् ॥ २१ ॥

मार्कण्डेय उवाच ॥

आत्मप्रभावेन ततस्तस्य रूपं द्विजन्मनः ।
कृत्वा चचार यत्रास्ते निषण्णा सा वरूथिनी ॥ २२ ॥
सा तं दृष्ट्वा वरारोहा किञ्चिदुत्फुल्ललोचना ।
समेत्य प्राह तन्वङ्गी प्रसीदेति पुनः पुनः ॥ २३ ॥
त्वया त्यक्ता न सन्देहः परित्यक्ष्यामि जीवितं ।
तवाधर्म्मः कष्टतरः क्रियालोपो भविष्यति ॥ २४ ॥
मया समेत्य रम्येऽस्मिन् महाकन्दरकन्दरे ।
मत्परित्राणजं धर्म्ममवश्यं प्रतिपत्स्यसे ॥ २५ ॥
आयुषः सावशेषं मे नूनमस्ति महामते ।
निवृत्तस्तेन नूनं त्वं हृदयाह्लादकारकः ॥ २६ ॥

कलिरुवाच ॥

किं करोमि क्रियाहानिर्भवत्यत्र सतो मम ।
त्वमप्येवंविधं वाक्यं ब्रवीषि तनुमध्यमे ॥ २७ ॥
तदहं सङ्कटं प्राप्तो यद्ब्रवीमि करोषि तत् ।
यदि स्यात् सङ्गमो मेऽद्य भवत्या सह नान्यथा ॥ २८ ॥

वरूथिनी उवाच ॥

प्रसीद यद्ब्रवीषि त्वं तत्करोमि न ते मृषा ।
ब्रवीम्येतदनाशङ्कं यत्ते कार्य्यं मयाधुना ॥ २९ ॥

कलिरुवाच ॥

ाद्य संभोगसमये द्रष्टव्योऽहं त्वया वने ।
नमीलिताच्याः संसर्गस्तव सुभ्रु मया सह ॥ ३० ॥

वरूथिन्युवाच ॥

वं भवतु भद्रन्ते यथेच्छसि तथास्तु तत् ।
ाया सर्व्वप्रकारं हि वशे स्थेयन्तवाधुना ॥ ३१ ॥

इति श्रीमार्कण्डेयपुराणे स्वारोचिषे मन्वन्तरे ॥ ६२ ॥



त्रिषष्टितमोऽध्यायः ।

मार्कण्डेय उवाच ॥

ततः सह तया सोऽथ रराम गिरिसानुषु ।
फुल्लकाननहृद्येषु मनोज्ञेषु सरःसु च ॥ १ ॥
कन्दरेषु च रम्येषु निम्नगापुलिनेषु च ।
मनोज्ञेषु तथान्येषु देशेषु मुदितो द्विज ॥ २ ॥
वह्निनाधिष्ठितस्यासीद्यद्रूपन्तस्य तेजसा ।
अचिन्तयद्भोगकाले निर्मीलितविलोचना ॥ ३ ॥
ततः कालेन सा गर्भ्भमवाप मुनिसत्तम ।
गन्धर्व्ववीर्य्यतो रूपं चिन्तनाच्च द्विजन्मनः ॥ ४ ॥
तां गर्भधारिणीं सोऽथ सान्त्वयित्वा वरूथिनीं ।
विप्ररूपधरो यातस्तया प्रीत्या विसर्ज्जितः ॥ ५ ॥

जज्ञे स बालो द्युतिमान् ज्वलन्निव विभावसुः ।
स्वरोचिभिर्यथा सूर्य्यो भासयन् सकला दिशः ॥ ६ ॥
स्वरोचिभिर्यतो भाति भास्वानिव स बालकः ।
ततः स्वरोचिरित्येवं नाम्ना ख्यातो बभूव सः ॥ ७ ॥
वदृधे च महाभागो वयसानुदिनन्तथा ।
गुणौघैश्च यथा बालः कलाभिः शशलाञ्छनः ॥ ८ ॥
स जग्राह धनुर्व्वेदं वेदांश्चैव यथाक्रमं ।
विद्याश्चैव महाभागस्तदा यौवनगोचरः ॥ ९ ॥
मन्दराद्रौ कदाचित् स विचरंश्चारुचेष्टितः ।
ददर्शैकां तदा कन्यां गिरिप्रस्थे भयातुरां ॥ १० ॥
त्रायस्वेति निरीच्यैनं सा तदा वाक्यमब्रवीत् ।
माभैषीरिति स प्राह भयविप्लुतलोचनां ॥ ११ ॥
किमेतदिति तेनोक्ते वीरवाक्ये महात्मना ।
ततः सा कथयामास श्वासाक्षेपप्लुताक्षरं ॥ १२ ॥

कन्योवाच ॥

अहमिन्दीवराख्यस्य सुता विद्याधरस्य वै ।
नाम्ना मनोरमा जाता सुतायां मरुधन्वनः ॥ १३ ॥
मन्दारविद्याधरजा सखी मम विभावरी ।
कलावती चाप्यपरा सुता पारस्य वै मुनेः ॥ १४ ॥
ताभ्यां सह मया यातं कैलासतटमुत्तमं ।
तत्र दृष्टो मुनिः कश्चित्तपसातिकृशाकृतिः ॥ १५ ॥
क्षुत्क्षामकण्ठो निस्तेजा दूरपाताक्षितारकः ।

ावहसितः क्रुद्धः स तदा मां शशाप ह ॥ १६ ॥
मक्षामस्वरः किञ्चित्कम्पिताधरपल्लवः ।
ावहसितो यस्मादनार्य्ये दुष्टतापसि ॥ १७ ॥
मात् त्वामचिरेणैव राक्षसोऽभिभविष्यति ।
ते शापे मत्सखीभ्यां स तु निर्भर्त्सितो मुनिः ॥ १८ ॥
क् ते ब्राह्मण्यमक्षान्त्या कृतन्ते निखिलन्तपः ।
मर्षेणैर्धर्षितोऽसि तपसा नातिकर्षितः ॥ १९ ॥
ान्त्यास्पदं वै ब्राह्मण्यं क्रोधसंयमनन्तपः ।
तच्छ्रुत्वा ददौ शापं तयोरप्यमितद्युतिः ॥ २० ॥
कस्याः कुष्ठमङ्गेषु भाव्यन्यस्यास्तथा क्षयः ।
योस्तथैव तज्जातं यथोक्तं तेन तत्क्षणात् ॥ २१ ॥
ामाप्येवं महद्रक्षः समुपैति पदानुगं ।
ा शृणोषि महानादं तस्यादूरेपि गर्ज्जतः ॥ २२ ॥
तृतीयमद्य दिवसं यन्मे पृष्ठन्न मुञ्चति ।
अस्त्रग्रामस्य सर्व्वस्य हृदयग्राहमद्य ते ॥ २३ ॥
ं प्रयच्छामि मां रक्ष रक्षसोऽस्मान्महामते ।
प्रादात् स्वायम्भुवस्यादौ स्वयं रुद्रः पिनाकधृक् ॥ २४ ॥
स्वायम्भुवो वशिष्ठाय सिद्धवर्य्याय दत्तवान् ।
तेनापि दत्तं मन्मातुः पित्रे चित्रायुधाय वै ॥ २५ ॥
प्रादादौद्वाहिकं सोऽपि मत्पित्रे श्वशुरः स्वयं ।
मयापि शिक्षितं वीर.सकाशाद्वाल्मया पितुः ॥ २६ ॥
हृदयं सकलास्त्राणामशेषरिपुनाशनं ।

तदिदं गृह्यतां शीघ्रमशेषास्त्रपरायणं ॥ २७ ॥
ततो जहि दुरात्मानमेनं ब्रह्मसमागतं ॥ २८ ॥

मार्कण्डेय उवाच ॥

तथेत्युक्ते ततस्तेन वार्य्युपस्पृश्य तस्य तत् ।
अस्त्राणां हृदयं प्रादात् सरहस्यनिवर्त्तनं ॥ २९ ॥
एतस्मिन्नन्तरे रक्षस्तत्तदा भीषणाकृतिः ।
नर्द्दमानो महानादमाजगाम त्वरान्वितः ॥ ३० ॥
मयाभिभूता किं त्राणमुपैषि द्रुतमेहि मे ।
भक्षाय किञ्चिरेणेति ब्रुवाणं तं ददर्श सः ॥ ३१ ॥
स्वरोचिश्चिन्तयामास दृष्ट्वा तं समुपागतं ।
गृह्णात्वेष वचः सत्यं तस्यास्त्विति महामुनेः ॥ ३२ ॥
जग्राह समुपेत्यैनां त्वरया सोऽपि राक्षसः ।
चाहि चाहीति करुणं विलपन्तीं सुमध्यमां ॥ ३३ ॥
ततः स्वरोचिः संक्रुद्धश्चण्डास्त्रमतिभैरवं ।
दृष्ट्वा निवेश्य तद्रक्षो ददर्शानिमिषेक्षणः ॥ ३४ ॥
तदाभिभूतः स तदा तामुत्सृज्य निशाचरः ।
प्रसीद शाम्यतामस्त्रं श्रूयताञ्चेत्यभाषत ॥ ३५ ॥
मोक्षितोऽहं त्वया शापादतिघोरान्महायुते ।
प्रदत्तादतितीव्रेण ब्रह्ममित्रेण धीमता ॥ ३६ ॥
उपकारो न मे कृत्तो महाभागाधिकोऽपरः ।
येनाहं समहाकष्टान्महाशापाद्विमोचितः ॥ ३७ ॥

सरोचिरुवाच ॥

ब्रह्ममित्रेण मुनिना किन्निमित्तं महात्मना ।
शप्तस्त्वं कीदृशश्चैव शापो दत्तोऽभवत्पुरा ॥ ३८ ॥

राक्षस उवाच ॥

ब्रह्ममित्रोऽष्टधा छिन्नमायुर्व्वेदमधीतवान् ।
त्रयोदशाधिकारञ्च प्रष्टह्याथर्व्वणो द्विजः ॥ ३९ ॥
अहञ्चेन्दीवराख्येति ख्यातोऽस्या जनकोऽभवं ।
विद्याधरपतेः पुत्रो नलनाभस्य खड्गिनः ॥ ४० ॥
मया च याचितः पूर्व्वं ब्रह्ममित्रोऽभवन्मुनिः ।
आयुर्व्वेदमशेषं मे भगवान् दातुमर्हसि ॥ ४१ ॥
यदा तु बहुशो वीर प्रश्रयावनतस्य मे ।
न प्रादाद्याचितो विद्यामायुर्व्वेदात्मिकां मम ॥ ४२ ॥
शिष्येभ्यो ददतस्तस्य मयान्तर्धायगेन हि ।
आयुर्व्वेदात्मिका विद्या गृहीताभूत्तदानघ ॥ ४३ ॥
गृहीतायान्तु विद्यायां मासैरष्टाभिरन्तरात् ।
ममातिहर्षादभवद्धासोऽतीव पुनः पुनः ॥ ४४ ॥
प्रत्यभिज्ञाय मां हासान्मुनिः कोपसमन्वितः ।
विकम्पितकन्धरः प्राह मामिदं परुषाक्षरं ॥ ४५ ॥
राक्षसेनैव यस्मान्मे त्वयाऽदृश्येन दुर्म्मते ।
हृता विद्यावहासश्च मामवज्ञाय वै कृतः ॥ ४६ ॥
तस्मात्त्वं राक्षसः पाप मच्छापेन निराकृतः ।
भविष्यसि न सन्देहः सप्तरात्रेण दारुणः ॥ ४७ ॥

इत्युक्ते प्रणिपाताद्यैरुपचारैः प्रसादितः ।
स मामाह पुनर्विप्रस्तत्क्षणान्मृदुमानसः ॥ ४८ ॥
यन्मयोक्तमवश्यन्तद्भावि गन्धर्व्व नान्यथा ।
किन्तु त्वं राक्षसो भूत्वा पुनः स्वं प्राप्स्यसे वपुः ॥ ४९ ॥
नष्टस्मृतिर्यदा क्रुद्धः स्वमपत्यञ्चिखादिषुः ।
निशाचरत्वं गन्तासि तदस्त्रानलतापितः ॥ ५० ॥
पुनः संज्ञामवाप्य स्वामवाप्स्यसि निजं वपुः ।
तथैव स्वमधिष्ठानं लोके गन्धर्व्वसंज्ञिते ॥ ५१ ॥
सोऽहं त्वया महाभाग मोक्षितोऽस्मान्महाभयात् ।
निशाचरत्वाद्यद्वीर तेन मे प्रार्थनां कुरु ॥ ५२ ॥
इमान्ते तनयां भार्य्यां प्रयच्छामि प्रतीच्छ तां ।
आयुर्व्वेदश्च सकलस्त्वष्टाङ्गो यो मया ततः ॥
मुनेः सकाशात् संप्राप्तस्तं गृह्णीष्व महामते ॥ ५३ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा प्रददौ विद्यां स च दिव्याम्बरोज्ज्वलः ।
स्रग्भूषणधरो दिव्यं पुराणं वपुरास्थितः ॥ ५४ ॥
दत्वा विद्यां ततः कन्यां स दातुमुपचक्रमे ।
तमाह सा तदा कन्या जनितारं स्वरूपिणं ॥ ५५ ॥
अनुरागो मयाऽप्यत्र तातातीव महात्मनि ।
दर्शनादेव संजातो विशेषेणोपकारिणि ॥ ५६ ॥
किन्त्वेषा मे सखी सा च मत्कृते दुःखपीडिते ।
अतो नाभिलषे भोगान् भोक्तुमेतेन वै समं ॥ ५७ ॥

पुरुषैरपि नो शक्या कर्त्तुमित्थं न्वशंसता ।
स्वभावरुचिरैर्माद्दृक् कथं योषित् करिष्यति ॥ ५८ ॥
माहं यथा ते दुःखार्त्तो मत्कृते कन्यके पितः ।
तथा स्थास्यामि तद्दुःखे तच्छोकानलतापिता ॥ ५९ ॥

स्वरोचिरुवाच॥

आयुर्व्वेदप्रसादेन ते करिष्ये पुनर्नवे ।
सख्यौ तव महाशोकं समुत्सृज्य सुमध्यमे ॥ ६० ॥

मार्कण्डेय उवाच ॥

ततः पित्रा स्वयं दत्तां तां कन्यां स विधानतः ।
उपयेमे गिरौ तस्मिन् स्वरोचिश्चारुलोचनां ॥ ६१ ॥
दत्त्वात्तु तां तदा कन्यामभिशाम्य च भाविनीं ।
जगाम दिव्यया गत्या गन्धर्व्वः स्वपुरन्ततः ॥ ६२ ॥
स चापि सहितस्तन्व्या तदुद्यानन्तदा ययौ ।
कन्यकायुगलं यत्र तच्छापात्त्वगदातुरं ॥ ६३ ॥
ततस्तयोः स तत्त्वज्ञो रोगघ्नैरौषधैरसैः ।
चकार नीरुजे देहे स्वरोचिरपराजितः ॥ ६४ ॥
ततोऽतिशोभने कन्ये विमुक्ते व्याधितः शुभे ।
स्वकान्त्योद्द्योतितदिग्भागं चक्राते तन्महीधरं ॥ ६५ ॥

इति श्रीमार्कण्डेयपुराणे स्वारोचिषे मन्वन्तरे ॥ ६३ ॥



मार्कण्डेय उवाच ॥

एवं विमुक्तरोगा तु कन्यका तं मुदान्विता ।
स्वरोचिषमुवाचेद शृणुष्व वचनं प्रभो ॥ १ ॥
मन्दारविद्याधरजा नाम्ना ख्याता विभावरी ।
उपकारिन् स्वमात्मानं प्रयच्छामि प्रतीच्छ मां ॥ २ ॥
विद्याञ्च तुभ्यं दास्यामि सर्व्वभूतरुतानि ते ।
ययाभिव्यक्तिमेष्यन्ति प्रसादपरगो भव ॥ ३ ॥

मार्कण्डेय उवाच ॥

एवमस्त्विति तेनोक्ते धर्म्मज्ञेन स्वरोचिषा ।
द्वितीया तु तदा कन्या इदं वचनमब्रवीत् ॥ ४ ॥
कुमारब्रह्मचार्य्यासीत् पारो नाम पिता मम ।
ब्रह्मर्षिः सुमहाभागो वेदवेदाङ्गपारगः ॥ ५ ॥
तस्य पुंस्कोकिलालापरमणीये मधौ पुरा ।
आजगामाप्सराभ्यासं प्रख्याता पुञ्जिकास्तना ॥ ६ ॥
कामवक्तव्यतां नीतः स तदा मुनिपुङ्गवः ।
तत्संयोगेऽहमुत्पन्ना तस्यामत्र महाचले ॥ ७ ॥
विहाय मां गता सा च मातास्मिन्निर्जने वने ।
बालामेकां महीपृष्ठे व्यालश्वापदसंकुले ॥ ८ ॥
ततः कलाभिः सोमस्य वर्द्धन्तीभिरवक्षयं ।
आप्यायमानाहरहो वृद्धिं यातास्मि सत्तम ॥ ९ ॥

ततः कलावतीत्येतन्मम नाम महात्मना ।
गृहीतायाः कृतं पित्रा गन्धर्व्वेण सुभानना ॥ १० ॥
न दत्ताहं तदा तेन याचितेन महात्मना ।
देवारिणालिना सम्प्रस्ततो मे घातितः पिता ॥ ११ ॥
ततोऽहमतिनिर्व्वेदादात्मव्यापादनोद्यता ।
निवारिता शम्भुपत्न्या सत्या सत्यप्रतिश्रवा ॥ १२ ॥
माशुचः सुभ्रु भर्त्ता ते महाभागो भविष्यति ।
स्वरोचिर्नाम पुत्रश्च मनुस्तस्य भविष्यति ॥ १३ ॥
आज्ञाश्च निधयः सर्व्वे करिष्यन्ति तवादृताः ।
यथाभिलषितं वित्तं प्रदास्यन्ति च ते शुभे ॥ १४ ॥
यस्या वत्से प्रभावेन विद्यायास्तां गृहाण मे ।
पद्मिनी नाम विद्येयं महापद्माभिपूजिता ॥ १५ ॥
इत्याह मां दक्षसुता सती सत्यपरायणा ।
स्वरोचिस्त्वं ध्रुवं देवी नान्यथा सा वदिष्यति ॥ १६ ॥
साहं प्राणप्रदायाद्य तां विद्यां स्वं तथा वपुः ।
प्रयच्छामि प्रतीच्छ त्वं प्रसादसुमुखो मम ॥ १७ ॥

मार्कण्डेय उवाच ॥

एवमस्त्विति तामाह स तु कन्यां कलावतीं ।
विभावर्य्याः कलावत्याः स्निग्धदृष्ट्यानुमोदितः ॥ १८ ॥
जग्राह च ततः पाणी स तयोरमरद्युतिः ।
नदत्सु देवतूर्य्येषु नृत्यत्स्वप्सरःसु च ॥ १९ ॥

इति श्रीमार्कण्डेयपुराणे स्वारोचिषे मन्वन्तरे ॥ ६४ ॥

पञ्चषष्टितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

ततः स ताभिः सहितः पत्नीभिरमरद्युतिः ।
रराम तस्मिन् शैलेन्द्रे रम्यकाननिर्झरे ॥ १ ॥
सर्व्वोपभोगरत्नानि मधूनि मधुराणि च ।
निधयः समुपाजह्रुः पद्मिन्या वशवर्त्तिनः ॥ २ ॥
स्रजो वस्त्राण्यलङ्कारान् गन्धाढ्यमनुलेपनं ।
आसनान्यतिशुभ्राणि काञ्चनानि यथेच्छया ॥ ३ ॥
सौवर्णानि महाभाग करकान् भाजनानि च ।
तथा शय्याश्च विविधा दिव्यैरास्तरणैर्युताः ॥ ४ ॥
एवं स ताभिः सहितो दिव्यगन्धादिवासिते ।
रराम स्वरुचिर्भाभिर्भासिते वरपर्व्वते ॥ ५ ॥
ताश्चापि सह तेनेति लेभिरे मुदमुत्तमां ।
रममाणा यथा स्वर्गे तथा तत्र शिलोच्चये ॥ ६ ॥
कलहंसी जगादैकां चक्रवाकीं जले सतीं ।
तस्य तासाञ्च ललिते सम्बन्धे च स्पृहावती ॥ ७ ॥
धन्योऽयमतिपुण्योऽयं योऽयं यौवनगोचरः ।
दयिताभिः सहैताभिर्भुङ्क्ते भोगानभीप्सितान् ॥ ८ ॥
सन्ति यौवनिनः श्लाघ्यास्तत्पत्न्यो नातिशोभनाः ।
जगत्यामल्पकाः पत्न्यः पतयश्चातिशोभनाः ॥ ९ ॥

अभीष्टाः कस्यचित् कान्ता कान्तः कस्याश्चिदीप्सितः ।
परस्परानुरागाढ्यं दाम्पत्यमतिदुर्लभं ॥ १० ॥
धन्योऽयं दयिताभीष्टो ह्येताश्चास्यातिवल्लभाः ।
परस्परानुरागो हि धन्यानामेव जायते ॥ ११ ॥
एतन्निशम्य वचनं कलहंसीसमीरितं ।
उवाच चक्रवाकी तां नातिविस्मितमानसा ॥ १२ ॥
नायं धन्यो यतो लज्जा नान्यस्त्रीसन्निकर्षतः ।
अन्यां स्त्रियमयं भुंक्ते न सर्व्वास्वस्य मानसं ॥ १३ ॥
चित्तानुराग एकस्मिन्नधिष्ठाने यतः सखि ।
ततो हि प्रीतिमानेष भार्य्यासु भविता कथं ॥ १४ ॥
एता न दयिताः पत्युर्नैतासां दयितः पतिः ।
विनोदमात्रमेवैता यथा परिजनोऽपरः ॥ १५ ॥
एतासाञ्च यदीष्टोऽयं तत् किं प्राणान्न मुञ्चति ।
आलिङ्गत्यपरां कान्तां ध्यातो वै कान्तयान्यया ॥ १६ ॥
विद्याप्रदानमूल्येन विक्रीतो ह्येष भृत्यवत् ।
प्रवर्त्ततो न हि प्रेम समं बह्वीषु तिष्ठति ॥ १७ ॥
कलहंसि पतिर्धन्यो मम धन्याहमेव च ।
यस्यैकस्याश्चिरं चित्तं यस्याश्चैकत्र संस्थितं ॥ १८ ॥

मार्कण्डेय उवाच ॥

सर्व्वसत्त्वरुतज्ञोऽसौ स्वरोचिरपराजितः ।
निशम्य लज्जितो दध्यौ सत्यमेव हि नानृतं ॥ १९ ॥
ततो वर्षशते याते रममाणो महागिरौ ।

रममाणः समन्ताभिर्ददर्श पुरतो मृगं ॥ २० ॥
सुस्निग्धपीनावयवं मृगीयूथविहारिणं ।
वासिताभिः स्वरूपाभिर्मृगीभिः परिवारितं ॥ २१ ॥
आकृष्टघ्राणपुटका जिघ्रन्तीस्तास्ततो मृगीः ।
उवाच स मृगो रामा लज्जात्यागेन गम्यतां ॥ २२ ॥
नाहं स्वरोचिस्तच्छीलो न चैवाहं सुलोचनाः ।
निर्लज्जा बहवः सन्ति तादृशास्तत्र गच्छत ॥ २३ ॥
एकात्वनेकानुगता यथा हासास्पदं जने ।
अनेकाभिस्तथैवैको भोगदृष्ट्या निरीक्षितः ॥ २४ ॥
तस्य धर्म्मक्रियाहानिरहन्यहनि जायते ।
सक्तोऽन्यभार्य्यया चान्यकामासक्तः सदैव सः ॥ २५ ॥
यस्तादृशोऽन्यस्तच्छीलः परलोकपराङ्मुखः ।
तं कामयत भद्रं वो नाहं तुल्यः स्वरोचिषा ॥ २६ ॥

इति श्रीमार्कण्डेयपुराणे स्वारोचिषे मन्वन्तरे ॥ ६५ ॥

षट्षष्टितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

एवं निरस्यमानास्ता हरिणेन मृगाङ्गनाः ।
श्रुत्वा स्वरोचिरात्मानं मेने स पतितं यथा ॥ १ ॥
त्यागे चकार च मनः स तासां मुनिसत्तम ।
चक्रवाकीमृगप्रोक्तो मृगचर्य्याजुगुप्सितः ॥ २ ॥

समेत्य ताभिर्भूयश्च वर्द्धमानमनोभवः ।
आक्षिप्तनिर्व्वेदकथो रेमे वर्षशतानि षट् ॥ ३ ॥
किन्तु धर्म्माविरोधेन कुर्व्वन् धर्म्माश्रिताः क्रियाः ।
भुंक्ते स्वरोचिर्विषयान् सह ताभिरुदारधीः ॥ ४ ॥
ततश्च जज्ञिरे तस्य त्रयः पुत्त्राः स्वरोचिषः ।
विजयो मेरुनन्दश्च प्रभावश्च महाबलः ॥ ५ ॥
मनोरमा च विजयं प्रासूतेन्दीवरात्मजा ।
विभावरी मेरुनन्दं प्रभावञ्च कलावती ॥ ६ ॥
पद्मिनी नाम या विद्या सर्व्वभोगोपपादिका ।
स तेषां तत्प्रभावेन पिता चक्रे पुरत्रयं ॥ ७ ॥
प्राच्यान्तु विजयं नाम कामरूपे नगोपरि ।
विजयाय सुतायादौ स ददौ पुरमुत्तमं ॥ ८ ॥
उदीच्यां मेरुनन्दस्य पुरीं नन्दवतीमिति ।
ख्याताञ्चकार प्रोत्तुङ्गवप्रप्राकारमालिनीं ॥ ९ ॥
कलावतीसुतस्यापि प्रभावस्य निवेशितं ।
पुरन्तालमिति ख्यातं दक्षिणापथमाश्रितं ॥ १० ॥
एवं निवेश्य पुत्त्रान् स पुरेषु पुरुषर्षभः ।
रेमे ताभिः समं विप्र मनोज्ञेष्वतिभूमिषु ॥ ११ ॥
एकदा तु गतोऽरण्ये विहरन् स धनुर्द्धरः ।
चकर्ष धनुरालोक्य वराहमतिदूरगं ॥ १२ ॥
अथाह काचिदभ्येत्य तं तदा हरिणाङ्गना ।
मय्येव पात्यतां बाणः प्रसीदेति पुनः पुनः ॥ १३ ॥

किमनेन हतेनाद्य मामाशु विनिपातय ।
त्वया निपातितो बाणो दुःखान्मां मोक्षयिष्यति ॥ १४ ॥

मरीचिरुवाच ॥

न ते शरीरं सरुजमस्माभिरुपलक्ष्यते ।
किन्नु तत्कारणं येन त्वं प्राणान् हातुमिच्छसि ॥ १५ ॥

मृग्युवाच ॥

अन्यास्वासक्तहृदये यस्मिंश्चेतः कृतास्पदं ।
मम तेन विना मृत्युरौषधं किमिहापरं ॥ १६ ॥

मरीचिरुवाच ॥

कस्त्वान्नाभिलषङ्गीरु सानुरागासि कुत्र वा ।
यदप्राप्तौ निजान् प्राणान् परित्यक्तुं व्यवस्यसि ॥ १७ ॥

मृग्युवाच ॥

त्वामेवेच्छामि भद्रन्ते त्वया मेऽवहृतं मनः ।
वृणोम्यहमतो मृत्युं मयि बाणो निपात्यतां ॥ १८ ॥

मरीचिरुवाच ॥

त्वं मृगी चञ्चलापाङ्गी नररूपधरा वयं ।
कथं त्वया समं योगो मद्विधस्य भविष्यति ॥ १९ ॥

मृग्युवाच ॥

यदि सापेक्षितश्चित्तं मयि ते मां परिष्वज ।
यदि वा साधु चित्तन्ते करिष्यामि यथेप्सितं ॥
एतावताहं भवता भविष्याम्यनिमानिता ॥ २० ॥

मार्कण्डेय उवाच ॥

आलिलिङ्ग ततस्तां स स्वरोचिर्हरिणाङ्गनां ।
तेन चालिङ्गिता सद्यः साभूद्दिव्यवपुर्धरा ॥ २१ ॥
ततः स विस्मयाविष्टः का त्वमित्यभ्यभाषत ।
सा चास्मै कथयामास प्रेमलज्जाजडाक्षरं ॥ २२ ॥
अहमभ्यर्थिता देवैः काननस्यास्य देवता ।
उत्पादनीयो हि मनुस्त्वया मयि महामते ॥ २३ ॥
प्रीतिमत्यां मयि सुतं भूर्लोकपरिपालकं ।
तमुत्पादय देवानां त्वामहं वचनाद्वदे ॥ २४ ॥

मार्कण्डेय उवाच ॥

ततः स तस्यात्तनयं सर्व्वलक्षणलक्षितं ।
तेजस्विनमिवात्मानं जनयामास तत्क्षणात् ॥ २५ ॥
जातमात्रस्य तस्याथ देववाद्या निसस्वनुः ।
जगुर्गन्धर्व्वपतयो ननृतुश्चाप्सरोगणाः ॥ २६ ॥
सिषिचुः शीकरैर्नागा ऋषयश्च तपोधनाः ।
देवाश्च पुष्पवर्षञ्च ममुचुश्च समन्ततः ॥ २७ ॥
तस्य तेजः समालोक्य नाम चक्रे पिता स्वयं ।
द्युतिमानिति येनास्य तेजसा भासिता दिशः ॥ २८ ॥
स बालो द्युतिमान्नाम महाबलपराक्रमः ।
स्वरोचिषः सुतो यस्मात्तस्मात् स्वारोचिषोऽभवत् ॥ २९ ॥
स चापि विचरन्नम्ये कदाचिद्गिरिनिर्झरे ।
स्वरोचिर्ददृशे हंसं निजपत्नीसमन्वितं ॥ ३० ॥

उवाच स तदा हंसीं साभिलाषां पुनः पुनः ।
उपसंह्रियतामात्मा चिरन्ते क्रिडितं मया ॥ ३१ ॥
किं सर्व्वकालं भोगैस्ते आसन्नश्चरमं वयः ।
परित्यागस्य कालो मे तव चापि जलेचरि ॥ ३२ ॥

हंस्युवाच ॥

अकालः को हि भोगानां सर्व्वं भोगात्मकं जगत् ।
यज्ञाः क्रियन्ते भोगार्थं ब्राह्मणैः संयतात्मभिः ॥ ३३ ॥
दृष्टादृष्टांस्तथा भोगान् वाञ्छमाना विवेकिनः ।
दानानि च प्रयच्छन्ति पूर्त्तधर्म्मांश्च कुर्व्वते ॥ ३४ ॥
स त्वं नेच्छसि किं भोगान् भोगश्चेष्टाफलं नृणां ।
विवेकिनां तिरश्चाञ्च किं पुनः संयतात्मनां ॥ ३५ ॥

हंस उवाच ॥

भोगेष्वसक्तचित्तानां परमात्मान्विता मतिः ।
भविष्यति कदा सङ्गमुपेतानाञ्च बन्धुषु ॥ ३६ ॥
पुत्रमित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ३७ ॥
किं न पश्यसि वा भद्रे जातसङ्गं स्वरोचिषं ।
आबाल्यात्कामसंसक्तं मग्नं स्नेहाम्बुकर्द्दमे ॥ ३८ ॥
यौवनेऽतीव भार्य्यासु साम्प्रतं पुत्रनप्तृषु ।
स्वरोचिषो मनो मग्नमुद्धारं प्राप्यते कुतः ॥ ३९ ॥
नाहं स्वरोचिषस्तुल्यः स्त्रीवाध्यो वा जलेचरि ।
विवेकवांश्च भोगानां निवृत्तोऽस्मि च साम्प्रतं ॥ ४० ॥

मार्कण्डेय उवाच ॥

स्वरोचिरेतदाकर्ण्य जातोद्वेगः खगेरितं ।
आदाय भार्य्यास्तपसे ययावन्यत्तपोवनं ॥ ४१ ॥
तत्र तप्त्वा तपो घोरं सह ताभिरुदारधीः ।
जगाम लोकानमलान्निर्द्धूताखिलकल्मषः ॥ ४२ ॥

इति श्रीमार्कण्डेयपुराणे स्वारोचिषे मन्वन्तरे ॥ ६६ ॥

सप्तषष्टितमोऽध्यायः ।

मार्कण्डेय उवाच ॥

ततः स्वारोचिषं नाम्ना द्युतिमन्तं प्रजापतिं ।
मनुञ्चकार भगवांस्तस्य मन्वन्तरं शृणु ॥ १ ॥
तत्रान्तरे तु ये देवा मुनयस्तत्सुताश्च ये ।
भूपालाः क्रौष्टुके ये तान् गदतस्त्वं निशामय ॥ २ ॥
देवाः पारावतास्तत्र तथैव तुषिता द्विज ।
स्वारोचिषेऽन्तरे चेन्द्रो विपश्चिदिति विश्रुतः ॥ ३ ॥
ऊर्ज्जस्तम्वस्तथा प्राणो दत्तोलिर्ऋषभस्तथा ।
निश्चरश्चार्व्वरीवांश्च तत्र सप्तर्षयोऽभवन् ॥ ४ ॥
चैत्रकिंपुरुषाद्याश्च सुतास्तस्य महात्मनः ।
सप्तासन् सुमहावीर्य्याः पृथिवीपरिपालकाः ॥ ५ ॥
तस्य मन्वन्तरं यावत्तावत्तद्वंशविस्तरैः ।
भुक्तेयमवनिः सर्व्वा द्वितीयं वै तदन्तरं ॥ ६ ॥

स्वरोचिषस्तु चरितं जन्म स्वारोचिषस्य च ।
निशम्य मुच्यते पापैः श्रद्दधानो हि मानवः ॥ ७ ॥

इति श्रीमार्कण्डेयपुराणे स्वारोचिषं समाप्तं ॥ ६७ ॥

अष्टषष्टितमोऽध्यायः ॥



क्रौष्टुकिरुवाच ॥

भगवन् कथितं सर्व्वं विस्तरेण त्वया मम ।
स्वरोचिषस्तु चरितं जन्म स्वारोचिषस्य तु ॥ १ ॥
या तु सा पद्मिनी नाम विद्या भोगोपपादिका ।
तत्संश्रया ये निधयस्तान् मे विस्तरतो वद ॥ २ ॥
अष्टौ ये निधयस्तेषां स्वरूपं द्रव्यसंस्थितिः ।
भवताभिहितं सम्यक् श्रोतुमिच्छाम्यहं गुरो ॥ ३ ॥

मार्कण्डेय उवाच ॥

पद्मिनी नाम या विद्या लक्ष्मीस्तस्याश्च देवता ।
तदाधाराश्च निधयस्तन्मे निगदतः शृणु ॥ ४ ॥
यत्र पद्ममहापद्मौ तथा मकरकच्छपौ ।
मुकुन्दो नन्दकश्चैव नीलः शङ्खोऽष्टमो निधिः ॥ ५ ॥
सत्यामृद्धौ भवन्त्येते सिद्धिस्तेषां हि जायते ।
एते ह्यष्टौ समाख्याता निधयस्तव क्रोष्टुके ॥ ६ ॥
देवतानां प्रसादेन साधुसंसेवनेन च ।
एभिरालोकितं वित्तं मानुषस्य सदा मुने ॥ ७ ॥

यादृक् स्वरूपं भवति तन्मे निगदतः शृणु ।
पद्मो नाम निधिः पूर्व्वं मयस्य भवति द्विज ॥ ८ ॥
सुतस्य तत्सुतानाञ्च तत्पौत्राणाञ्च नित्यशः ।
दाक्षिण्यसारं पुरुषस्तेन चाधिष्ठितो भवेत् ॥ ९ ॥
सत्त्वाधारो महाभोगो यतोऽसौ सात्त्विको निधिः ।
सुवर्णरूप्यताम्रादिधातूनाञ्च परिग्रहं ॥ १० ।
करोत्यतितरां सोऽथ तेषाञ्च क्रयविक्रयं ।
करोति च तथा यज्ञान् दक्षिणाञ्च प्रयच्छति ॥ ११ ॥
सभां देवनिकेतांश्च स कारयति तन्मनाः ।
सत्त्वाधारो निधिश्चान्यो महापद्म इति श्रुतः ॥ १२ ॥
सत्त्वप्रधानो भवति तेन चाधिष्ठितो नरः ।
करोति पद्मरागादिरत्नानाञ्च परिग्रहं ॥ १३ ॥
मौक्तिकानां प्रबालानां तेषां च क्रयविक्रयान् ।
ददाति योगशीलेभ्यस्तेषामावसथांस्तथा ॥ १४ ॥
स कारयति तच्छीलः स्वयमेव च जायते ।
तत्प्रसूतास्तथाशीलाः पुत्रपौत्रक्रमेण च ॥ १५ ॥
पूर्व्वाङ्गमात्रः सप्तासौ पुरुषांश्च न मुञ्चति ।
तामसो मकरो नाम निधिस्तेनावलोकितः ॥ १६ ॥
पुरुषोऽथ तमःप्रायः सुशीलोऽपि हि जायते ।
बाणखड्गमर्ष्टिधनुषां चर्म्मणाञ्च परिग्रहं ॥ १७ ॥
रसनानाञ्च कुरुते याति मैत्रीञ्च राजभिः ।
ददाति शौर्य्यवृत्तीनां भूभुजां ये च तत्प्रियाः ॥ १८ ॥

क्रयविक्रये च शस्त्राणां नान्यत्र प्रीतिमेति च ।
एकस्यैव भवत्येष नच तस्यान्वयानुगः ॥ १९ ॥
द्रव्यार्थं दस्युतो नाशं संग्रामे चापि सव्रजे ।
कच्छपस्य निधिर्योऽसौ नरस्तेनाभिवीक्षितः ॥ २० ॥
तमःप्रधानो भवति यतोऽसौ तामसो निधिः ।
व्यवहारानशेषांस्तु पुण्यशालैः करोति च ॥ २१ ॥
कर्म्मस्थानग्विन्नांश्चैव न विश्वसिति कस्यचित् ।
समस्तानि यथाङ्गानि संहरत्येव कच्छपः ॥ २२ ॥
तथाविष्टस्वचित्तानि तिष्ठत्यायतमानसः ।
न ददाति न वा भुङ्क्ते तद्विनाशभयाकुलः ॥ २३ ॥
निधानमुर्व्यां कुरुते निधिः सोऽप्येकपूरुषः ।
रजोगुणमयश्चान्यो मुकुन्दो नाम यो निधिः ॥ २४ ॥
नरो वलोकितस्तेन तद्गुणो भवति द्विज ।
वीणावेणुमृदङ्गानामातोद्यस्य परिग्रहं ॥ २५ ॥
करोति गायतां वित्तं नृत्यताञ्च प्रयच्छति ।
वन्दिनामथ सूतानां विटानां लास्यपाठिनां ॥ २६ ॥
ददात्यहर्निशं भोगान् भुङ्क्ते तैश्च समं द्विज ।
कुलटासु रतिश्चास्य भवत्यन्यैश्च तद्विधैः ॥ २७ ॥
प्रयाति सङ्गमेकञ्च यं निधिर्भजते नरं ।
रजस्तमोमयश्चान्यो नन्दो नाम महानिधिः ॥ २८ ॥
उपैति स्तम्भमधिकं नरस्तेनावलोकितः ।
समस्तधातुरत्नानां पुण्यधान्यादिकस्य च ॥ २९ ॥

परिग्रहं करोत्येष तथैव क्रयविक्रयं ।
आधारः स्वजनानाञ्च आगताभ्यागतस्य च ॥ ३० ॥
सहते नापमानोक्तिं स्वल्पामपि महामुने ।
स्तूयमानश्च महतीं प्रीतिं बध्नाति यच्छति ॥ ३१ ॥
यं यमिच्छति वै कामं मृदुत्वमुपयाति च ।
बह्व्यो भार्य्या भवन्त्यस्य सुतिमत्योऽतिशोभनाः ॥ ३२ ॥
रतये मम च नराच्चिधिर्मन्दोऽनुवर्त्तते ।
प्रवर्द्धमानोऽयनरमष्टभागेन सत्तम ॥ ३३ ॥
दीर्घायुष्ट्वञ्च सर्व्वेषां पुरुषाणां प्रयच्छति ।
बन्धूनामेव भरणं ये च दूरादुपागताः ॥ ३४ ॥
तेषां करोति वै नन्दः परलोके न चादृतः ।
भवत्यस्य नच स्नेहः सहवासिषु जायते ॥ ३५ ॥
पूर्व्वमित्रेषु शैथिल्यं प्रीतिमन्यैः करोति च ।
तथैव सत्त्वरजसी यो बिभर्त्ति महानिधिः ॥ ३६ ॥
सर्व्वोत्तमंतन्नाम्नी नरस्तच्छीलवान् भवेत् ।
वस्त्रकार्पासधान्यादिफलपुष्पपरिग्रहं ॥ ३७ ॥
मुक्ताविद्रुमशङ्खानां शुक्त्यादीनां तथा मुने ।
काष्ठादीनां करोत्येष यच्चान्यज्जलसम्भवं ॥ ३८ ॥
क्रयविक्रयमन्येषां नान्यत्र रमते मनः ।
तडागान् पुष्करिण्योऽथ तथारामान् करोति च ॥ ३९ ॥
बन्धञ्च सरितां वृक्षांस्तथारोपयते नरः ।
अनुलेपनपुष्पादि भोगं भुङ्क्ताभिजायते ॥ ४० ॥

विपरीतस्वभावस्य निधिर्नीलो नामैष जायते ।
रजस्तमोमयश्चान्यः शङ्खसंज्ञो हि यो निधिः ॥ ४१ ॥
तेनापि नीयते विप्र तद्गुणित्वं निधीश्वरः ।
एकस्यैव भवत्येष नरं नान्यमुपैति च ॥ ४२ ॥
यस्य शङ्खो निधिस्तस्य स्वरूपं क्रौष्टुके शृणु ।
एक एवात्मना मृष्टमन्नं भुंक्ते तथाम्बरं ॥ ४३ ॥
कदन्नभुक् परिजनो नच शोभनवस्त्रधृक् ।
न ददाति सुहृद्भार्य्याभ्रातृपुत्त्रस्नुषादिषु ॥ ४४ ॥
स्वपोषणपरः शङ्खी नरो भवति सर्व्वदा ।
इत्येते निधयः ख्याता नराणामर्थदेवताः ॥ ४५ ॥
मिश्रावलोकनान्मिश्राः स्वभावफलदायिनः ।
यथा ख्यातस्वभावस्तु भवत्येव विलोकनात् ॥
सर्व्वेषामाधिपत्ये च श्रीरेषा द्विजपद्मिनी ॥ ४६ ॥

इति श्रीमार्कण्डेयपुराणे निधिनिर्णयो नाम ॥ ६८ ॥

---

ऊनसप्ततितमोऽध्यायः ॥



क्रौष्टुकिरुवाच ॥

विस्तरात् कथितं ब्रह्मन् मम स्वारोचिषंत्वया ।
मन्वन्तरं तथैवाष्टौ ये पृष्टा निधयो मया ॥ १ ॥
स्वायम्भुवं पूर्व्वमेव मन्वन्तरमुदाहृतं ।
मन्वन्तरं तृतीयं मे कथयोत्तमसंज्ञितं ॥ २ ॥

मार्कण्डेय उवाच ॥

उत्तानपादपुत्रोऽभूदुत्तमो नाम नामतः ।
सुरुच्यास्तनयः ख्यातो महाबलपराक्रमः ॥ ३ ॥
धर्म्मात्मा च महात्मा च पराक्रमधनो नृपः ।
अतीत्य सर्व्वभूतानि बभौ भानुपराक्रमः ॥ ४ ॥
समः शत्रौ च मित्रे च पुरे पुत्रे च धर्म्मवित् ।
दुष्टे च यमवत्साधौ सोमवच्च महामते ॥ ५ ॥
बाभ्रव्यां बहुलां नाम उपयेमे स धर्म्मवित् ।
उत्तानपादतनयः शचीमिन्द्र इवोत्तमः ॥ ६ ॥
ख्यातामतीव तस्यासीद्द्विजवर्य्या मनः सदा ।
खहवच्छशिनो यद्वद्रोहिण्यां निहितास्पदं ॥ ७ ॥
अन्यप्रयोजनासक्तिमुपैति न हि तन्मनः ।
स्वप्ने चैव तदात्मन्वि मनोऽभूत्तस्य भूभृतः ॥ ८ ॥
स च तस्याः सुचार्व्वङ्ग्या दर्शनादेव पार्थिवः ।
ददाति स्पर्शनं गात्रे गात्रस्पर्शे च तन्मयः ॥ ९ ॥
श्रोत्रोद्वेगकरं वाक्यं प्रियमप्यवनीपतेः ।
तस्यापि भूरि सम्मानं मेने परिभवन्ततः ॥ १० ॥
अवमेने स्रजं दत्तां शुभान्याभरणानि च ।
उत्तस्थावक्रपीडेव पिबतोऽस्य वरासवं ॥ ११ ॥
भुञ्जता च नरेन्द्रेण क्षणमात्रं करे धृता ।
बभुजे स्वल्पकं भक्ष्यं द्विज नातिमुदान्विता ॥ १२ ॥
एवं तस्यानुकूलस्य नानुकूला महात्मनः ।

प्रभूततरमत्यर्थं चक्रे रागं महीपतिः ॥ १३ ॥
अथ पानगतो भूपः कदाचित्तां मनस्विनीं ।
सुरापूतं पानपात्रं ग्राहयामास सादरः ॥ १४ ॥
पश्यतां भूमिपालानां वारमुख्यैः समन्वितः ।
प्रगीयमानमधुरैर्गेयगायनतत्परैः ॥ १५ ॥
सा तु नेच्छति तत्पात्रमादातुं तत्पराङ्मुखी ।
समक्षमवनीशानां ततः क्रुद्धः स पार्थिवः ॥ १६ ॥
उवाच द्वाःस्थमाहूय निश्वसन्नुरगो यथा ।
निराकृतस्तया देव्या प्रियया पतिरप्रियः ॥ १७ ॥
द्वाःस्थैनां दुष्टहृदयामादाय विजने वने ।
परित्यजाशु नैतत्ते विचार्य्यं वचनं मम ॥ १८ ॥

मार्कण्डेय उवाच ॥

ततो नृपस्य वचनमविचार्य्यमवेक्ष्य सः ।
द्वाःस्थस्तत्याज तां सुभ्रुमारोप्य स्यन्दने वने ॥ १९ ॥
सा च तं विपिने त्यागं नीता तेन महीभृता ।
अदृश्यमाना तं मेने परं कृतमनुग्रहं ॥ २० ॥
सोऽपि तत्रानुरागार्त्तिदह्यमानात्ममानसः ।
औत्तानपादिर्भूपालो नान्यां भार्य्यामविन्दत ॥ २१ ॥
सस्मार तां सुचार्व्वङ्गीमहर्निशमनिर्वृतः ।
चकार च निजं राज्यं प्रजा धर्म्मेण पालयन् ॥ २२ ॥
प्रजाः पालयतस्तस्य पितुः पुत्त्रानिवौरसान् ।
आगत्य ब्राह्मणः कश्चिदिदमाहार्त्तमानसः ॥ २३ ॥

ब्राह्मण उवाच ॥

महाराज भृशार्त्तोऽस्मि श्रूयतां गदतो मम ।
नृणामार्त्तिपरित्राणमन्यतो न नराधिपात् ॥ २४ ॥
मम भार्य्या प्रसुप्तस्य केनाप्यपहृता निशि ।
गृहद्वारमनुद्घाट्य तां समानेतुमर्हसि ॥ २५ ॥

राजोवाच ॥

न वेत्सि केनापहृता क्व वा नीता तु सा द्विज ।
यतामि विग्रहे कस्य कुतो वाप्यानयामि ता ॥ २६ ॥

ब्राह्मण उवाच ॥

तथैव स्थगिते द्वारि प्रसुप्तस्य महीपते ।
हृता हि भार्य्या किं केनेत्येतद्विज्ञायते भवान् ॥ २७ ॥
त्वं रक्षिता नो नृपते षड्भागादानवेतनः ।
धर्म्मस्य तेन निश्चिन्ताः स्वपन्ति मनुजा निशि ॥ २८ ॥

राजोवाच ॥

न ते दृष्टा मया भार्य्या यादृग्रूपा च देहतः ।
वयश्चैव समाख्याहि किंशीला ब्राह्मणी च ते ॥ २९ ॥

ब्राह्मण उवाच ॥

कठोरनेत्रा सात्युच्चा ह्रस्वबाहुः कृशानना ।
विरूपरूपा भूपाल न निन्दामि तथैव तां ॥ ३० ॥
वाचि भूपातिपरुषा न सौम्या सा च शीलतः ।
इत्याख्याता मया भार्य्या साकारा दुर्निरीक्षणा ॥ ३१ ॥
मनागतीतं भूपाल तस्याश्च प्रथमं वयः ।

तादृग्रूपा हि मे भार्य्या सत्यमेतन्मयोदितं ॥ ३२ ॥

राजोवाच ॥

अलन्ते ब्राह्मण तया भार्य्यामन्यां ददामि ते ।
सुखाय भार्य्या कल्याणी दुःखहेतुर्हि तादृशी ॥ ३३ ॥
कल्ये सुरूपता विप्र कारणं शीलमुत्तमं ।
रूपशीलविहीना या त्याज्या सा तेन हेतुना ॥ ३४ ॥

ब्राह्मण उवाच ॥

रक्ष्या भार्य्या महीपाल इति न श्रुतिरुत्तमा ।
भार्य्यायां रक्षमाणायां प्रजा भवति रक्षिता ॥ ३५ ॥
आत्मा हि जायते तस्यां सा रक्ष्यातो नरेश्वर ।
प्रजायां रक्षमाणायामात्मा भवति रक्षितः ॥ ३६ ॥
तस्यामरक्षमाणायां भविता वर्णसङ्करः ।
स पातयेन्महीपाल पूर्व्वान् स्वर्गादधःपितॄन् ॥ ३७ ॥
धर्म्महानिश्चानुदिनमभार्य्यस्य भवेन्मम ।
नित्यक्रियाणां विभ्रंशात् स चापि पतनाय मे ॥ ३८ ॥
तस्याञ्च पृथिवीपाल भविची मम सन्ततिः ।
तव षड्भागदात्री सा भविची धर्म्महेतुकी ॥ ३९ ॥
तदेतत्ते मयाख्याता पत्नी या मे हृता प्रभो ।
तां समानय रक्षायां भवानधिकृतो यतः ॥ ४० ॥

मार्कण्डेय उवाच ॥

स तस्यैवं वचःश्रुत्वा विमृष्य च नरेश्वरः ।
सर्व्वोपकरणैर्युक्तमारुरोह महारथं ॥ ४१ ॥

[ततश्चेतश्च तेनासौ परिबभ्राम मेदिनीं ।
ददर्श च महारण्ये तापसाश्रममुत्तमं ॥ ४२ ॥
अवतीर्य्य च तत्रासौ प्रविश्य ददृशे मुनिं ।
कौश्यां वृष्यां समासीनं ज्वलन्तमिव तेजसा ॥ ४३ ॥
स दृष्ट्वा नृपतिं प्राप्तं समुत्थाय त्वरान्वितः ।
संमान्य स्वागतेनैव शिष्यमाहार्घ्यमानय ॥ ४४ ॥
तमाह शिष्यः शनकैर्दातव्योऽर्घ्योऽस्य किं मुने ।
तदाज्ञापय सञ्चिन्त्य तवाज्ञां हि करोम्यहं ॥ ४५ ॥
ततोऽवगतवृत्तान्तो भूपतेस्तस्य स द्विजः ।
सम्भाषासनदानेन चक्रे सम्मानमात्मवान् ॥ ४६ ॥

ऋषिरुवाच ॥

किं निमित्तमिहायातो भवान् किन्ते चिकीर्षितं ।
उत्तानपादतनयं वेद्मि त्वामुत्तमं नृप ॥ ४७ ॥

राजोवाच ॥

ब्राह्मणस्य गृहाद्भार्य्या केनाप्यपहृता मुने ।
अविज्ञातस्वरूपेण तामन्वेष्टुमिहागतः ॥ ४८ ॥
पृच्छामि यत्ते तन्मे त्वं प्रणतस्यानुकम्पया ।
अभ्यागतस्याद्य गृहं भगवन् वक्तुमर्हसि ॥ ४९ ॥

ऋषिरुवाच ॥

पृच्छ मामवनीपाल यत्पृष्टव्यमशङ्कितः ।
वक्तव्यञ्चेत्तव मया कथयिष्यामि तत्त्वतः ॥ ५० ॥

राजोवाच ॥

गृहागताय यो मह्यं प्रथमे दर्शने मुने ।
त्वया समुद्यतो दातुं कथं सोऽर्घ्यो निवर्त्तितः ॥ ५१ ॥

ऋषिरुवाच ॥

त्वद्दर्शनेन रभसादानीतोऽयं मया नृप ।
यदा तदाहमेतेन शिष्येण प्रतिबोधितः ॥ ५२ ॥
एष वेत्ति जगत्यत्र मत्प्रसादादनागतं ।
यथाहं समतीतञ्च वर्त्तमानञ्च सर्व्वतः ॥ ५३ ॥
आलोच्याज्ञापयेत्युक्ते ततो ज्ञातं मयापि तत् ।
ततो न दत्तवानर्घ्यमहं तुभ्यं विधानतः ॥ ५४ ॥
सत्यं राजन् त्वमर्घ्यार्हः कुले स्वायम्भुवस्य च ।
तथापि नार्घ्ययोग्यं त्वां मन्यामो वयमुत्तमं ॥ ५५ ॥

राजोवाच ॥

किं कृतं हि मया ब्रह्मन् ज्ञानादज्ञानतो पि वा ।
येन त्वत्तोऽर्घ्यमर्हामि नाहमभ्यागतश्चिरात् ॥ ५६ ॥

ऋषिरुवाच ॥

किं विस्मृतन्ते यत्पत्नी त्वया त्यक्ता च कानने ।
परित्यक्तस्तया सार्द्धं त्वया धर्म्मो नृपाखिलः ॥ ५७ ॥
पक्षेण कर्म्मणो हान्या प्रयात्यस्पर्शतान्नरः ।
विण्मूत्रवर्षिकी यस्य हानिस्ते नित्यकर्म्मणः ॥ ५८ ॥
पत्न्यानुकूलया भाव्यं यथाशीलेऽपि भर्त्तरि ।
दुःशीलापि तथा भार्य्या पोषणीया नरेश्वर ॥ ५९ ॥

प्रतिकूला हि सा पत्नी तस्य विप्रस्य या हृता ।
तथापि धर्म्मकामोऽसौ त्वामुपागिततरां नृप ॥ ६० ॥
चलतः स्थापयस्यन्यान् स्वधर्म्मेषु महीपते ।
त्वां स्वधर्म्माद्विचलितं कोऽपरः स्थापयिष्यति ॥ ६१ ॥

मार्कण्डेय उवाच ॥

विलक्ष्यः स महीपाल इत्युक्तस्तेन धीमता ।
तथेत्युक्त्वा च पप्रच्छ हृतां पत्नीं द्विजन्मनः ॥ ६२ ॥
भगवन् केन नीता सा पत्नी विप्रस्य कुत्र वा ।
अतीतानागतं वेत्ति जगत्यवितथं भवान् ॥ ६३ ॥

ऋषिरुवाच ॥

तां जहाराद्रितनयो बलाको नाम राक्षसः ।
द्रक्ष्यसे चाद्य तां भूप उत्पलावतके वने ॥ ६४ ॥
गच्छ संयोजयाशु त्वं भार्य्यया हि द्विजोत्तमं ।
मा पापास्पदतां यातु त्वमिवासौ दिने दिने ॥ ६५ ॥

इति श्रीमार्कण्डेयपुराणे औत्तानमन्वन्तरे ॥ ६६ ॥

सप्तषष्टितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

ततः प्रणम्य तं भूपो मुनिं सम्प्रययौ द्रुतं ।
नामाख्यातं वनन्तच्च प्रययावुत्पलावतं ॥ १ ॥

यथाख्यातस्वरूपाञ्च भार्य्यां भर्त्ता द्विजस्य तां ।
भक्षयन्तीं ददर्शाथ श्रीफलानि नरेश्वरः ॥ २ ॥
पप्रच्छ च कथं भद्रे त्वमेतद्वनमागता ।
स्फुटं ब्रवीहि वैशालेरपि भार्य्या सुशर्म्मणः ॥ ३ ॥

ब्राह्मण्युवाच ॥

सुताहमतिरात्रस्य द्विजस्य वनवासिनः ।
पत्नी विशालपुत्रस्य यस्य नाम त्वयोदितं ॥ ४ ॥
साहं हृता बलाकेन राक्षसेन दुरात्मना ।
प्रसुप्ता भवनस्यान्ते भ्रातृमातृवियोजिता ॥ ५ ॥
भस्मीभवतु तद्रक्षो येनास्म्येवं वियोजिता ।
मात्रा भ्रातृभिरन्यैश्च तिष्ठाम्यत्र सुदुःखिता ॥ ६ ॥
अस्मिन् वनेऽतिगहने तेनानीयाहमुज्झिता ।
न वेद्मि कारणं किं तन्नोपभुंक्ते न खादति ॥ ७ ॥

राजोवाच ॥

अपि तज्ज्ञायते रक्षस्त्वामुत्सृज्य क्व वै गतं ।
अहं भर्त्ता तवैवात्र प्रेषितो द्विजनन्दिनि ॥ ८ ॥

ब्राह्मण्युवाच ॥

अस्यैव काननस्यान्ते स तिष्ठति निशाचरः ।
प्रविश्य पश्यतु भवान् न बिभेति ततो यदि ॥ ९ ॥

मार्कण्डेय उवाच ॥

प्रविवेश ततः सोऽथ तया वर्त्मनि दर्शिते ।
ददृशे परिवारेण समवेतञ्च राक्षसं ॥ १० ॥

दृष्टमात्रे ततस्तस्मिन् त्वरमाणः स राक्षसः ।
दूरादेव महीं मूर्ध्ना स्पृशन् पादान्तिकं ययौ ॥ ११ ॥

राक्षस उवाच ॥

ममाद्यागच्छता गेहं प्रसादस्ते महान् कृतः ।
प्रशाधि किं करोम्येष वसामि विषये तव ॥ १२ ॥
अर्घ्यञ्चेमं प्रतीच्छ त्वं स्थीयताञ्चेदमासनं ।
वयं भृत्या भवान् स्वामी दृढमाज्ञापयस्व मां ॥ १३ ॥

राजोवाच ॥

कृतमेव त्वया सर्व्वं सर्व्वमेवातिथिक्रियां ।
किमर्थं ब्राह्मणवधूस्त्वयानीता निशाचर ॥ १४ ॥
नेयं सुरूपा सन्त्यन्या भार्य्यार्थञ्चेत् हृता त्वया ।
भक्ष्यार्थं चेत्कथं नात्ता त्वयैतत्कथ्यतां मम ॥ १५ ॥

राक्षस उवाच ॥

न वयं मानुषाहारा अन्ये ते नृप राक्षसाः ।
सुकृतस्य फलं यत्तु तदश्नीमो वयं नृप ॥ १६ ॥
स्वभावञ्च मनुष्याणां योषिताञ्च विमानिताः ।
मानिताश्च समश्नीमो न वयं जन्तुखादकाः ॥ १७ ॥
यदस्माभिर्नृणां क्षान्तिर्भुक्ता क्रुध्यन्ति ते तदा ।
भुक्ते दुष्टे स्वभावे च गुणवन्तो भवन्ति च ॥ १८ ॥
सन्ति नः प्रमदा भूप रूपेणाप्सरसां समाः ।
राक्षस्यस्तासु तिष्ठत्सु मानुषीषु रतिः कथं ॥ १९ ॥

राजोवाच ॥

यद्येषा नोपभोगाय नाहाराय निशाचर ।
गृहं प्रविश्य विप्रस्य तत्किमेषा हृता त्वया ॥ २० ॥

राक्षस उवाच ॥

मन्त्रवित् स द्विजश्रेष्ठो मखे यत्र गतस्य मे ।
रक्षोघ्नमन्त्रपठनात् करोत्युच्चाटनं नृप ॥ २१ ॥
वयं बुभुक्षितास्तस्य मन्त्रोच्चाटनकर्म्मणा ।
क्व यामः सर्व्वयज्ञेषु स ऋत्विग्भवति द्विज ॥ २२ ॥
ततोऽस्माभिरिदन्तस्य वैकल्यमुपपादितं ।
पत्न्या विना पुमानिज्याकर्म्मयोग्यो न जायते ॥ २३ ॥

मार्कण्डेय उवाच ॥

वैकल्योच्चारणात्तस्य ब्राह्मणस्य महामतेः ।
ततः स राजातिभृशं विषण्णः समजायत ॥ २४ ॥
वैकल्यमेव विप्रस्य वदन्मामेव निन्दति ।
अनर्हमर्घस्य च मां सोऽप्याह मुनिसत्तमः ॥ २५ ॥
वैकल्यं तस्य विप्रस्य राक्षसोऽप्याह मे यथा ।
अपत्नीकतया सोऽहं सङ्कटं महदास्थितः ॥ २६ ॥

मार्कण्डेय उवाच ॥

एवं चिन्तयतस्तस्य पुनरप्याह राक्षसः ।
प्रणामनम्रो राजानं बद्धाञ्जलिपुटो मुने ॥ २७ ॥
नरेन्द्राज्ञाप्रदानेन प्रसादः क्रियतां मम ।
भृत्यस्य प्रणतस्य त्वं युष्मद्विषयवासिनः ॥ २८ ॥

राजोवाच ॥

स्वभावं वयमन्नीमस्त्वयोक्तं यन्निशाचर ।
तदर्थिनो वयं येन कार्य्येण शृणु तन्मम ॥ २९ ॥
अस्यास्त्वयाद्य भ्राह्मण्या दौःशील्यमपभुज्यतां ।
येन त्वयात्तदौःशील्या तद्विनीता भवेदियं ॥ ३० ॥
नीयतां यस्य भार्य्येयं तस्य वेश्म निशाचर ।
अस्मिन् कृते कृतं सर्व्वं गृहमभ्यागतस्य मे ॥ ३१ ॥

मार्कण्डेय उवाच ॥

ततः स राक्षसस्तस्याः प्रविश्यान्तः स्वमायया ।
भक्षयामास दौःशील्यं निजशक्त्या नृपाज्ञया ॥ ३२ ॥
दौःशील्येनातिरौद्रेण पत्नी तस्य द्विजन्मनः ।
तेन सा सम्परित्यक्ता तमाह जगतीपतिं ॥ ३३ ॥
स्वकर्म्मफलपाकेन भर्त्तुस्तस्य महात्मनः ।
वियोजिताहं तद्धेतुरयमासीन्निशाचरः ॥ ३४ ॥
नास्य दोषो न वा तस्य मम भर्त्तुर्महात्मनः ।
ममैव दोषो नान्यस्य सुकृतं ह्युपभुज्यते ॥ ३५ ॥
अन्यजन्मनि कस्यापि विप्रयोगः कृतो मया ।
सोऽयं मयाप्युपगतः को दोषोऽस्य महात्मनः ॥ ३६ ॥

राक्षस उवाच ॥

प्रापयामि तवादेशादिमां भर्त्तृगृहं प्रभो ।
यदन्यत्करणीयन्ते तदाज्ञापय पार्थिव ॥ ३७ ॥

राजोवाच ॥

अस्मिन् कृते कृतं सर्व्वं त्वया मे रजनीचर ।
आगन्तव्यञ्च ते वीर कार्य्यकाले स्मृतेन मे ॥ ३८ ॥

मार्कण्डेय उवाच ॥

तथेत्युक्त्वा तु तद्रक्षस्तामादाय द्विजाङ्गनां ।
निन्ये भर्तृगृहं शुद्धां दौःशील्यापगमात्तदा ॥ ३९ ॥

इति श्रीमार्कण्डेयपुराणे औत्तमसम्वत्सरे ॥ ७० ॥

एकसप्ततितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

तां प्रेषयित्वा राजापि स्वभर्तृगृहमङ्गनां ।
चिन्तयामास निःश्वस्य किमत्र सुकृतं भवेत् ॥ १ ॥
अनर्घयोग्यताकष्टं स मामाह महामनाः ।
वैकल्यं विप्रमुद्दिश्य तथाहायं निशाचरः ॥ २ ॥
सोऽहं कथं करिष्यामि त्यक्ता पत्नी मया हि सा ।
अथवा ज्ञानदृष्टिं तं पृच्छामि मुनिसत्तमं ॥ ३ ॥
सञ्चिन्त्येत्थं स भूपालः समारुह्य च तं रथं ।
ययौ यत्र स धर्म्मात्मा त्रिकालज्ञो महामुनिः ॥ ४ ॥
अवरुह्य रथात्सोऽथ तं समेत्य प्रणम्य च ।
यथा वृत्तं समाचख्यौ राक्षसेन समागमं ॥ ५ ॥

ाह्मण्या दर्शनञ्चैव दौःशील्यापगमं तथा ।
ोषणं भर्तृगेहे च कार्य्यमागमने च यत् ॥ ६ ॥

ऋषिरुवाच ॥

ज्ञातमेतन्मया पूर्व्वं यत् कृतन्ते नराधिप ।
कार्य्यमागमने चैव मत्समीपे तवाखिलं ॥ ७ ॥
पृच्छ मामिह किं कार्य्यं मयेत्युद्विग्नमानसः ।
त्वय्यागते महीपाल शृणु कार्य्यञ्च यत्त्वया ॥ ८ ॥
पत्नी धर्म्मार्थकामानां कारणं प्रबलं नृणां ।
विशेषतश्च धर्म्मश्च सन्त्यक्तस्त्यजता हि तां ॥ ९ ॥
अपत्नीको नरो भूप न योग्यो निजकर्म्मणां ।
ब्राह्मणः क्षत्रियो वापि वैश्यः शूद्रोऽपि वा नृप ॥ १० ॥
त्यजता भवता पत्नीं न शोभनमनुष्ठितं ।
अत्याज्यो हि यथा भर्त्ता स्त्रीणां भार्य्या तथा नृणां ॥ ११ ॥

राजोवाच ॥

भगवन् किं करोम्येष विपाको मम कर्म्मणां ।
नानुकूलानुकूलस्य यस्मात्त्यक्ता ततो मया ॥ १२ ॥
यद्यत्करोति तत्क्षान्तं दह्यमानेन चेतसा ।
भगवंस्तद्वियोगात्तिविभीतेनान्तरात्मना ॥ १३ ॥
साम्प्रतं तु वने त्यक्ता न वेद्मि क्व नु सा गता ।
भक्षिता वापि विपिने सिंहव्याघ्रनिशाचरैः ॥ १४ ॥

ऋषिरुवाच ॥

न भक्षिता सा भूपाल सिंहव्याघ्रनिशाचरैः ।

मा त्वविप्लुतचारित्रा साम्प्रतन्तु रसातले ॥ १५ ॥

राजोवाच ॥

मा नीता केन पातालमास्ते साऽदूषिता कथं ।
अत्यद्भुतमिदं ब्रह्मन् यथावद्वक्तुमर्हसि ॥ १६ ॥

ऋषिरुवाच ॥

पाताले नागराजोऽस्ति प्रख्यातश्च कपोतकः ।
तेन दृष्टा त्वया त्यक्ता भ्रममाणा महावने ॥ १७ ॥
सा रूपशालिनी तेन सानुरागेन पार्थिव ।
वेदितार्थेन पातालं नीता सा युवती तदा ॥ १८ ॥
ततस्तस्य सुता सुभ्रूर्नन्दा नाम महीपते ।
भार्य्या मनोरमा चास्य नागराजस्य धीमतः ॥ १९ ॥
तया मातुः सपत्नीयं सा भविचीति शोभना ।
दृष्टा स्वगेहं सा नीता गुप्ता चान्तःपुरे शुभा ॥ २० ॥
यदा तु याचिता नन्दा न ददाति नृपोत्तरं ।
मूका भविष्यसीत्याह तदा तां तनयां पिता ॥ २१ ॥
एवं शप्ता सुता तेन सा चास्ते तत्र भूपते ।
नीता तेनोरगेन्द्रेण धृता तत्सुतया सती ॥ २२ ॥

मार्कण्डेय उवाच ॥

ततो राजा परं हर्षमवाप्य तमपृच्छत ।
द्विजवर्य्यं स्वदौर्भाग्यकारणं दयितां प्रति ॥ २३ ॥

राजोवाच ॥

भगवन् सर्व्वलोकस्य मयि प्रीतिरनुत्तमा ।

किन्तु तत्कारणं येन स्वपत्नी नातिवत्सला ॥ २४ ॥
मम चासावतीवेष्टा प्राणेभ्योऽपि महामुने ।
सा च मां प्रति दुःशीला ब्रूहि यत्कारणं द्विज ॥ २५ ॥

ऋषिरुवाच ॥

पाणिग्रहणकाले त्वं सूर्य्यभौमशनैश्चरैः ।
शुक्रवाचस्पतिभ्याञ्च तव भार्य्यावलोकिता ॥ २६ ॥
तन्मुहूर्त्तेऽभवच्चन्द्रस्तस्याः सोमसुतस्तथा ।
परस्परविपक्षौ तौ ततः पार्थिव ते भृशं ॥ २७ ॥
तद्गच्छ त्वं स्वधर्म्मेण परिपालय मेदिनीं ।
पत्नीसहायः सर्व्वाश्च कुरु धर्म्मवतीः क्रियाः ॥ २८ ॥

मार्कण्डेय उवाच ॥

इत्युक्तः प्रणिपत्यैनमारुह्य स्यन्दनं ततः ।
उत्तमः पृथिवीपाल आजगाम निजं पुरं ॥ २९ ॥

इति श्रीमार्कण्डेयपुराणे औत्तमे मन्वन्तरे ॥ ७१ ॥

द्विसप्ततितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

ततः स्वनगरं प्राप्य तं ददर्श द्विजं नृपः ।
समेतं भार्य्यया चैव शीलवत्या मुदान्वितं ॥ १ ॥

ब्राह्मण उवाच ॥

राजवर्य्य कृतार्थोऽस्मि यतो धर्म्मो हि रक्षितः ।

धर्म्मयेनेह भवता भार्य्यामानयता मम ॥ २ ॥

राजोवाच ॥

कृतार्थस्त्वं द्विजश्रेष्ठ निजधर्म्मानुपालनात् ।
वयं सङ्कटिनो विप्र येषां पत्नी न वेश्मनि ॥ ३ ॥

ब्राह्मण उवाच ॥

नरेन्द्र सा हि विपिने भक्षिता श्वापदैर्यदि ।
अलन्तया किमन्यस्या न पाणिर्गृह्यते त्वया ॥
क्रोधस्य वशमागम्य धर्म्मो न रक्षितस्त्वया ॥ ४ ॥

राजोवाच ॥

न भक्षिता मे दयिता श्वापदैः सा हि जीवति ।
अविदूषितचारित्रा कथमेतत्करोम्यहं ॥ ५ ॥

ब्राह्मण उवाच ॥

यदि जीवति ते भार्य्या न चैव व्यभिचारिणी ।
तदपत्नीकताजन्म किं पापं क्रियते त्वया ॥ ६ ॥

राजोवाच ॥

आनीतापि हि सा विप्र प्रतिकूला सदैव मे ।
दुःखाय न सुखायालं तस्या मैत्री न वै मयि ॥
तथा त्वं कुरु यत्नं मे यथा सा वशगामिनी ॥ ७ ॥

ब्राह्मण उवाच ॥

तव संप्रीतये तस्या वरेष्टिरुपकारिणी ।
क्रियते मित्रकामैर्या मित्रविन्दां करोमि तां ॥ ८ ॥
अप्रीतयोः प्रीतिकरी सा हि संजननी परं ।

भार्य्यापत्योर्मनुष्येन्द्र तामवेष्टिं करोम्यहं ॥ ९ ॥
यत्र तिष्ठति सा सुभ्रुस्तव भार्य्या महीपते ।
तस्मादानीयतां सा ते परां प्रीतिमुपैष्यति ॥ १० ॥

मार्कण्डेय उवाच ॥

इत्युक्तः स तु सम्भारानशेषानवनीपतिः ।
आनिनाय चकारेष्टिं स च तां द्विजसत्तमः ॥ ११ ॥
सप्तकृत्वः स तु तदा चकारेष्टिं पुनः पुनः ।
तस्य राज्ञो द्विजश्रेष्ठो भार्य्यासम्पादनाय वै ॥ १२ ॥
यदारोपितमैत्रान्तामन्यत महामुनिः ।
स्वभर्त्तरि तदा विप्रस्तमुवाच नराधिपं ॥ १३ ॥
आनीय तां नरश्रेष्ठ या तवेष्टात्मनोऽन्तिकं ।
भुंक्ष्व भोगांस्तया सार्द्धं यज यज्ञांस्तथाहृतः ॥ १४ ॥

मार्कण्डेय उवाच ।

इत्युक्तस्तेन विप्रेण भूपालो विस्मितस्तदा ।
सस्मार तं महावीर्य्यं सत्यसन्धं निशाचरं ॥ १५ ॥
स्मृतस्तेन तदा सद्यः समुपेत्य नराधिपं ।
किं करोमीति सोऽप्याह प्रणिपत्य महामुने ॥ १६ ॥
ततस्तेन नरेन्द्रेण विस्तरेण निवेदिते ।
गत्वा पातालमादाय राजपत्नीमुपाययौ ॥ १७ ॥
आनीता चानिशार्द्देन सा ददर्श तदा पतिं ।
उवाच च प्रसीदेति भूयोभूयो मुदान्विता ॥ १८ ॥
ततः स राजा रभसा परिष्वज्याह मानिनीं ।

प्रिये प्रसन्न एवाहं भूयोऽप्येवं ब्रवीषि किं ॥ १९ ॥

पत्न्युवाच ॥

यदि प्रसादप्रवणं नरेन्द्र मयि ते मनः ।
तदेतदभियाचे त्वां तत्कुरुष्व ममाहृणं ॥ २० ॥

राजोवाच ॥

निःशङ्कं ब्रूहि मत्तो यद्भवत्या किञ्चिदीप्सितं ।
तदलभ्यं न ते भीरु तवायत्तोऽस्मि नान्यथा ॥ २१ ॥

पत्न्युवाच ॥

मदर्थं तेन नागेन सुता शप्ता सखी मम ।
मूका भविष्यसीत्याह सा च मूकत्वमागता ॥ २२ ॥
तस्याः प्रतिक्रियां प्रीत्या मम शक्नोति चेद्भवान् ।
वाग्विभागप्रशान्त्यर्थं ततः किं न कृतं मम ॥ २३ ॥

मार्कण्डेय उवाच ॥

ततः स राजा तं विप्रमाहास्मिन् कीदृशी क्रिया ।
तन्मूकतापनोदाय स च तं प्राह पार्थिवं ॥ २४ ॥

ब्राह्मण उवाच ॥

भूप सारस्वतीमिष्टिं करोमि वचनात्तव ।
पत्नी तवेयमानृण्यं यातु तद्वाक्प्रवर्त्तनात् ॥ २५ ॥

मार्कण्डेय उवाच ॥

इष्टिं सारस्वतीं चक्रे तदर्थं स द्विजोत्तमः ।
सारस्वतानि सूक्तानि जजाप च समाहितः ॥ २६ ॥
ततः प्रवृत्तवाक्यां तां गर्गः प्राह रसातले ।

उपकारः सखीभर्त्रा कृतोऽयमतिदुष्करः ॥ २७ ॥
इत्थं ध्यानं समासाद्य नन्दा शीघ्रगतिः पुरं ।
ततो राज्ञीं परिष्वज्य स्वसखीमुरगात्मजा ॥ २८ ॥
तञ्च संस्तूय भूपालं कल्याणोक्त्या पुनः पुनः ।
उवाच मधुरं नागी कृतासनपरिग्रहा ॥ २९ ॥
उपकारः कृतो वीर भवता यो ममाधुना ।
तेनास्म्याकृष्टहृदया यद्ब्रवीमि शृणुष्व तत् ॥ ३० ॥
तव पुत्रो महावीर्य्यो भविष्यति नराधिप ।
तस्याप्रतिहतं चक्रमस्यां भुवि भविष्यति ॥ ३१ ॥
सर्व्वार्थशास्त्रतत्त्वज्ञो धर्म्मानुष्ठानतत्परः ।
मन्वन्तरेश्वरो धीमान् भविष्यति स वै मनुः ॥ ३२ ॥

मार्कण्डेय उवाच ॥

इति दत्वा वरं तस्मै नागराजसुता ततः ।
सर्व्वां तां संपरिष्वज्य पातालमगमन्मुने ॥ ३३ ॥
तत्र तस्य तया सार्द्धं रमतः पृथिवीपतेः ।
जगाम कालः सुमहान् प्रजाः पालयतस्तथा ॥ ३४ ॥
ततः स तस्यात्तनयो जज्ञे राज्ञो महात्मनः ।
पौर्णमास्यां यथा कान्तश्चन्द्रः संपूर्णमण्डलः ॥ ३५ ॥
तस्मिन् जाते मुदं प्रापुः प्रजाः सर्व्वा महात्मनि ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात च ॥ ३६ ॥
तस्य दृष्ट्वा वपुः कान्तं भविष्यं शीलमेव च ।
औत्तमश्चेति मुनयो नाम चक्रुः समागताः ॥ ३७ ॥

जातोऽयमुत्तमे वंशे तत्र काले तथोत्तमे ।
उत्तमावयवस्तेन औत्तमोऽयं भविष्यति ॥ ३८ ॥

मार्कण्डेय उवाच ॥

उत्तमस्य सुतः सोऽथ नाम्ना ख्यातस्तथौत्तमः ।
मनुरासीत्तत्प्रभावो भागुरे श्रूयतां मम ॥ ३९ ॥
उत्तमाख्यानमखिलं जन्म चैवौत्तमस्य च ।
नित्यं शृणोति विद्वेषं स कदाचिन्न गच्छति ॥ ४० ॥
इष्टैर्दारैस्तथा पुत्त्रैर्बन्धुभिर्व्वा कदाचन ।
वियोगो नास्य भविता शृण्वतः पठतोऽपि वा ॥ ४१ ॥
तस्य मन्वन्तरं ब्रह्मन् वदतो मे निशामय ।
श्रूयतां तत्र यश्चेन्द्रो ये च देवास्तथर्षयः ॥ ४२ ॥

इति श्रीमार्कण्डेयपुराणे औत्तम मन्वन्तरे ॥ ७२ ॥

त्रिसप्ततितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

मन्वन्तरे तृतीयेऽस्मिन् औत्तमस्य प्रजापतेः ।
देवानिन्द्रमृषीन् भूपान् निबोध गदतो मम ॥ १ ॥
स्वधामानस्तथा देवा यथानामानुकारिणः ।
सत्याख्यश्च द्वितीयोऽन्यस्त्रिदशानां तथा गणः २ ॥
तृतीये तु गणे देवाः शिवाख्या मुनिसत्तम ।
शिवाः स्वरूपतस्ते तु श्रुताः पापप्रणाशनाः ॥ ३ ॥

प्रतर्द्दनाख्यश्च गणो देवानां मुनिसत्तम ।
चतुर्थस्तत्र कथित औत्तमस्यान्तरे मनोः ॥ ४ ॥
वशवर्त्तिनःपञ्चमेऽपि देवास्तत्र गणो द्विज ।
यथाख्यातस्वरूपास्तु सर्व्वे एव महामुने ॥ ५ ॥
एते देवगणाः पञ्च स्मृता यज्ञभुजस्तथा ।
मन्वन्तरे मनुश्रेष्ठे सर्व्वे द्वादशका गणाः ॥ ६ ॥
तेषामिन्द्रो महाभागस्त्रैलोक्ये स गुरुर्भवेत् ।
शतं क्रतूनामाहृत्य सुशान्तिर्नाम नामतः ॥ ७ ॥
यस्योपसर्गनाशाय नामाक्षरविभूषिता ।
अद्यापि मानवैर्गाथा गीयते तु महीतले ॥ ८ ॥
सुशान्तिर्देवराट् कान्तः सुशान्तिं स प्रयच्छति ।
सहितः शिवसत्याद्यैस्तथैव वशवर्त्तिनः ॥ ९ ॥
अजः परशुचिर्दिव्यो महाबलपराक्रमाः ।
पुत्रास्तस्य मनोरासन् विख्यातास्त्रिदशोपमाः ॥ १० ॥
तत्सूतिसम्भवैर्भूमिः पालिताभून्नरेश्वरैः ।
यावन्मन्वन्तरं तस्य मनोरुत्तमतेजसः ॥ ११ ॥
चतुर्युगानां संख्याता साधिका ह्येकसप्ततिः ।
कृतत्रेतादिसंज्ञानां यान्युक्तानि युगे मया ॥ १२ ॥
स्वतेजसा हि तपसो वशिष्ठस्य महात्मनः ।
तनयाश्चान्तरे तस्मिन् सप्त सप्तर्षयोऽभवन् ॥ १३ ॥
तृतीयमेतत्कथितं तव मन्वन्तरं मया ।
तामसस्य चतुर्थन्तु मनोरन्तरमुच्यते ॥ १४ ॥

तिर्य्योनिजन्मनो यस्य यशसा द्योतितं जगत् ।
जन्म तस्य मनोर्ब्रह्मन् श्रूयतां गदतो मम ॥ १५ ॥
अतीन्द्रियमशेषाणाममूनाञ्चरितन्तथा ।
तथा जन्मापि विज्ञेयं प्रभावश्च महात्मनां ॥ १६ ॥

इति श्रीमार्कण्डेयपुराणे तामस मन्वन्तरं समाप्तं ॥ ७३ ॥

## चतुःसप्ततितमोऽध्यायः ।

मार्कण्डेय उवाच ।

राजाभूद्भुवि विख्यातः स्वराष्ट्रो नाम वीर्य्यवान् ।
अनेकयज्ञकृत्प्राज्ञः संग्रामेष्वपराजितः ॥ १ ॥
तस्यायुः सुमहत् प्रादात् मन्त्रिणाराधितो रविः ।
पत्नीनाञ्च शतन्तस्य धन्यानामभवत् द्विज ॥ २ ॥
तस्य दीर्घायुषः पत्न्यो नातिदीर्घायुषो मुने ।
कालेन जग्मुर्निधनं भृत्यमन्त्रिजनास्तथा ॥ ३ ॥
स भार्य्याभिस्तथा युक्तो भृत्यैश्च सहजन्मभिः ।
उद्विग्नचेताः संप्राप वीर्य्यहानिमहर्निशं ॥ ४ ॥
तं वीर्य्यहीनं निभृतैर्भृत्यैस्त्यक्तं सुदुःखितं ।
अनन्तरो विमर्द्दाख्यो राज्याच्च्यावितवांस्तदा ॥ ५ ॥
राज्याच्च्युतं सोऽपि वनं गत्वा निर्व्विण्णमानसः ।
तपस्तेपे महाभागो वितस्तापुलिने स्थितः ॥ ६ ॥

ग्रीष्मे पञ्चतपा भूत्वा वर्षास्वभ्रावकाशिकः ।
जलशायी च शिशिरे निराहारो यतव्रतः ॥ ७ ॥
ततस्तपस्यतस्तस्य प्रावृट्काले महाप्लवः ।
बभूवानुदिनं मेघैर्वर्षद्भिरनुसन्ततं ॥ ८ ॥
न दिग्विज्ञायते पूर्व्वा दक्षिणा वा न पश्चिमा ।
नोत्तरा तमसा सर्व्वमनुलिप्तमिवाभवत् ॥ ९ ॥
ततोऽतिप्लवने भूपः स नद्याः परितस्तटं ।
प्रार्थयन्नपि नावाप ह्रियमाणोऽतिवेगिना ॥ १० ॥
अथ दूरे जलौघेन ह्रियमाणो महीपतिः ।
आससाद जले रौहीं स पुच्छे जगृहे च तां ॥ ११ ॥
तेन स्रवेन स ययावुह्यमानो महीतले ।
इतस्ततस्तथान्धकारे आससाद तटं ततः ॥ १२ ॥
विस्तारि पङ्कमत्यर्थं दुस्तरं स नृपस्तरन् ।
तयैव कृष्यमाणोऽन्यद्रम्यं वनमवाप सः ॥ १३ ॥
तत्रान्धकारे सा रौही चकर्ष वसुधाधिपं ।
पङ्के लग्नं महाभागं कृशं धमनिसन्ततं ॥ १४ ॥
तस्याश्च स्पर्शमतुलामवाप मुदमुत्तमां ।
सोऽन्धकारे भ्रमन् भूयो मदनाकृष्टमानसः ॥ १५ ॥
विज्ञाय सानुरागं तं पृष्ठस्पर्शनतत्परं ।
नरेन्द्रं तदङ्गस्यान्तः सा मृगी तमुवाच ह ॥ १६ ॥
किं पृष्ठं वेपथुमता करेण स्पृशसे मम ।
अन्यथैवास्य कार्य्यस्य संजाता नृपते गतिः ॥ १७ ॥

नास्थाने वो मनो यातं नागम्याहं तवेश्वर ।
किन्तु त्वत्सङ्गमे विघ्नमेष लोलः करोति मे ॥ १८ ॥

मार्कण्डेय उवाच ॥

इति श्रुत्वा वचस्तस्या मृग्याश्च जगतीपतिः ।
जातकौतूहलो रौहीमिदं वचनमब्रवीत् ॥ १९ ॥
का त्वं ब्रूहि मृगीवाक्यं कथं मानुषवद्वद ।
कश्चैव लोलो यो विघ्नं त्वत्सङ्गे कुरुते मम ॥ २० ॥

मृग्युवाच ॥

अहन्ते दयिता भूप प्रागासमुत्पलावती ।
भार्य्या शताग्रमहिषी दुहिता दृढधन्वनः ॥ २१ ॥

राजोवाच ॥

किन्तु यावत्कृतं कर्म्म येनेमां योनिमागता ।
पतिव्रता धर्म्मपरा सा चेत्थं कथमीदृशी ॥ २२ ॥

मृग्युवाच ॥

अहं पितृगृहे बाला सखीभिः सहिता वनं ।
रन्तुं गता ददर्शैकं मृगं मृग्या समागतं ॥ २३ ॥
ततः समीपवर्त्तिन्या मया सा ताडिता मृगी ।
मया त्रस्ता गतान्यच क्रुद्धः प्राह ततो मृगः ॥ २४ ॥
मूढे किमेवं मत्तासि धिक्के दौःशील्यमीदृशं ।
आधानकालो येनायं त्वया मे विफलीकृतः ॥ २५ ॥
वाचं श्रुत्वा ततस्तस्य मानुषस्येव भाषतः ।
भीता तमब्रवं कोऽसीत्येतां योनिमुपागतः ॥ २६ ॥

ततः स प्राह पुत्रोऽहमृषेर्निर्वृतिचक्षुषः ।
सुतपा नाम मृग्यान्तु साभिलाषो मृगोऽभवं ॥ २७ ॥
इमाञ्चानुगतः प्रेम्णा वाञ्छितश्चानया वने ।
त्वया वियोजिता दुष्टे तस्माच्छापं ददामि ते ॥ २८ ॥
मया चोक्तं तवाज्ञानादपराधः कृतो मुने ।
प्रसादं कुरु शापं मे न भवान् दातुमर्हति ॥ २९ ॥
इत्युक्तः प्राह मां सोऽपि मुनिरित्थं महीपते ।
न प्रयच्छामि शापं ते यद्यात्मानं ददामि ते ॥ ३० ॥
मया चोक्तं मृगी नाहं मृगरूपधरा वने ।
लप्स्यसेऽन्यां मृगीन्त्वावन्मयि भावो निवर्त्यतां ॥ ३१ ॥
इत्युक्तः कोपरक्ताक्षः स प्राह स्फुरिताधरः ।
नाहं मृगी त्वयेत्युक्तं मृगी मूढे भविष्यसि ॥ ३२ ॥
ततो भृशं प्रव्यथिता प्रणम्य मुनिमब्रवं ।
स्वरूपस्थमतिक्रुद्धं प्रसीदेति पुनः पुनः ॥ ३३ ॥
बालानभिज्ञा वाक्यानां ततः प्रोक्तमिदं मया ।
पितर्य्यसति नारीभिर्व्रियते हि पतिः स्वयं ॥ ३४ ॥
सति ताते कथञ्चाहं वृणोमि मुनिसत्तम ।
सापराधाथवा पादौ प्रसीदेश नमाम्यहं ॥ ३५ ॥
प्रसीदेति प्रसीदेति प्रणताया महामते ।
इत्थं लालप्यमानायाः स प्राह मुनिपुङ्गवः ॥ ३६ ॥
न भवत्यन्यथा प्रोक्तं मम वाक्यं कदाचन ।
मृगी भविष्यसि मृता वनेऽस्मिन्नेव जन्मनि ॥ ३७ ॥

मृगत्वे च महाबाहुस्तव गर्भमुपैष्यति ।
लोलो नाम मुनेः पुत्त्रः सिद्धवीर्य्यस्य भाविनि ॥ ३८ ॥
जातिस्मरा भवित्री त्वं तस्मिन् गर्भमुपागते ।
स्मृतिं प्राप्य तथा वाचं मानुषीमीरयिष्यसि ॥ ३९ ॥
तस्मिन् जाते मृगीत्वात् त्वं विमुक्ता पतिनार्च्चिता ।
लोकानवाप्स्यसि प्राप्या य न दुष्कृतकर्म्मभिः ॥ ४० ॥
सोऽपि लोलो महावीर्य्यः पितृशत्रून् निपात्य वै ।
जित्वा वसुन्धरां कृत्स्नां भविष्यति ततो मनुः ॥ ४१ ॥
एवं शापमहं लब्ध्वा मृता तीर्य्यक्त्वमागता ।
त्वत्संस्पर्शाच्च गर्भोऽसौ सम्भूतो जठरे मम ॥ ४२ ॥
अतो ब्रवीमि नास्थाने तव यातं मनो मयि ।
न चाप्यगम्यो गर्भस्थो लोलो विघ्नं करोत्यसौ ॥ ४३ ॥

मार्कण्डेय उवाच ॥

एवमुक्तस्ततः सोऽपि राजा प्राप्य परां मुदं ।
पुत्त्रो ममारीञ्जित्वेति पृथिव्यां भविता मनुः ॥ ४४ ॥
ततस्तं सुषुवे पुत्त्रं सा मृगी लक्षणान्वितं ।
तस्मिन् जाते च भूतानि सर्व्वाणि प्रययुर्मुदं ॥ ४५ ॥
विशेषतश्च राजासौ पुत्त्रे जाते महाबले ।
सा विमुक्ता मृगी शापात्प्राप लोकाननुत्तमान् ॥ ४६ ॥
ततस्तस्यर्षयः सर्व्वे समेत्य मुनिसत्तम ।
अवेक्ष्य भाविनीमृद्धिं नाम चक्रुर्महात्मनः ॥ ४७ ॥
तामसीं भजमानायां योनिं मातर्य्यजायत ।

तमसा चाहृते लोके तामसोऽयं भविष्यति ॥ ४८ ॥
ततः स तामसस्तेन पित्रा संवर्द्धितो वने ।
जातबुद्धिरुवाचेदं पितरं मुनिसत्तम ॥ ४९ ॥
कस्त्वं तात कथं वाहं पुत्रो माता च का मम ।
किमर्थमागतश्च त्वमेतत्सत्यं ब्रवीहि मे ॥ ५० ॥

मार्कण्डेय उवाच ॥

ततः पिता यथा वृत्तं स्वराज्यच्यावनादिकं ।
तस्याचष्टे महाबाहुः पुत्रस्य जगतीपतिः ॥ ५१ ॥
श्रुत्वा तत्सकलं सोऽपि समाराध्य च भास्करं ।
अवाप दिव्यान्यस्त्राणि ससंहाराण्यशेषतः ॥ ५२ ॥
कृतास्त्रस्तानरीन् जित्वा पितुरानीय चान्तिकं ।
अनुज्ञातान् मुमोचाथ तेन स्वं धर्म्ममास्थितः ॥ ५३ ॥
पितापि तस्य स्वान् लोकांस्तपोयज्ञसमार्ज्जितान् ।
विसृष्टदेहः संप्राप्तो दृष्ट्वा पुत्रमखं सुखं ॥ ५४ ॥
जित्वा समस्तां पृथिवीं तामसाख्यः स पार्थिवः ।
तामसाख्यो मनुरभूत्तस्य मन्वन्तरं शृणु ॥ ५५ ॥
ये देवा यत्पतिर्यश्च देवेन्द्रो ये तथर्षयः ।
ये पुत्राश्च मनोस्तस्य पृथिवीपरिपालकाः ॥ ५६ ॥
सत्यास्तथान्ये सुधियः सुरूपा हरयस्तथा ।
एते देवगणास्तत्र सप्तविंशतिका मुने ॥ ५७ ॥
महाबलो महावीर्य्यः शतयज्ञोपलक्षितः ।
शिखिरिन्द्रस्तथा तेषां देवानामभवद्विभुः ॥ ५८ ॥

ज्योतिर्धामा पृथुः काव्यश्चैत्रोऽग्निर्वलकस्तथा ।
पीवरश्च तथा ब्रह्मन् सप्त सप्तर्षयोऽभवन् ॥ ५९ ॥
नरः क्षान्तिः शान्तदान्तजानुजङ्घादयस्तथा ।
पुत्रास्तु तामसस्यासन् राजानः सुमहाबलाः ॥ ६० ॥

इति श्रीमार्कण्डेयपुराणे तामसमन्वन्तरे ॥ ७४ ॥

पञ्चसप्ततितमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

पञ्चमोऽपि मनुर्ब्रह्मन् रैवतो नाम विश्रुतः ।
तस्योत्पत्तिं विस्तरशः शृणुष्व कथयामि ते ॥ १ ॥
ऋषिरासीन्महाभाग ऋतवागिति विश्रुतः ।
तस्यापुत्रस्य पुत्रोऽभूद्रेवत्यन्ते महात्मनः ॥ २ ॥
स तस्य विधिवच्चक्रे जातकर्म्मादिकाः क्रियाः ।
तथोपनयनादींश्च स चाशीलोऽभवन्मुने ॥ ३ ॥
यतः प्रभृति जातोऽसौ ततः प्रभृति सोऽप्यृषिः ।
दीर्घरोगपरामर्शमवाप मुनिपुङ्गवः ॥ ४ ॥
माता तस्य परामार्त्तिं कुष्ठरोगादिपीडिता ।
जगाम स पिता चास्य चिन्तयामास दुःखितः ॥ ५ ॥
किमेतदिति सोऽप्यस्य पुत्रोऽप्यत्यन्तदुर्म्मतिः ।
जग्राह भार्य्यामन्यस्य मुनिपुत्रस्य सम्मुखीं ॥ ६ ॥

ततो विषण्णमनसा ऋतवागिदमुक्तवान् ।
अपुत्रता मनुष्याणां श्रेयसे न कुपुत्रता ॥ ७ ॥
कुपुत्रो हृदयायासं सर्व्वदा कुरुते पितुः ।
मातुश्च स्वर्गसंस्थांश्च स्वपितॄन् पातयत्यधः ॥ ८ ॥
सुहृदां नोपकाराय पितॄणाञ्च न तृप्तये ।
पित्रोर्दुःखाय धिग्जन्म तस्य दुष्कृतकर्म्मणः ॥ ९ ॥
धन्यास्ते तनया येषां सर्व्वलोकाभिसम्मताः ।
परोपकारिणः शान्ताः साधुकर्म्मण्यनुव्रताः ॥ १० ॥
अनिर्वृतं तथा मन्दं परलोकपराङ्मुखं ।
नरकाय न सद्गत्यै कुपुत्रालम्बि जन्म नः ॥ ११ ॥
करोति सुहृदां दैन्यमहितानां तथा मुदं ।
अकाले च जरां पित्रोः कुपुत्रः कुरुते ध्रुवं ॥ १२ ॥

मार्कण्डेय उवाच ॥

एवं सोऽत्यन्तदुष्टस्य पुत्रस्य चरितैर्मुनिः ।
दह्यमानमनोवृत्तिर्वृत्तं गर्गमपृच्छत ॥ १३ ॥

ऋतवागुवाच ॥

सुव्रतेन पुरा वेदा गृहीता विधिवन्मया ।
समाप्य वेदान् विधिवत्कृतो दारपरिग्रहः ॥ १४ ॥
सदारेण क्रियाः कार्य्याः श्रौताः स्मार्त्ता वषट्क्रियाः ।
न मे न्यूनाः कृताः काश्चिद्यावदद्य महामुने ॥ १५ ॥
गर्भाधानविधानेन न कामममनुरुन्ध्यता ।
पुत्रार्थं जनितश्चायं पुन्नाम्नो बिभ्यता मुने ॥ १६ ॥

सोऽयं किमात्मदोषेण मम दोषेण वा मुने ।
अस्मद्दुःखावहो जातो दौःशील्याद्बन्धुशोकदः ॥ १७ ॥

गर्ग उवाच ॥

रेवत्यन्ते मुनिश्रेष्ठ जातोऽयं तनयस्तव ।
तेन दुःखाय ते दुष्टे काले यस्मादजायत ॥ १८ ॥
न तेऽपचारो नैवास्य मातुर्नायं कुलस्य ते ।
तस्य दौःशील्यहेतुस्तु रेवत्यन्तमुपागतं ॥ १९ ॥

ऋतवागुवाच ॥

यस्मान्ममैकपुत्त्रस्य रेवत्यन्तसमुद्भवं ।
दौःशील्यमेतत्सा तस्मात्पततामाशु रेवती ॥ २० ॥

मार्कण्डेय उवाच ॥

तेनैवं व्याहृते शापे रेवत्यृक्षं पपात ह ।
पश्यतः सर्व्वलोकस्य विस्मयाविष्टचेतसः ॥ २१ ॥
रेवत्यृक्षञ्च पतितं कुमुदाद्रौ समन्ततः ।
भापयामास सहसा वनकन्दरनिर्झरं ॥ २२ ॥
कुमुदाद्रिश्च तत्पातात् ख्यातो रैवतकोऽभवत् ।
अतीव रम्यः सर्व्वस्यां पृथिव्यां पृथिवीधरः ॥ २३ ॥
तस्यर्क्षस्य तु या कान्तिर्जाता पङ्कजिनीसरः ।
ततो जज्ञे तदा कन्या रूपेणातीव शोभना ॥ २४ ॥
रेवतीकान्तिसम्भूतां तां दृष्ट्वा प्रमुचो मुनिः ।
तस्या नाम चकारेत्थं रेवती नाम भागुरे ॥ २५ ॥
पोषयामास चैवैतां स्वाश्रमाभ्याससम्भवां ।

प्रमुचः स महाभागस्तस्मिन्नेव महीतले ॥ २६ ॥
तान्तु यौवनिनीं दृष्ट्वा कन्यकां रूपशालिनीं ।
स मुनिश्चिन्तयामास कोऽस्या भर्त्ता भवेदिति ॥ २७ ॥
एवं चिन्तयतस्तस्य ययौ कालो महान् मुने ।
न चाससाद सदृशं वरं तस्या महामुनिः ॥ २८ ॥
ततस्तस्या वरं प्रष्टुमग्निं स प्रमुचो मुनिः ।
विवेश वह्निशालां वै प्रष्टारं प्राह हव्यभुक् ॥ २९ ॥
महाबलो महावीर्य्यः प्रियवाग्धर्म्मवत्सलः ।
दुर्गमो नाम भविता भर्त्ता ह्यस्या महीपतिः ॥ ३० ॥

मार्कण्डेय उवाच ॥

अनन्तरञ्च मृगयाप्रसङ्गेनागतो मुने ।
तस्याश्रमपदं धीमान् दुर्गमः स नराधिपः ॥ ३१ ॥
प्रियव्रतान्वयभवो महाबलपराक्रमः ।
पुत्त्रो विक्रमशीलस्य कालिन्दीजठरोद्भवः ॥ ३२ ॥
स प्रविश्याश्रमपदं तां तन्वीं जगतीपतिः ।
अपश्यमानस्तमृषिं प्रियेत्यामन्त्र्य पृष्टवान् ॥ ३३ ॥

राजोवाच ॥

क्व गतो भगवानस्मादाश्रमान्मुनिपुङ्गवः ।
तं प्रणेतुमिहेच्छामि तत् त्वं प्रब्रूहि शोभने ॥ ३४ ॥

मार्कण्डेय उवाच ॥

अग्निशालां गतो विप्रस्तच्छ्रुत्वा तस्य भाषितं ।
प्रियेत्यामन्त्रणञ्चैव निश्चक्राम त्वरान्वितः ॥ ३५ ॥

स ददर्श महात्मानं राजानं दुर्गमं मुनिः ।
नरेन्द्रचिह्नसहितं प्रश्रयावनतं पुरः ॥ ३६ ॥
तस्मिन् दृष्टे ततः-शिष्यमुवाच स तु गौतमं ।
गौतमानीयतां शीघ्रमर्घोऽस्य जगतीपतेः ॥ ३७ ॥
एकस्तावदयं भूपश्चिरकालादुपागतः ।
जामाता च विशेषेण योग्योऽर्घस्य मतो मम ॥ ३८ ॥

मार्कण्डेय उवाच ॥

ततः स चिन्तयामास राजा जामातृकारणं ।
विवेद च न तन्मौनी जगृहेऽर्घञ्च तं नृपः ॥ ३९ ॥
तमासनगतं विप्रो गृहीतार्घं महामुनिः ।
स्वागतं प्राह राजेन्द्रमपि ते कुशलं गृहे ॥ ४० ॥
कोषे बलेऽथ मित्रेषु भृत्यामात्ये नरेश्वर ।
तथात्मनि महाबाहो यत्र सर्व्वं प्रतिष्ठितं ॥ ४१ ॥
पत्नी च ते कुशलिनी यत एवानुतिष्ठति ।
पृच्छाम्यस्यास्ततो नाहं कुशलिन्योऽपरास्तव ॥ ४२ ॥

राजोवाच ॥

त्वत्प्रसादादकुशलं न कचिन्मम सुव्रत ।
जातकौतूहलश्चास्मि मम भार्य्यात्र का मुने ॥ ४३ ॥

ऋषिरुवाच ॥

रेवती सुमहाभागा त्रैलोक्यस्यापि सुन्दरी ।
तव भार्य्या वरारोहा तां त्वं राजन्न वेत्सि किं ॥ ४४ ॥

राजोवाच ॥

सुभद्रां शान्ततनयां कावेरीतनयां विभो ।
सुराष्ट्रजां सुजाताञ्च कदम्बाञ्च वरूथजां ॥ ४५ ॥
विपाठां नन्दिनीञ्चैव वेद्मि भार्य्या गृहे द्विज ।
तिष्ठन्ति मे न भगवन्नेवर्त्तों वेद्मि का न्वियं ॥ ४६ ॥

ऋषिरुवाच ॥

प्रियेति साम्प्रतं येयं त्वयोक्ता वरवर्णिनी ।
किं विस्मृतन्ते भूपाल श्लाघ्येयं गृहिणी तव ॥ ४७ ॥

राजोवाच ॥

सत्यमुक्तं मया किन्तु भावो दुष्टो न मे मुने ।
नात्र कोपं भवान् कर्त्तुमर्हत्यस्मासु याचितः ॥ ४८ ॥

ऋषिरुवाच ॥

तथ्यं ब्रवीषि भूपाल न भावस्तव दूषितः ।
व्याजहार भवानेतद्वह्निना नृप चोदितः ॥ ४९ ॥
मया पृष्टो हुतवहः कोऽस्या भर्त्तेति पार्थिव ।
भविता तेन चाप्युक्तो भवानेवाद्य वै वरः ॥ ५० ॥
तद्गृह्यतां मया दत्ता तुभ्यं कन्या नराधिप ।
प्रियेत्यामन्त्रिता चेयं विचारं कुरुषे कथं ॥ ५१ ॥

मार्कण्डेय उवाच ॥

ततोऽसावभवन्मौनी तेनोक्तः पृथिवीपतिः ।
ऋषिस्तथोद्यतः कर्त्तुं तस्या वैवाहिकं विधिं ॥ ५२ ॥
तमुद्यतं सा पितरं विवाहाय महामुने ।

उवाच कन्या यत्किञ्चित् प्रश्रयावनतानना ॥ ५३ ॥
यदि मे प्रीतिमांस्तात प्रसादं कर्त्तुमर्हसि ।
रेवत्यृक्षे विवाहं मे-तत्करोतु प्रसादितः ॥ ५४ ॥

ऋषिरुवाच ॥

रेवत्यृक्षं न वै भद्रे चन्द्रयोगि व्यवस्थितं ।
अन्यानि सन्ति ऋक्षानि सुभ्रु वैवाहिकानि ते ॥ ५५ ॥

कन्योवाच ॥

तात तेन विना कालो विफलः प्रतिभाति मे ।
विवाहो विफले काले मद्विधायाः कथं भवेत् ॥ ५६ ॥

ऋषिरुवाच ॥

ऋतवागिति विख्यातस्तपस्वी रेवतीं प्रति ।
चकार कोपं क्रुद्धेन तेनर्क्षं विनिपातितं ॥ ५७ ॥
मया चास्मै प्रतिज्ञाता भार्य्येति मदिरेक्षणा ।
न चेच्छसि विवाहं त्वं सङ्कटं नः समागतं ॥ ५८ ॥

कन्योवाच ॥

ऋतवाक् स मुनिस्तात किमेवं तप्तवांस्तपः ।
न त्वया मम तातेन ब्रह्मबन्धोः सुतास्मि किं ॥ ५९ ॥

ऋषिरुवाच ॥

ब्रह्मबन्धोः सुता न त्वं बाले नैव तपस्विनः ।
सुता त्वं मम यो देवान् कर्त्तुमन्यान् समुत्सहे ॥ ६० ॥

कन्योवाच ॥

तपस्वी यदि मे तातस्तत्किमृक्षमिदं दिवि ।

समारोप्य विवाहो मे तदृक्षे क्रियते न तु ॥ ६१ ॥

ऋषिरुवाच ॥

एवं भवतु भद्रन्ते भद्रे प्रीतिमती भव।
आरोपयामीन्दुमार्गे रेवत्यृक्षं कृते तव ॥ ६२ ॥

मार्कण्डेय उवाच ॥

ततस्तपःप्रभावेन रेवत्यृक्षं महामुनिः ।
यथा पूर्व्वन्तथा चक्रे सोमयोगि द्विजोत्तम ॥ ६३ ॥
विवाहश्चैव दुहितुर्विधिवत् मन्त्रयोगिनं ।
निष्पाद्य प्रीतिमान् भूयो जामातारमथाब्रवीत् ॥ ६४ ॥
औद्वाहिकन्ते भूपाल कथ्यतां किं ददाम्यहं ।
दुर्लभ्यमपि दास्यामि ममाप्रतिहतन्तपः ॥ ६५ ॥

राजोवाच ॥

मनोः स्वायम्भुवस्याहमुत्पन्नः सन्ततो मुने ।
मन्वन्तराधिपं पुत्रं त्वत्प्रसादात् वृणोम्यहं ॥ ६६ ॥

ऋषिरुवाच ॥

भविष्यत्येष ते कामो मनुस्त्वत्तनयो महीं ।
सकलां भोक्ष्यते भूप धर्म्मविच्च भविष्यति ॥ ६७ ॥

मार्कण्डेय उवाच ॥

तामादाय ततो भूपः स्वमेव नगरं ययौ ।
तस्मादजायत सुतो रेवत्यां रैवती मनुः ॥ ६८ ॥
समेतः सकलैर्धर्म्मैर्मानवैरपराजितः ।
विज्ञाताखिलशास्त्रार्थो वेदविद्यार्थशास्त्रवित् ॥ ६९ ॥

तस्य मन्वन्तरे देवान् मुनिदेवेन्द्रपार्थिवान् ।
कथ्यमानान्मया ब्रह्मन् निबोध सुसमाहितः ॥ ७० ॥
सुमेधसस्तत्र देवास्तथा भूपतयो द्विज ।
वैकुण्ठश्चामिताभश्च चतुर्द्दश चतुर्द्दश ॥ ७१ ॥
तेषां देवगणानान्तु चतुर्णामपि चेश्वर ।
नाम्ना विभुरभूदिन्द्रः शतयज्ञोपलक्षकः ॥ ७२ ॥
हिरण्यलोमा वेदश्रीरूर्द्धवाहुस्तथापरः ।
वेदबाहुः सुधामा च पर्जन्यश्च महामुनिः ॥ ७३ ॥
वशिष्ठश्च महाभागो वेदवेदान्तपारगः ।
एते सप्तर्षयश्चासन् रैवतस्यान्तरे मनोः ॥ ७४ ॥
बलबन्धुर्महावीर्य्यः सुयष्टव्यस्तथापरः ।
सत्यकाद्यास्तथैवासन् रैवतस्य मनोः सुताः ॥ ७५ ॥
रैवतान्तास्तु मनवः कथिता ये मया तव ।
स्वायम्भुवाश्रया ह्येते स्वारोचिषमृतेर्मनुं ॥ ७६ ॥

इति श्रीमार्कण्डेयपुराणे रैवत मन्वन्तरं समाप्तं ॥ ७५ ॥

॥ षट्सप्ततितमोऽध्याय ॥

मार्कण्डेय उवाच ॥

इत्येतत्कथितं तुभ्यं पञ्च मन्वन्तरं तव ।
चाक्षुषस्य मनोः षष्ठं श्रूयतामिदमन्तरं ॥ १ ॥

अन्यजन्मनि जातोऽसौ चक्षुषः परमेष्ठिनः ।
चाक्षुषत्वमतस्तस्य जन्मन्यस्मिन्नपि द्विज ॥ २ ॥
जातं माता निजोत्सङ्गे स्थितमुल्लाप्य तं पुनः ।
परिष्वजति हार्द्देन पुनरुल्लापयत्यथ ॥ ३ ॥
जातिस्मरः स जातो वै मातुरुत्सङ्गमास्थितः ।
जहास तं तदा माता संक्रुद्धा वाक्यमब्रवीत् ॥ ४ ॥
भीतास्मि किमिदं वत्स हासो यद्वदने तव ।
अकालबोधः संजातः कच्चित्पश्यसि शोभनं ॥ ५ ॥

पुत्र उवाच ॥

मामत्तुमिच्छति पुरो मार्ज्जारी किं न पश्यसि ।
अन्तर्द्धानगता चेयं द्वितीया जातहारिणी ॥ ६ ॥
पुत्त्रप्रीत्या च भवती सहार्द्रा मामवेक्षती ।
उल्लाप्योल्लाप्य बहुशः परिष्वजति मां यतः ॥ ७ ॥
उद्भूतपुलका स्नेहसम्भवास्त्राविलेक्षणा ।
ततो ममागतो हासः शृणु चाप्यत्र कारणं ॥ ८ ॥
स्वार्थे प्रसक्ता मार्ज्जारी प्रसक्तं मामवेक्षते ।
तथान्तर्द्धानगा चैव द्वितीया जातहारिणी ॥ ९ ॥
स्वार्थाय स्निग्धहृदया यथैवैते ममोपरि ।
प्रवृत्ते स्वार्थमास्थाय तथैव प्रतिभासि मे ॥ १० ॥
किन्तु मदुपभोगाय मार्ज्जारी जातहारिणी ।
त्वन्तु क्रमेणोपभोग्यं मत्तः फलमभीप्ससि ॥ ११ ॥
न मां जानासि कोऽप्येष नचैवोपकृतं मया ।

सङ्गतं नातिकालीनं पञ्चसप्तदिनात्मकं ॥ १२ ॥
तथापि स्निह्यसे सास्त्रा परिष्वजसि चाप्यति ।
तातेति वत्स भद्रेति निर्व्यलीकं ब्रवीषि मां ॥ १३ ॥

मातोवाच ॥

न त्वाहमुपकारार्थं वत्स प्रीत्या परिष्वजे ।
न चेदेतद्भवत्प्रीत्यै परित्यक्तास्म्यहं त्वया ॥ १४ ॥
स्वार्थो मया परित्यक्तो यस्त्वत्तो मे भविष्यति ।
इत्युक्त्वा सा तमुत्सृज्य निष्क्रान्ता सूतिकागृहात् ॥ १५ ॥
जडाङ्गवाह्यकरणं शुद्धान्तःकरणात्मकं ।
जहार तं परित्यक्तं सा तदा जातहारिणी ॥ १६ ॥
सा हृत्वा तं तदा बालं विक्रान्तस्य महीभृतः ।
प्रसूतं पत्नीशयने न्यस्य तस्याददे सुतं ॥ १७ ॥
त्वमप्यन्यगृहे नीत्वा गृहीत्वा तस्य चात्मजं ।
तृतीयं भक्षयामास सा क्रमाज्जातहारिणी ॥ १८ ॥
हृत्वा हृत्वा तृतीयन्तु भक्षयत्यतिनिर्घृणा ।
करोत्यनुदिनं सा तु परिवर्त्तन्तथान्ययोः ॥ १९ ॥
विक्रान्तोऽपि ततस्तस्य सुतस्यैव महीपतिः ।
कारयामास संस्कारान्राजन्यस्य भवन्ति ये ॥ २० ॥
आनन्देति च नामास्य पिता चक्रे विधानतः ।
मुदा परमया युक्तो विक्रान्तः स नराधिपः ॥ २१ ॥
कृतोपनयनं तन्तु गुरुराह कुमारकं ।
जनन्याः प्रागुपस्थानं क्रियताञ्चाभिवादनं ॥ २२ ॥

स गुरोस्तद्वचः श्रुत्वा विहस्यैवमथाब्रवीत्।
वन्ध्या मे कतमा माता जननी पालनी नु किं ॥ २३ ॥

गुरुरुवाच ॥

न त्वियं ते महाभाग जनयित्री ह्यथात्मजा।
विक्रान्तस्याग्रमहिषी हैमिनी नाम नामतः ॥ २४ ॥

आनन्द उवाच ॥

इयं जनित्री चैत्रस्य विशालग्रामवासिनः।
विप्राग्र्यबोधपुत्रस्य योऽस्यां जातोऽन्यतो वयं ॥ २५ ॥

गुरुरुवाच ॥

कुतस्त्वं कथयानन्द चैत्रः को वा त्वयोच्यते।
सङ्कटं महदाभाति क्व जातोऽत्र ब्रवीषि किं ॥ २६ ॥

आनन्द उवाच ॥

जातोऽहमवनीन्द्रस्य क्षत्रियस्य गृहे द्विज।
तत्पत्न्यां गिरिभद्रायामादद्दे जातहारिणी ॥ २७ ॥
तयाच मुक्तो हैमिन्या गृहीत्वा च सुतश्च सा।
बोधस्य द्विजमुख्यस्य गृहे नीतवती पुनः ॥ २८ ॥
भक्षयामास च सुतं तस्य बोधद्विजन्मनः।
स तत्र द्विजसंस्कारैः संस्कृतो हैमिनीसुतः ॥ २९ ॥
वयमत्र महाभाग संस्कृता गुरुणा त्वया।
मया तव वचः कार्य्यमुपैमि कतमां गुरो ॥ ३० ॥

गुरुरुवाच ॥

अतीव गहनं वत्स सङ्कटं महदागतं।

न वेद्मि किञ्चिन्मोहेन भ्रमन्तीव हि बुद्धयः ॥ ३१ ॥

आनन्द उवाच ॥

मोहस्यावसरः कोऽत्र जगत्येवं व्यवस्थिते ।
कः कस्य पुत्रो विप्रर्षे को वा कस्य न बान्धवः ॥ ३२ ॥
आरभ्य जन्मनो नृणां सम्बन्धित्वमुपैति यः ।
अन्ये सम्बन्धिनो विप्र मृत्युना संनिवर्त्तिताः ॥ ३३ ॥
अत्रापि जातस्य सतः सम्बन्धो योऽस्य बान्धवैः ।
सोऽप्यस्तमन्ते देहस्य प्रयात्येषोऽखिलक्रमः ॥ ३४ ॥
अतो ब्रवीमि संसारे वसतः को न बान्धवः ।
को वापि सततं बन्धुः किं वो विभ्राम्यते मतिः ॥ ३५ ॥
पितृद्वयं मया प्राप्तमस्मिन्नेव हि जन्मनि ।
मातृद्वयञ्च किञ्चित्रं यदन्यद्देहसम्भवे ॥ ३६ ॥
सोऽहं तपः करिष्यामि त्वया यो ह्यस्य भूपतेः ।
वैशालग्रामतः पुत्रस्तैच आनीयतामिह ॥ ३७ ॥

मार्कण्डेय उवाच ॥

ततः स विस्मितो राजा सभार्य्यः सह बन्धुभिः ।
तस्मान्निवर्त्य ममतामनुमेने वनाय तं ॥ ३८ ॥
चैत्रमानीय तनयं राज्ययोग्यं चकार सः ।
संमान्य ब्राह्मणं येन पुत्रबुद्ध्या स पालितः ॥ ३९ ॥
सोऽप्यानन्दस्तपस्तेपे बाल एव महामनाः ।
कर्म्मणां क्षपणार्थाय विमुक्तेः परिपन्थिनां ॥ ४० ॥
तपस्यन्तं ततस्तञ्च प्राह देवः प्रजापतिः ।

किमर्थं तप्यसे वत्स तपस्तीव्रं वदस्व तत् ॥ ४१ ॥

आनन्द उवाच ॥

आत्मनः शुद्धिकामोऽहं करोमि भगवंस्तपः ।
बन्धाय मम कर्म्माणि यानि तत्क्षपणोन्मुखः ॥ ४२ ॥

ब्रह्मोवाच ॥

क्षीणाधिकारो भवति मुक्तियोग्यो न कर्म्मवान् ।
सत्त्वाधिकारवान् मुक्तिमवाप्स्यति ततो भवान् ॥ ४३ ॥
भवता मनुना भाव्यं षष्ठेन व्रज तत्कुरु ।
अलन्ते तपसा तस्मिन् कृते मुक्तिमवाप्स्यसि ॥ ४४ ॥

मार्कण्डेय उवाच ॥

इत्युक्तो ब्रह्मणा सोऽपि तथेत्युक्त्वा महामतिः ।
तत्कर्म्माभिमुखो यातस्तपसो विरराम ह ॥ ४५ ॥
चाक्षुषेत्याह तं ब्रह्मा तपसो विनिवर्त्तयन् ।
पूर्व्वं नाम्ना बभूवाथ प्रख्यातश्चाक्षुषो मनुः ॥ ४६ ॥
उपयेमे विदर्भां स सुतामुग्रस्य भूभृतः ।
तस्याञ्चोत्पादयामास पुत्रान् प्रख्यातविक्रमान् ॥ ४७ ॥
तस्य मन्वन्तरेशस्य येऽन्तरन्त्रिदशा द्विज ।
ये चर्षयस्तथैवेन्द्रो ये सुताश्चास्य तान् शृणु ॥ ४८ ॥
आर्य्या नाम सुरास्तत्र तेषामेकोऽष्टको गणः ।
प्रख्यातकर्म्मणां विप्र यज्ञे हव्यभुजामयं ॥ ४९ ॥
प्रख्यातबलवीर्य्याणां प्रभामण्डलदुर्दृशां ।
द्वितीयश्च प्रसूताख्यो देवानामष्टको गणः ॥ ५० ॥

तथैवाष्टक एवान्यो भव्याख्यो देवतागणः ।
चतुर्थश्च गणस्तत्र यूथगाख्यस्तथाष्टकः ॥ ५१ ॥
लेखसंज्ञास्तथैवान्ये तत्र मन्वन्तरे द्विज ।
पञ्चमे च गणे देवास्तत्संज्ञा ह्यमृताशिनः ॥ ५२ ॥
शतं क्रतूनामाहृत्य यस्तेषामधिपोऽभवत् ।
मनोजवस्तथैवेन्द्रः संख्यातो यज्ञभागभुक् ॥ ५३ ॥
सुमेधा विरजाश्चैव हविष्मानुन्नतो मधुः ।
अतिनामा सहिष्णुश्च सप्तासन्निति चर्षयः ॥ ५४ ॥
उरुपुरुशतद्युम्नप्रमुखाः सुमहाबलाः ।
चाक्षुषस्य मनोः पुत्राः पृथिवीपतयोऽभवन् ॥ ५५ ॥
एतत्ते कथितं षष्ठं मया मन्वन्तरं द्विज ।
चाक्षुषस्य तथा जन्म चरितञ्च महात्मनः ॥ ५६ ॥
साम्प्रतं वर्त्तते योऽयं नाम्ना वैवस्वतो मनुः ।
सप्तमीयेऽन्तरे तस्य देवाद्यास्तान् शृणुष्व मे ॥ ५७ ॥

इति श्रीमार्कण्डेयपुराणे षष्ठ मन्वन्तरं समाप्तं ॥ ७६ ॥

---

सप्तसप्ततितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

मार्त्तण्डस्य रवेर्भार्य्या तनया विश्वकर्म्मणः ।
संज्ञा नाम महाभागा तस्यां भानुरजीजनत् ॥ १ ॥

मनुं प्रख्यातयशसमनेकज्ञानपारगं ।
विवस्वतः सुतो यस्मात्तस्माद्वैवस्वतस्तु सः ॥ २ ॥
संज्ञा च रविणा दृष्टा निमीलयति लोचने ।
यतस्ततः सरोषोऽर्कः संज्ञां निष्ठुरमब्रवीत् ॥ ३ ॥
मयि दृष्टे सदा यस्मात् कुरुषे नेत्रसंयमं ।
तस्माज्जनिष्यसे मूढे प्रजासंयमनं यमं ॥ ४ ॥

मार्कण्डेय उवाच ॥

ततः सा चपलां दृष्टिं देवी चक्रे भयाकुला ।
विलोलितदृशं दृष्ट्वा पुनराह च तां रविः ॥ ५ ॥
यस्माद्विलोलिता दृष्टिर्मयि दृष्टे त्वयाधुना ।
तस्माद्विलोलां तनयां नदीं त्वं प्रसविष्यसि ॥ ६ ॥

मार्कण्डेय उवाच ॥

ततस्तस्यान्तु संजज्ञे भर्तृशापेन तेन वै ।
यमश्च यमुना चेयं प्रख्याता सुमहानदी ॥ ७ ॥
सापि संज्ञा रवेस्तेजः सेहे दुःखेन भाविनी ।
असहन्ती च सा तेजश्चिन्तयामास वै तदा ॥ ८ ॥
किङ्करोमि क्व गच्छामि क्व गतायाश्च निर्वृतिः ।
भवेन्मम कथं भर्त्ता कोपमर्कश्च नेष्यति ॥ ९ ॥
इति संचिन्त्य बहुधा प्रजापतिसुता तदा ।
बहु मेने महाभागा पितृसंश्रयमेव सा ॥ १० ॥
ततः पितृगृहे गन्तुं कृतबुद्धिर्यशस्विनी ।
छायामयीमात्मतनुं निर्म्ममे दयितां रवेः ॥ ११ ॥

तांश्चोवाच त्वया वेश्मन्यत्र भानोर्यथा मया ।
तथा सम्यगपत्येषु वर्त्तितव्यं यथा रवौ ॥ १२ ॥
पृष्टयापि न वाच्यन्ते तथैतद्गमनं मम ।
सैवास्मि नाम संज्ञेति वाच्यमेतत्सदा वचः ॥ १३ ॥

छायासंज्ञोवाच ॥

आकेशग्रहणाद्देवि आशापाश्च वचस्तव ।
करिष्ये कथयिष्यामि वृत्तन्तु शापकर्षणात् ॥ १४ ॥
इत्युक्ता सा तदा देवी जगाम भवनं पितुः ।
ददर्श तत्र त्वष्टारं तपसा धूतकल्मषं ॥ १५ ॥
बहुमानाच्च तेनापि पूजिता विश्वकर्म्मणा ।
तस्थौ पितृगृहे सा तु कञ्चित्कालमनिन्दिता ॥ १६ ॥
ततस्तां प्राह चार्व्वङ्गीं पिता नातिचिरोषितां ।
स्तुत्वा च तनयां प्रेमबहुमानपुरःसरं ॥ १७ ॥
त्वान्तु मे पश्यतो वत्से दिनानि सुबहून्यपि ।
मुहूर्त्तार्द्धसमानि स्युः किन्तु धर्म्मो विलुप्यते ॥ १८ ॥
बान्धवेषु चिरं वासो नारीणां न यशस्करः ।
मनोरथो बान्धवानां नार्य्या भर्तृगृहे स्थितिः ॥ १९ ॥
सा त्वं त्रैलोक्यनाथेन भर्त्रा सूर्य्येण सङ्गता ।
पितृगेहे चिरं कालं वस्तुं नार्हसि पुत्रिके ॥ २० ॥
सा त्वं भर्तृगृहं गच्छ तुष्टोऽहं पूजितासि मे ।
पुनरागमनं कार्य्यं दर्शनाय शुभे मम ॥ २१ ॥

मार्कण्डेय उवाच ॥

इत्युक्ता सा तदा पित्रा तथेत्युक्त्वा च सा मुने ।
संपूजयित्वा पितरं जगामाथोत्तरान्कुरून् ॥ २२ ॥
सूर्य्यतापमनिच्छन्ती तेजसस्तस्य बिभ्यती ।
तपश्चचार तत्रापि वडवारूपधारिणी ॥ २३ ॥
संज्ञेयमिति मन्वानो द्वितीयायामहस्पतिः ।
जनयामास तनयौ कन्याञ्चैकां मनोरमां ॥ २४ ॥
छायासंज्ञा त्वपत्येषु यथा स्वेष्वति वत्सला ।
तथा न संज्ञा कन्यायां पुत्रयोश्चान्ववर्त्तत ॥ २५ ॥
लालनाद्युपभोगेषु विशेषमनुवासरं ।
मनुस्तत्क्षान्तवानस्या यमस्तस्या न चक्षमे ॥ २६ ॥
ताडनाय च वै कोपात्पादस्तेन समुद्यतः ।
तस्याः पुनः क्षान्तिमता न तु देहे निपातितः ॥ २७ ॥
ततः शशाप तं कोपाच्छायासंज्ञा यमं द्विज ।
किञ्चित्प्रस्फुरमाणोष्ठी विचलत्पाणिपल्लवा ॥ २८ ॥
पितुः पत्नीममर्य्यादं यन्मां तर्ज्जयसे पदा ।
भुवि तस्मादयं पादस्तवाद्यैव पतिष्यति ॥ २९ ॥

मार्कण्डेय उवाच ॥

इत्याकर्ण्य यमः शापं मात्रा दत्तं भयातुरः ।
अभ्येत्य पितरं प्राह प्रणिपातपुरःसरं ॥ ३० ॥

यम उवाच ॥

तातैतन्महदाश्चर्य्यं न दृष्टमिति केनचित् ।

माता वात्सल्यमुत्सृज्य शापं पुत्रे प्रयच्छति ॥ ३१ ॥
यथा मनुर्ममाचष्टे नेयं माता तथा मम ।
विगुणेष्वपि पुत्रेषु न माता विगुणा भवेत् ॥ ३२ ॥

मार्कण्डेय उवाच ॥

यमस्यैतद्वचः श्रुत्वा भगवांस्तिमिरापहः ।
छायासंज्ञां समाहूय पप्रच्छ क्व गतेति सा ॥ ३३ ॥
सा चाह तनया त्वष्टुरहं संज्ञा विभावसो ।
पत्नी तव त्वयापत्यान्येतानि जनितानि मे ॥ ३४ ॥
इत्थं विवस्वतः सा तु बहुशः पृच्छतो यदा ।
नाचचक्षे ततः क्रुद्धो भास्वांस्तां शप्तुमुद्यतः ॥ ३५ ॥
ततः सा कथयामास यथा वृत्तं विवस्वतः ।
विदितार्थश्च भगवान् जगाम त्वष्टुरालयं ॥ ३६ ॥
ततः स पूजयामास तदा त्रैलोक्यपूजितं ।
भास्वन्तं परया भक्त्या निजगेहमुपागतं ॥ ३७ ॥
संज्ञां पृष्टस्तदा तस्मै कथयामास विश्वकृत् ।
आगतैवेह मे वेश्म भवतः प्रेषितेति वै ॥ ३८ ॥
दिवाकरः समाधिस्थो वडवारूपधारिणीं ।
तपश्चरन्तीं ददृशे उत्तरेषु कुरुष्वथ ॥ ३९ ॥
सौम्यमूर्त्तिः शुभाकारो मम भर्त्ता भवेदिति ।
अभिसन्धिञ्च तपसो बुबुधेऽस्या दिवाकरः ॥ ४० ॥
शातनं तेजसो मेऽद्य क्रियतामिति भास्करः ।
तं चाह विश्वकर्म्माणं संज्ञायाः पितरं द्विज ॥ ४१ ॥

संवत्सरभ्रमेस्तस्य विश्वकर्म्मा रवेस्ततः ।
तेजसः शातनञ्चक्रे स्तूयमानश्च दैवतैः ॥ ४२ ॥

इति श्रीमार्कण्डेयपुराणे वैवस्वत मन्वन्तरे ॥ ७७ ॥

अष्टसप्ततितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

ततस्तं तुष्टुवुर्देवास्तथा देवर्षयो रविं ।
वाग्भिरीड्यमशेषस्य त्रैलोक्यस्य समागताः ॥ १ ॥

देवा ऊचुः ॥

नमस्ते ऋक्स्वरूपाय सामरूपाय ते नमः ।
यजुःस्वरूपरूपाय साम्नान्धामवते नमः ॥ २ ॥
ज्ञानैकधामभूताय निर्धूततमसे नमः ।
शुद्धज्योतिःस्वरूपाय विशुद्धायामलात्मने ॥ ३ ॥
वरिष्ठाय वरेण्याय परस्मै परमात्मने ।
नमोऽखिलजगद्व्यापिस्वरूपायात्ममूर्त्तये ॥ ४ ॥
इदं स्तोत्रवरं रम्यं श्रोतव्यं श्रद्धया नरैः ।
शिष्यो भूत्वा समाधिस्थो दत्वा देयं गुरोरपि ॥ ५ ॥
न शून्यभूतैः श्रोतव्यमेतत्तु सफलं भवेत् ।
सर्व्वकारणभूताय निष्ठायै ज्ञानचेतसां ॥ ६ ॥
नमः सूर्य्यस्वरूपाय प्रकाशात्मस्वरूपिणे ।
भास्कराय नमस्तुभ्यं तथा दिनकृते नमः ॥ ७ ॥

सर्व्वरीहेतवे चैव सन्ध्याज्योत्स्नाकृते नमः ।
त्वं सर्व्वमेतद्भगवान् जगदुद्भ्रमता त्वया ॥ ८ ॥
भ्रमत्याविद्धमखिलं ब्रह्माण्डं सचराचरं ।
त्वदंशुभिरिदं स्पृष्टं सर्व्वं सञ्जायते शुचि ॥ ९ ॥
क्रियते त्वत्करैःस्पर्शाज्जलादीनां पवित्रता ।
होमदानादिको धर्म्मो नोपकाराय जायते ॥ १० ॥
तावद्यावन्न संयोगि जगदेतत्त्वदंशुभिः ।
ऋचस्ते सकला ह्येता यजूंष्येतानि चान्यतः ॥ ११ ॥
सकलानि च सामानि निपतन्ति त्वदङ्गतः ।
ऋङ्मयस्त्वं जगन्नाथ त्वमेव च यजुर्मयः ॥ १२ ॥
यतः साममयश्चैव ततो नाथ त्रयीमय ।
त्वमेव ब्रह्मणो रूपं परञ्चापरमेव च ॥ १३ ॥
मूर्त्तामूर्त्तस्तथा सूक्ष्मः स्थूलरूपस्तथा स्थितः ।
निमेषकाष्ठादिमयः कालरूपः क्षयात्मकः ॥
प्रसीद स्वेच्छया रूपं स्वतेजःशमनं कुरु ॥ १४ ॥

मार्कण्डेय उवाच ॥

एवं संस्तूयमानस्तु देवैर्देवर्षिभिस्तथा ।
मुमोच स्वं तदा तेजस्तेजसां राशिरव्ययः ॥ १५ ॥
यत्तस्य ऋङ्मयं तेजो भविता तेन मेदिनी ।
यजुर्मयेनापि दिवं स्वर्गः साममयं रवेः ॥ १६ ॥
शातितास्तेजसो भागा ये त्वष्ट्रा दश पञ्च च ।
त्वष्ट्रैव तेन सर्व्वस्य कृतं शूलं महात्मना ॥ १७ ॥

चक्रं विष्णोर्वसूनाञ्च शङ्करस्य सुदारुणा ।
पावकस्य तथा शक्तिः शिविका धनदस्य च ॥ १८ ॥
अन्येषाञ्च सुरारीणामस्त्राण्युग्राणि यानि वै ।
यक्षविद्याधराणाञ्च तानि चक्रे स विश्वकृत् ॥ १९ ॥
ततश्च षोडशं भागं बिभर्त्ति भगवान् विभुः ।
तत्तेजः पञ्चदशधा शातितं विश्वकर्म्मणा ॥ २० ॥
ततोऽश्वरूपधृग्भानुरुत्तरानगमत्कुरून् ।
ददृशे तत्र संज्ञाञ्च वडवारूपधारिणीं ॥ २१ ॥
सा च दृष्ट्वा तमायान्तं परपुंसो विशङ्कया ।
जगाम संमुखं तस्य पृष्ठरक्षणतत्परा ॥ २२ ॥
ततश्च नासिकायोगं तयोस्तत्र समेतयोः ।
नासत्यदस्रौ तनयावश्वीवक्त्रविनिर्गतौ ॥ २३ ॥
रेतसोऽन्ते च रेवन्तः खड्गी चर्म्मी तनुत्रधृक् ।
अश्वारूढः समुद्भूतो वाणतूणसमन्वितः ॥ २४ ॥
ततः स्वरूपमतुलं दर्शयामास भानुमान् ।
तस्यैषा च समालोक्य स्वरूपं मुदमाददे ॥ २५ ॥
स्वरूपधारिणीञ्चेमामानिनाय निजाश्रयं ।
संज्ञां भार्य्यां प्रीतिमतीं भास्करो वारितस्करः ॥ २६ ॥
ततः पूर्व्वसुतो योऽस्याः सोऽभूद्वैवस्वतो मनुः ।
द्वितीयश्च यमः शापाद्धर्म्मदृष्टिरभूत्सुतः ॥ २७ ॥
तृतीयो मां समादाय पादतोऽस्य महीतले ।
पतिष्यतीति शापान्तं तस्य चक्रे पिता स्वयं ॥ २८ ॥

धर्म्मदृष्टिर्यतश्चासौ समो मित्रे तथाऽहिते ।
ततो नियोगं तं याम्ये चकार तिमिरापहः ॥ २९ ॥
यमुना च नदी जज्ञे कलिन्दान्तरवाहिनी ।
अश्विनौ देवभिषजौ कृतौ पित्रा महात्मना ॥ ३० ॥
गुह्यकाधिपतित्वे च रेवन्तोऽपि नियोजितः ।
छायासंज्ञासुतानाञ्च नियोगः श्रूयतां मम ॥ ३१ ॥
पूर्व्वजस्य मनोस्तुल्यश्छायासंज्ञासुतोऽग्रजः ।
ततः सावर्णिकीं संज्ञामवाप तनयो रवेः ॥ ३२ ॥
भविष्यति मनुः सोऽपि बलिरिन्द्रो यदा तदा ।
शनैश्चरो ग्रहाणाञ्च मध्ये पित्रा नियोजितः ॥ ३३ ॥
तयोस्तृतीया या कन्या तपती नाम सा कुरुं ।
नृपात्संवरणात्पुत्त्रमवाप मनुजेश्वरं ॥ ३४ ॥
तस्य वैवस्वतस्याहं मनोः सप्तममन्तरं ।
कथयामि सुतान् भूपान्नृषीन् देवान् सुराधिपं ॥ ३५ ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे वैवस्वतोत्पत्तिर्नाम ॥ ७८

ऊनाशीतितमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ।
भृगवोऽङ्गिरसश्चाष्टौ यत्र देवगणाः स्मृताः ॥ १ ॥

आदित्या वसवो रुद्रा विज्ञेयाः कश्यपात्मजाः ।
साध्याश्च वसवो विश्वे धर्म्मपुत्त्रगणास्त्रयः ॥ २ ॥
भृगोस्तु भृगवो देवाः पुत्त्रा ह्यङ्गिरसः सुताः ।
एष सर्गश्च मारीचो विज्ञेयः साम्प्रताधिपः ॥ ३ ॥
ऊर्ज्जस्वी नाम चैवेन्द्रो महात्मा यज्ञभागभुक् ।
अतीता नागता ये च वर्त्तन्ते साम्प्रतञ्च ये ॥ ४ ॥
सर्व्वे ते त्रिदशेन्द्रास्तु विज्ञेयास्तुल्यलक्षणाः ।
सहस्राक्षाः कुलिशिनः सर्व्व एव पुरन्दराः ॥ ५ ॥
मघवन्तो वृषाः सर्व्वे शृङ्गिनो गजगामिनः ।
ते शतक्रतवः सर्व्वे भूताभिभवतेजसः ॥ ६ ॥
धर्म्माद्यैः कारणैः शुद्धैराधिपत्यगुणान्विताः ।
भूतभव्यभवन्नाथाः शृणु चैतत्त्रयं द्विज ॥ ७ ॥
भूर्लोकोऽयं स्मृता भूमिरन्तरीक्षं दिवः स्मृतं ।
दिव्याख्यश्च तथा स्वर्गस्त्रैलोक्यमिति गद्यते ॥ ८ ॥
अत्रिश्चैव वशिष्ठश्च काश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥ ९ ॥
तथैव पुत्त्रो भगवानृचीकस्य महात्मनः ।
जमदग्निस्तु सप्तैते मुनयोऽत्र तथान्तरे ॥ १० ॥
इक्ष्वाकुर्नाभगश्चैव धृष्टशर्म्मातिरेव च ।
नरिष्यन्तश्च विख्यातो नाभगो दिष्ट एव च ॥ ११ ॥
करूषश्च पृषध्रश्च वसुमान् लोकविश्रुतः ।
मनोर्वैवस्वतस्यैते नव पुत्त्राः प्रकीर्त्तिताः ॥ १२ ॥

वैवस्वतमिदं ब्रह्मन् कथितन्ते मयान्तरं ।
अस्मिन् श्रुते नरः सद्यः पठिते चैव सत्तम ॥
मुच्यते पातकैः सर्व्वैः पुण्यञ्च महदश्नुते ॥ १३ ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे वैवस्वतकीर्त्तनं ॥ ७९ ॥

अशीतितमोऽध्यायः ॥



क्रौष्टुकिरुवाच ॥

स्वायम्भुवाद्याः कथिताः सप्तैते मनवो मया ।
तदन्तरेषु ये देवा राजानो मनयस्तथा ॥ १ ॥
अस्मिन् कल्पे सप्त येऽन्ये भविष्यन्ति महामुने ।
मनवस्तान् समाचक्ष्व ये च देवादयश्च ये ॥ २ ॥

मार्कण्डेय उवाच ॥

कथितस्तव सावर्णिश्छायासंज्ञासुतश्च यः ।
पूर्व्वजस्य मनोस्तुल्यः स मनुर्भविताष्टमः ॥ ३ ॥
रामो व्यासो गालवश्च दीप्तिमान् कृप एव च ।
ऋष्यशृङ्गस्तथा द्रोणिस्तत्र सप्तर्षयोऽभवन् ॥ ४ ॥
सुतपाश्चामिताभाश्च मुख्याश्चैव त्रिधा सुराः ।
विंशकः कथिताश्चैषां त्रयाणां त्रिगणो गणः ॥ ५ ॥
तपस्तपश्च शक्रश्च द्युतिर्ज्योतिः प्रभाकरः ।
प्रभासो दयितो धर्म्मस्तेजोरश्मिश्च वक्रतुः ॥ ६ ॥

इत्यादिकस्तु सुतपा देवानां विंशको गणः ।
प्रभुर्विभुर्विभासाद्यस्तथान्यो विंशको गणः ॥ ७ ॥
सुराणाममितानान्तु तृतीयमपि मे शृणु ।
दमो दान्तो ऋतः सोमो वित्ताद्याश्चैव विंशतिः ॥ ८ ॥
मुख्या ह्येते समाख्याता देवा मन्वन्तराधिपाः ।
मारीचस्यैव ते पुत्राः काश्यपस्य प्रजापतेः ॥ ९ ॥
भविष्याश्च भविष्यन्ति सावर्णस्यान्तरे मनोः ।
तेषामिन्द्रो भविष्यस्तु बलिर्वैरोचनिर्मुने ॥ १० ॥
पाताल आस्ते योऽद्यापि दैत्यः समयबन्धनः ।
विरजाश्चार्व्ववीरश्च निर्म्मोहः सत्यवाक् कृतिः ॥
विष्णवाद्याश्चैव तनयाः सावर्णस्य मनोर्नृपाः ॥ ११ ॥

इति श्रीमार्कण्डेयपुराणे सावर्णके ॥ ८० ॥

एकाशीतितमोऽध्यायः ॥



# देवीमाहात्म्यारम्भः ॥

ओं नमश्चण्डिकायै ॥

मार्कण्डेय उवाच ॥

सावर्णिः सूर्य्यतनयो यो मनुः कथ्यतेऽष्टमः ।
निशामय तदुत्पत्तिं विस्तराद्गदतो मम ॥ १ ॥
महामायानुभावेन यथा मन्वन्तराधिपः ।
स बभूव महाभागः सावर्णिस्तनयो रवेः ॥ २ ॥
स्वारोचिषेऽन्तरे पूर्व्वं चैत्रवंशसमुद्भवः ।
सुरथो नाम राजाऽभूत्समस्ते क्षितिमण्डले ॥ ३ ॥
तस्य पालयतः सम्यक् प्रजाः पुत्त्रानिवौरसान् ।
बभूवुः शत्रवो भूपाः कोलाविध्वंसिनस्तथा ॥ ४ ॥
तस्य तैरभवद्युद्धमतिप्रबलदण्डिनः ।
न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्ज्जितः ॥ ५ ॥
ततः स्वपुरमायातो निजदेशाधिपोऽभवत् ।
आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः ॥ ६ ॥
आमात्यैर्बलिभिर्दुष्टैर्दुर्ब्बलस्य दुरात्मभिः ।
कोषो बलञ्चापहृतं तत्रापि स्वपुरे ततः ॥ ७ ॥
ततो मृगयाव्याजेन हृतस्वाम्यः स भूपतिः ।
एकाकी हयमारुह्य जगाम गहनं वनं ॥ ८ ॥

स तत्राश्रममद्राक्षीद्द्विजवर्य्यस्य मेधसः ।
प्रशान्तश्वापदाकीर्णं मुनिशिष्योपशोभितं ॥ ९ ॥
तस्थौ कञ्चित्स कालञ्च मुनिना तेन सत्कृतः ।
इतश्चेतश्च विचरंस्तस्मिन्मुनिवराश्रमे ॥ १० ॥
सोऽचिन्तयत्तदा तत्र ममत्वाकृष्टचेतनः ।
मत्पूर्व्वैः पालितं पूर्व्वं मया हीनं पुरं हि तत् ॥
मद्भृत्यैस्तैरसद्वृत्तैर्धर्म्मतः पाल्यते न वा ॥ ११ ॥
न जाने स प्रधानो मे शूरहस्ती सदामदः ।
मम वैरिवशं यातः कान् भोगानुपलप्स्यते ॥ १२ ॥
ये ममानुगता नित्यं प्रसादधनभोजनैः ।
अनुवृत्तिं ध्रुवं तेऽद्य कुर्व्वन्त्यन्यमहीभृतां ॥ १३ ॥
असम्यग्व्ययशीलैस्तैः कुर्व्वद्भिः सततं व्ययं ।
सञ्चितः सोऽतिदुःखेन क्षयं कोषो गमिष्यति ॥ १४ ॥
एतच्चान्यच्च सततं चिन्तयामास पार्थिवः ।
तत्र विप्राश्रमाभ्यासे वैश्यमेकं ददर्श सः ॥ १५ ॥
स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ।
सशोक इव कस्मात्त्वं दुर्म्मना इव लक्ष्यसे ॥ १६ ॥
इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदितं ।
प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपं ॥ १७ ॥
समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले ।
पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ॥ १८ ॥
विहीनश्च धनैर्दारैः पुत्रैरादाय मे धनं ।

वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः १९ ॥
सोऽहं न वेद्मि पुत्राणां कुशलाकुशलात्मिकां
प्रवृत्तिं स्वजनानाञ्च दाराणाञ्चात्र संस्थित ॥ २० ॥
किन्नु तेषां गृहे क्षेममक्षेमं किन्नु साम्प्रतं ।
कथन्ते किन्नु सद्वृत्ता दुर्वृत्ताः किन्नु मे सुताः ॥ २१ ॥

राजोवाच ॥

यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्धनैः ।
तेषु किं भवतः स्नेहमनुबध्नाति मानसं ॥ २२ ॥

वैश्य उवाच ॥

एवमेतद्यथा प्राह भवानस्मद्गतं वचः ।
किं करोमि न बध्नाति मम निष्ठुरतां मनः ॥ २३ ॥
यैः सन्त्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ।
पतिस्वजनहार्दञ्च हार्दि तेष्वेव मे मनः ॥ २४ ॥
किमेतन्नाभिजानामि जानन्नपि महामते ।
यत्प्रेमप्रवणञ्चित्तं विगुणेष्वपि बन्धुषु ॥ २५ ॥
तेषां कृते मे निःश्वासा दौर्म्मनस्यञ्च जायते ।
करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरं ॥ २६ ॥

मार्कण्डेय उवाच ॥

ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ।
समाधिर्नाम वैश्योऽसौ स च पार्थिवसत्तमः ॥ २७ ॥
कृत्वा तु तौ यथान्यायं तथार्हन्तेन संविदं ।
उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥ २८ ॥

राजोवाच ॥

भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् ।
दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना ॥ २९ ॥
ममत्वं मम राज्यस्य राज्याङ्गेष्वखिलेष्वपि ।
जानतोऽपि यथाज्ञस्य किमेतन्मुनिसत्तम ॥ ३० ॥
अयञ्च निकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः ।
स्वजनेन च संत्यक्तस्तेषु हार्दी तथाप्यति ॥ ३१ ॥
एवमेष तथाहञ्च द्वावप्यत्यन्तदुःखितौ ।
दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ॥ ३२ ॥
तत्किन्नैतन्महाभाग यन्मोहो ज्ञानिनोरपि ।
ममास्य च भवत्येषा विवेकान्धस्य मूढता ॥ ३३ ॥

ऋषिरुवाच ॥

ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे ।
विषयश्च महाभाग याति चैवं पृथक् पृथक् ॥ ३४ ॥
दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथापरे ।
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥ ३५ ॥
ज्ञानिनो मनुजाः सत्यं किन्तु ते न हि केवलं ।
यतो हि ज्ञानिनः सर्व्वे पशुपक्षिमृगादयः ॥ ३६ ॥
ज्ञानञ्च तन्मनुष्याणां यत्तेषां मृगपक्षिणां ।
मनुष्याणाञ्च यत्तेषां तुल्यमन्यत्तथोभयोः ॥ ३७ ॥
ज्ञानेऽपि सति पश्यैतान् पतगाञ्छावचञ्चुषु ।
कणमोक्षादृतान्मोहात् पीड्यमानानपि क्षुधा ॥ ३८ ॥

मानुषा मनुजव्याघ्र साभिलाषाः सुतान् प्रति ।
लोभात्प्रत्युपकाराय नन्वेते किं न पश्यसि ॥ ३९ ॥
तथापि ममतावर्त्त-मोहगर्त्ते निपातिताः ।
महामायाप्रभावेन संसारस्थितिकारिणः ॥ ४० ॥
तन्नात्र विस्मयः कार्य्यो योगनिद्रा जगत्पतेः ।
महामाया हरेश्चैतत्तया संमोह्यते जगत् ॥ ४१ ॥
ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ ४२ ॥
तया विसृज्यते विश्वं जगदेतच्चराचरं ।
सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥ ४३ ॥
सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ।
संसारबन्धहेतुश्च सैव सर्व्वेश्वरेश्वरी ॥ ४४ ॥

राजोवाच ॥

भगवन् का हि सा देवी महामायेति यां भवान् ।
ब्रवीति कथमुत्पन्ना सा कर्म्मास्याश्च किं द्विज ॥ ४५ ॥
यत्स्वभावा च सा देवी यत्स्वरूपा यदुद्भवा ।
तत्सर्व्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ॥ ४६ ॥

ऋषिरुवाच ॥

नित्यैव सा जगन्मूर्त्तिस्तया सर्व्वमिदं ततं ।
तथापि तत्समुत्पत्तिर्ब्बहुधा श्रूयतां मम ॥ ४७ ॥
देवानां कार्य्यसिद्ध्यर्थमाविर्भवति सा यदा ।
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥ ४८ ॥

योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते।
आस्तीर्य्य शेषमभजत् कल्पान्ते भगवान् प्रभुः॥ ४९॥
तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ।
विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ॥ ५०॥
स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः।
दृष्ट्वा तावसुरौ चोग्रौ प्रसुप्तञ्च जनार्द्दनं॥ ५१॥
तुष्टाव योगनिद्रान्तामेकाग्रहृदयस्थितः।
विबोधनार्थाय हरेर्हरिनेत्रकृतालयां॥ ५२॥
विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीं।
निद्रां भगवतीं विष्णोरतुलान्तेजसः प्रभुः॥ ५३॥

ब्रह्मोवाच॥

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका।
सुधा त्वमक्षरे नित्ये त्रिधामात्रात्मिका स्थिता॥ ५४॥
अर्द्धमात्रा स्थिता नित्या यानुच्चार्य्याविशेषतः।
त्वमेव सा त्वं सावित्री त्वं देवी जननी परा॥ ५५॥
त्वयैव धार्य्यते सर्व्वं त्वयैतत्सृज्यते जगत्।
त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्व्वदा॥ ५६॥
विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने।
तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये॥ ५७॥
महाविद्या महामाया महामेधा महास्मृतिः।
महामोहा च भवती महादेवी महासुरी॥ ५८॥
प्रकृतिस्त्वञ्च सर्व्वस्य गुणत्रयविभाविनी।

कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ५९ ॥
त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ।
लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥ ६० ॥
खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शङ्खिनी चापिनी बाणभुसुण्डीपरिघायुधा ॥ ६१ ॥
सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ।
परापराणां परमा त्वमेव परमेश्वरी ॥ ६२ ॥
यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ।
तस्य सर्व्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ॥ ६३ ॥
यया त्वया जगत्स्रष्टा जगत्पातात्ति यो जगत् ।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ ६४ ॥
विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् ॥ ६५ ॥
सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ।
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ ६६ ॥
प्रबोधञ्च जगत्स्वामी नीयतामच्युतो लघु ।
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥ ६७ ॥

ऋषिरुवाच ॥

एवं स्तुता तदा देवी तामसी तत्र वेधसा ।
विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ ॥ ६८ ॥
नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः ।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥ ६९ ॥

उत्तस्थौ च जगन्नाथस्त्वया मुक्तो जनार्द्दनः।
एकार्णवे हि शयनात्ततः स ददृशे च तौ॥ ७०॥
मधुकैटभौ दुरात्मानावतिवीर्य्यपराक्रमौ।
क्रोधरक्तेक्षणावत्तुं ब्रह्माणं जनितोद्यमौ॥ ७१॥
समुत्थाय ततस्ताभ्यां युयुधे भगवान् हरिः।
पञ्च वर्षसहस्राणि बाहुप्रहरणो विभुः॥ ७२॥
तावप्यतिबलोन्मत्तौ महामायाविमोहितौ।
उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवं॥ ७३॥

भगवानुवाच॥

भवेतामद्य मे तुष्टौ मम बध्यावुभावपि।
किमन्येन वरेणात्र एतावद्धि वृतं मम॥ ७४॥

ऋषिरुवाच॥

वञ्चिताभ्यामिति तदा सर्व्वमापोमयं जगत्।
विलोक्य ताभ्यां गदितो भगवान् कमलेक्षणः॥
आवां जहि न यत्रोर्व्वी सलिलेन परिप्लुता॥ ७५॥

ऋषिरुवाच॥

तथेत्युक्त्वा भगवता शङ्खचक्रगदाभृता।
कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः॥ ७६॥
एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयं।
प्रभावमस्या देव्यास्तु भूयः शृणु वदामि ते॥ ७७॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये मधुकैटभवधः॥ ८१॥

ह्यशीतितमोऽध्यायः ॥

ऋषिरुवाच ॥

देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा ।
महिषेऽसुराणामधिपे देवानाञ्च पुरन्दरे ॥ १ ॥
तत्रासुरैर्महावीर्य्यैर्देवसैन्यं पराजितं ।
जित्वा च सकलान्देवानिन्द्रोऽभून्महिषासुरः ॥ २ ॥
ततः पराजिता देवाः पद्मयोनिं प्रजापतिं ।
पुरस्कृत्य गतास्तत्र यत्रेशगरुडध्वजौ ॥ ३ ॥
यथा वृत्तन्तयोस्तद्वन्महिषासुरचेष्टितं ।
त्रिदशाः कथयामासुर्देवाभिभवविस्तरं ॥ ४ ॥
सूर्य्येन्द्राग्न्यनिलेन्दूनां यमस्य वरुणस्य च ।
अन्येषाञ्चाधिकारान् स स्वयमेवाधितिष्ठति ॥ ५ ॥
स्वर्गान्निराकृताः सर्व्वे तेन देवगणा भुवि ।
विचरन्ति यथा मर्त्या महिषेण दुरात्मना ॥ ६ ॥
एतद्वः कथितं सर्व्वममरारिविचेष्टितं ।
शरणञ्च प्रपन्नाः स्मो बधस्तस्य विचिन्त्यतां ॥ ७ ॥
इत्थं निशम्य देवानां वचांसि मधुसूदनः ।
चकार कोपं शम्भुश्च भ्रुकुटिकुटिलाननौ ॥ ८ ॥
ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः ।
निश्चक्राम महत्तेजो ब्रह्मणः शङ्करस्य च ॥ ९ ॥

अन्येषाञ्चैव देवानां शक्रादीनां शरीरतः।
निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत॥ १०॥
अतीव तेजसः कूटं ज्वलन्तमिव पर्व्वतं।
ददृशुस्ते सुरास्तत्र ज्वालाव्याप्तदिगन्तरं॥ ११॥
अतुलन्तत्र तत्तेजः सर्व्वदेवशरीरजं।
एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा॥ १२॥
यदभूच्छाम्भवन्तेजस्तेनाजायत तन्मुखं।
याम्येन चाभवन् केशा बाहवो विष्णुतेजसा॥ १३॥
सौम्येन स्तनयोर्युग्मं मध्यञ्चैन्द्रेण चाभवत्।
वारुणेन च जङ्घोरू नितम्बस्तेजसा भुवः॥ १४॥
ब्रह्मणस्तेजसा पादौ तदङ्गुल्योऽर्कतेजसा।
वसूनाञ्च कराङ्गुल्यः कौवेरेण च नासिका॥ १५॥
तस्यास्तु दन्ताः सम्भूताः प्राजापत्येन तेजसा।
नयनत्रितयं जज्ञे तथा पावकतेजसा॥ १६॥
भ्रुवौ च सन्ध्ययोस्तेजः श्रवणावनिलस्य च।
अन्येषाञ्चैव देवानां सम्भवस्तेजसां शिवा॥ १७॥
ततः समस्तदेवानां तेजोराशिसमुद्भवां।
तां विलोक्य मुदं प्रापुरमरा महिषार्द्दिताः॥ १८॥
शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकधृक्।
चक्रञ्च दत्तवान् कृष्णः समुत्पाद्य स्वचक्रतः॥ १९॥
शङ्खञ्च वरुणः शक्तिं ददौ तस्यै हुताशनः।
मारुतो दत्तवांश्चापं बाणपूर्णे तथेषुधी॥ २०॥

वज्रमिन्द्रः समुत्पाद्य कुलिशादमराधिपः ।
ददौ तस्यै सहस्राक्षो घण्टामैरावताद्गजात् ॥ २१ ॥
कालदण्डाद्यमो दण्डं पाशञ्चाम्बुपतिर्ददौ ।
प्रजापतिश्चाक्षमालान्ददौ ब्रह्मा कमण्डलुं ॥ २२ ॥
समस्तरोमकूपेषु निजरश्मीन्दिवाकरः ।
कालश्च दत्तवान् खड्गं तस्याश्चर्म्म च निर्म्मलं ॥ २३ ॥
क्षीरोदश्चामलं हारमजरे च तथाम्बरे ।
चूडामणिन्तथा दिव्यं कुण्डले कटकानि च ॥ २४ ॥
अर्द्धचन्द्रं तथा शुभ्रं केयूरान् सर्व्वबाहुषु ।
नूपुरौ विमलौ तद्वद्ग्रैवेयकमनुत्तमं ॥ २५ ॥
अङ्गुरीयकरत्नानि समस्तास्वङ्गुलीषु च ।
विश्वकर्म्मा ददौ तस्यै परशुञ्चातिनिर्म्मलं ॥ २६ ॥
अस्त्राण्यनेकरूपाणि तथाभेद्यञ्च दंशनं ।
अम्लानपङ्कजां मालां शिरस्युरसि चापरां ॥ २७ ॥
अददज्जलधिस्तस्यै पङ्कजञ्चातिशोभनं ।
हिमवान् वाहनं सिंहं रत्नानि विविधानि च ॥ २८ ॥
ददावशून्यं सुरया पानपात्रं धनाधिपः ।
शेषश्च सर्व्वनागेशो महामणिविभूषितं ॥ २९ ॥
नागहारं ददौ तस्यै धत्ते यः पृथिवीमिमां ।
अन्यैरपि सुरैर्देवी भूषणैरायुधैस्तथा ॥ ३० ॥
सम्मानिता ननादोच्चैः साट्टहासं मुहुर्म्मुहुः ।
तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ॥ ३१ ॥

समायतातिमहता प्रतिशब्दो महानभूत्।
तुक्षुभुः सकला लोकाः समुद्राश्च चकम्पिरे॥ ३२॥
चचाल वसुधा चेलुः सकलाश्च महीधराः।
जयेति देवाश्च मुदा तामूचुः सिंहवाहिनीं॥ ३३॥
तुष्टुवुर्मुनयश्चैनां भक्तिनम्रात्ममूर्त्तयः।
दृष्ट्वा समस्तं संक्षुब्धं त्रैलोक्यममरारयः॥ ३४॥
सन्नद्धाखिलसैन्यास्ते समुत्तस्थुरुदायुधाः।
आः किमेतदिति क्रोधादाभाष्य महिषासुरः॥ ३५॥
अभ्यधावत तं शब्दमशेषैरसुरैर्वृतः।
स ददर्श ततो देवीं व्याप्तलोकत्रयं त्विषा॥ ३६॥
पादाक्रान्त्यानतभुवं किरीटोल्लिखिताम्बरां।
क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेन तां॥ ३७॥
दिशो भुजसहस्रेण समन्ताद्व्याप्य संस्थितां।
ततः प्रववृते युद्धं तया देव्या सुरद्विषां॥ ३८॥
शस्त्रास्त्रैर्बहुधा मुक्तैरादीपितदिगन्तरं।
महिषासुरसेनानीश्चिक्षुराख्यो महासुरः॥ ३९॥
युयुधे चामरश्चान्यैश्चतुरङ्गबलान्वितः।
रथानामयुतैः षड्भिरुदग्राख्यो महासुरः॥ ४०॥
अयुध्यतायुतानाञ्च सहस्रेण महाहनुः।
पञ्चाशद्भिश्च नियुतैरसिलोमा महासुरः॥ ४१॥
अयुतानां शतैः षड्भिर्बास्कलो युयुधे रणे।
गजवाजिसहस्रौघैरनेकैः परिवारितः॥ ४२॥

हतो रथानां कोट्या च युद्धे तस्मिन्नयुध्यत ।
विडालाख्योऽयुतानाञ्च पञ्चाशद्भिरथायुतैः ॥ ४३ ॥
युयुधे संयुगे तत्र रथानां परिवारितः ।
अन्ये च तत्रायुतशो रथनागहयैर्वृताः ॥ ४४ ॥
युयुधुः संयुगे देव्या सह तत्र महासुराः ।
कोटिकोटिसहस्रैस्तु रथानां दन्तिनान्तथा ॥ ४५ ॥
हयानाञ्च हतो युद्धे तत्राभून्महिषासुरः ।
तोमरैर्भिन्दिपालैश्च शक्तिभिर्मुषलैस्तथा ॥ ४६ ॥
युयुधुः संयुगे देव्या खड्गैः परशुपट्टिशैः ।
केचिच्च चिक्षिपुः शक्तीः केचित्पाशांस्तथापरे ॥ ४७ ॥
देवीं खड्गप्रहारैस्तु ते तां हन्तुं प्रचक्रमुः ।
सापि देवी ततस्तानि शस्त्राण्यस्त्राणि चण्डिका ॥ ४८ ॥
लीलयैव प्रचिच्छेद निजशस्त्रास्त्रवर्षिणी ।
अनायस्तानना देवी स्तूयमाना सुरर्षिभिः ॥ ४९ ॥
मुमोचासुरदेहेषु शस्त्राण्यस्त्राणि चेश्वरी ।
सोऽपि क्रुद्धो धुतशटो देव्या वाहनकेशरी ॥ ५० ॥
चचारासुरसैन्येषु वनेष्विव हुताशनः ।
निश्वासान्मुमुचे यांश्च युध्यमाना रणेऽम्बिका ॥ ५१ ॥
त एव सद्यः सम्भूता गणाः शतसहस्रशः ।
युयुधुस्ते परशुभिर्भिन्दिपालासिपट्टिशैः ॥ ५२ ॥
नाशयन्तोऽसुरगणान्देवीशक्त्युपबृंहिताः ।
अवादयन्त पटहान् गणाः शङ्खांस्तथापरे ॥ ५३ ॥

इदक्षांश्च तथैवान्ये तस्मिन् युद्धमहोत्सवे ।
ततो देवी त्रिशूलेन गदया शक्तिवृष्टिभिः ॥ ५४ ॥
खड्गादिभिश्च शतशो निजघान महासुरान् ।
पातयामास चैवान्यान् घण्टास्वनविमोहितान् ॥ ५५ ॥
असुरान् भुवि पाशेन बद्ध्वा चान्यानकर्षत ।
केचिद्द्विधाकृतास्तीक्ष्णैः खड्गपातैस्तथापरे ॥ ५६ ॥
विपोथिता निपातेन गदया भुवि शेरते ।
वेमुश्च केचिद्रुधिरं मुषलेन भृशं हताः ॥ ५७ ॥
केचिन्निपातिता भूमौ भिन्नाः शूलेन वक्षसि ।
निरन्तराः शरौघेन कृताः केचिद्रणाजिरे ॥ ५८ ॥
सेनानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दनाः ।
केषाञ्चिद्बाहवश्छिन्नाश्छिन्नग्रीवास्तथापरे ॥ ५९ ॥
शिरांसि पेतुरन्येषामन्ये मध्ये विदारिताः ।
विच्छिन्नजङ्घास्त्वपरे पेतुरुर्व्यां महासुराः ॥ ६० ॥
एकबाह्वक्षिचरणाः केचिद्देव्या द्विधाकृताः ।
छिन्नेऽपि चान्ये शिरसि पतिताः पुनरुत्थिताः ॥ ६१ ॥
कबन्धा युयुधुर्देव्या गृहीतपरमायुधाः ।
ननृतुश्चापरे तत्र युद्धे तूर्यलयाश्रिताः ॥ ६२ ॥
कबन्धाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः ।
तिष्ठ तिष्ठेति भाषन्तो देवीमन्ये महासुराः ॥ ६३ ॥
पातितै रथनागाश्वैरसुरैश्च वसुन्धरा ।
अगम्या साऽभवत्तत्र यत्राभूत्स महारणः ॥ ६४ ॥

शोणितौघा महानद्यः सद्यस्तत्र विसुस्रुवुः ।
मध्ये चासुरसैन्यस्य वारणासुरवाजिनां ॥ ६५ ॥
क्षणेन तन्महासैन्यमसुराणान्तथाम्बिका ।
निन्ये क्षयं यथा वह्निस्तृणदारुमहाचयं ॥ ६६ ॥
स च सिंहो महानादमुत्सृजन् धुतकेशरः ।
शरीरेभ्योऽमरारीणामसूनिव विचिन्वति ॥ ६७ ॥
देव्या गणैश्च तैस्तत्र कृतं युद्धं तथाऽसुरैः ।
यथैषान्तुतुषुर्देवाः पुष्पवृष्टिमुचो दिवि ॥ ६८ ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये महिषासुरसैन्यवधः ॥ ८२ ॥

अशीतितमोऽध्यायः ॥



ऋषिरुवाच ॥

निहन्यमानं तत्सैन्यमवलोक्य महासुरः ।
सेनानीश्चिक्षुरः कोपाद्ययौ योद्धुमथाम्बिकां ॥ १ ॥
स देवीं शरवर्षेण ववर्ष समरेऽसुरः ।
यथा मेरुगिरेः शृङ्गं तोयवर्षेण तोयदः ॥ २ ॥
तस्य च्छित्त्वा ततो देवी लीलयैव शरोत्करान् ।
जघान तुरगान् बाणैर्यन्तारञ्चैव वाजिनां ॥ ३ ॥
चिच्छेद च धनुः सद्यो ध्वजञ्चातिसमुच्छ्रितं ।
विव्याध चैव गात्रेषु छिन्नधन्वानमाशुगैः ॥ ४ ॥

स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
अभ्यधावत तां देवीं खड्गचर्मधरोऽसुरः ॥ ५ ॥
सिंहमाहत्य खड्गेन तीक्ष्णधारेण मूर्द्धनि ।
आजघान भुजे सव्ये देवीमप्यतिवेगवान् ॥ ६ ॥
तस्याः खड्गो भुजं प्राप्य पफाल नृपनन्दन ।
ततो जग्राह शूलं स कोपादरुणलोचनः ॥ ७ ॥
चिक्षेप च ततस्तत्तु भद्रकाल्यां महासुरः ।
जाज्वल्यमानन्तेजोभीरविबिम्बमिवाम्बरात् ॥ ८ ॥
दृष्ट्वा तदापतच्छूलं देवी शूलममुञ्चत ।
तच्छूलं शतधा तेन नीतं स च महासुरः ॥ ९ ॥
हते तस्मिन्महावीर्य्ये महिषस्य चमूपतौ ।
आजगाम गजारूढश्चामरस्त्रिदशार्द्दनः ॥ १० ॥
सोऽपि शक्तिं मुमोचाथ देव्यास्तामम्बिका द्रुतं ।
हुंकाराभिहतां भूमौ पातयामास निष्प्रभां ॥ ११ ॥
भग्नां शक्तिं निपतितां दृष्ट्वा क्रोधसमन्वितः ।
चिक्षेप चामरः शूलं वाणैस्तदपि साच्छिनत् ॥ १२ ॥
ततः सिंहः समुत्पत्य गजकुम्भान्तरस्थितः ।
बाहुयुद्धेन युयुधे तेनोच्चैस्त्रिदशारिणा ॥ १३ ॥
युध्यमानौ ततस्तौ तु तस्मान्नागान्महीं गतौ ।
युयुधातेऽतिसंरब्धौ प्रहारैरतिदारुणैः ॥ १४ ॥
ततो वेगात् खमुत्पत्य निपत्य च मृगारिणा ।
करप्रहारेण शिरश्चामरस्य पृथक् कृतं ॥ १५ ॥

उदग्रश्च रणे देव्या शिलावृक्षादिभिर्हतः ।
दन्तमुष्टितलैश्चैव करालश्च निपातितः ॥ १६ ॥
देवी क्रुद्धा गदापातैश्चूर्णयामास चोद्धतं ।
वास्कलं भिन्दिपालेन वाणैस्ताम्रं तथान्धकं ॥ १७ ॥
उग्रास्यमुग्रवीर्य्यञ्च तथैव च महाहनुं ।
चिनेचा च चिशूलेन जघान परमेश्वरी ॥ १८ ॥
विडालस्यासिना कायात् पातयामास वै शिरः ।
दुर्द्धरं दुर्म्मुखञ्चोभौ शरैर्निन्ये यमक्षयं ॥ १९ ॥
एवं संक्षीयमाणे तु स्वसैन्ये महिषासुरः ।
माहिषेण स्वरूपेण चासयामास तान् गणान् ॥ २० ॥
कांश्चित्तुण्डप्रहारेण खुरक्षेपैस्तथापरान् ।
लाङ्गूलताडितांश्चान्यान शृङ्गाभ्याञ्च विदारितान् ॥ २१ ॥
वेगेन कांश्चिदपरान्नादेन भ्रमणेन च ।
निश्वासपवनेनान्यान् पातयामास भूतले ॥ २२ ॥
निपात्य प्रमथानीकमभ्यधावत सोऽसुरः ।
सिंहं हन्तुं महादेव्याः कोपञ्चक्रे ततोऽम्बिका ॥ २३ ॥
सोऽपि कोपान्महावीर्य्यः खुरक्षुण्णमहीतलः ।
शृङ्गाभ्यां पर्व्वतानुच्चांश्चिक्षेप च ननाद च ॥ २४ ॥
वेगभ्रमणविक्षुण्णा मही तस्य व्यशीर्य्यत ।
लाङ्गूलेनाहतश्चाब्धिः प्लावयामास सर्व्वतः ॥ २५ ॥
धुतशृङ्गविभिन्नाश्च खण्डखण्डं ययुर्घनाः ।
श्वासानिलास्ताः शतशो निपेतुर्नभसोऽचलाः ॥ २६ ॥

इति क्रोधसमाध्मातमापतन्तं महासुरं ।
दृष्ट्वा सा चण्डिका कोपं तद्बधाय तदाकरोत् ॥ २७ ॥
सा क्षिप्ता तस्य वै पाशं तं बबन्ध महासुरं ।
तत्याज माहिषं रूपं सोऽपि बद्धो महामृधे ॥ २८ ॥
ततः सिंहोऽभवत्सद्यो यावत्तस्याम्बिका शिरः ।
छिनत्ति तावत् पुरुषः खड्गपाणिरदृश्यत ॥ २९ ॥
तत एवाशु पुरुषं देवी चिच्छेद शायकैः ।
तं खड्गचर्म्मणा सार्द्धं ततः सोऽभून्महागजः ॥ ३० ॥
करेण च महासिंहं तच्चकर्ष जगर्ज्ज च ।
कर्षतस्तु करन्देवी खड्गेन निरकृन्तत ॥ ३१ ॥
ततो महासुरो भूयो माहिषं वपुरास्थितः ।
तथैव क्षोभयामास त्रैलोक्यं सचराचरं ॥ ३२ ॥
ततः क्रुद्धा जगन्माता चण्डिका पानमुत्तमं ।
पपौ पुनः पुनश्चैव जहासारुणलोचना ॥ ३३ ॥
ननर्द्द चासुरः सोऽपि बलवीर्य्यमदोद्धतः ।
विषाणाभ्याञ्च चिक्षेप चण्डिकां प्रति भूधरान् ॥ ३४ ॥
सा च तान् प्रहितांस्तेन चूर्णयन्ती शरोत्करैः ।
उवाच तं मदोद्धूतमुखरागाकुलाक्षरं ॥ ३५ ॥

देव्युवाच ॥

गर्ज्ज गर्ज्ज क्षणं मूढ मधु यावत् पिवाम्यहं ।
मया त्वयि हतेऽत्रैव गर्ज्जिष्यन्त्याशु देवताः ॥ ३६ ॥
एवमुक्त्वा समुत्पत्य सारूढा तं महासुरं ।

पादेनाक्रम्य कण्ठे च शूलेनैनमताडयत् ॥ ३७ ॥
ततः सोऽपि पदाक्रान्तस्तया निजमुखात्ततः ।
अर्द्धनिष्क्रान्त एवाति देव्या वीर्य्येण संवृतः ॥ ३८ ॥
अर्द्धनिष्क्रान्त एवासौ युध्यमानो महासुरः ।
तया महासिना देव्या शिरश्छित्त्वा निपातितः ॥ ३९ ॥
ततो हाहाकृतं सर्व्वं दैत्यसैन्यं ननाश तत् ।
प्रहर्षञ्च परं जग्मुः सकला देवतागणाः ॥ ४० ॥
तुष्टुवुस्तां सुरा देवीं सह दिव्यैर्म्महर्षिभिः ।
जगुर्गन्धर्व्वपतयो ननृतुश्चाप्सरोगणाः ॥ ४१ ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये महिषासुरवधः ॥ ८३ ॥

चतुरशीतितमोऽध्यायः ॥

ऋषिरुवाच ॥

शक्रादयः सुरगणा निहतेऽतिवीर्य्ये
तस्मिन् दुरात्मनि सुरारिबले च देव्या ।
तां तुष्टुवुः प्रणतिनम्रशिरोधरांसा
वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥ १ ॥
देव्या यया ततमिदं जगदात्मशक्त्या
निःशेषदेवगणशक्तिसमूहमूर्त्या ।

तामम्बिकामखिलदेवमहर्षिपूज्यां
भक्त्या नताः स्म विदधातु शुभानि सा नः ॥ २ ॥
यस्याः प्रभावमतुलं भगवाननन्तो
ब्रह्मा हरश्च न हि वक्तुमलं बलञ्च ।
सा चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ॥ ३ ॥
या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि विश्वं ॥ ४ ॥
किं वर्णयाम तव रूपमचिन्त्यमेतत्
किञ्चातिवीर्य्यमसुरक्षयकारि भूरि ।
किञ्चाहवेषु चरितानि तवाति यानि
सर्व्वेषु देव्यसुरदेवगणादिकेषु ॥ ५ ॥
हेतुः समस्तजगतां त्रिगुणापि दोषै-
र्न ज्ञायसे हरिहरादिभिरप्यपारा ।
सर्व्वाश्रयाखिलमिदं जगदंशभूत-
मव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ६ ॥
यस्याः समस्तसुरता समुदीरणेन
तृप्तिं प्रयाति सकलेषु मखेषु देवि ।
स्वाहासि वै पितृगणस्य च तृप्तिहेतु-
रुच्चार्य्यसे त्वमत एव जनैः स्वधा च ॥ ७ ॥

या मुक्तिहेतुरविचिन्त्यमहाव्रता च
अभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः ।
मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषै-
र्विद्यासि सा भगवती परमा हि देवि ॥ ८ ॥
शब्दात्मिका सुविमलर्ग्यजुषां निधान-
मुद्गीतरम्यपदपाठवतां च साम्नां ।
देवी त्रयी भगवती भवभावनाय
वार्त्ता च सर्व्वजगतां परमार्त्तिहन्त्री ॥ ९ ॥
मेधासि देवि विदिताखिलशास्त्रसारा
दुर्गासि दुर्गभवसागरनौरसङ्गा ।
श्रीः कैटभारिहृदयैककृताधिवासा
गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा ॥ १० ॥
ईषत्सहासममलं परिपूर्णचन्द्र-
विम्बानुकारि कनकोत्तमकान्ति कान्तं ।
अत्यद्भुतं प्रहृतमात्तरुषा तथापि
वक्त्रं विलोक्य सहसा महिषासुरेण ॥ ११ ॥
दृष्ट्वा तु देवि कुपितं भ्रुकुटीकराल-
मुद्यच्छशाङ्कसदृशच्छवि यन्न सद्यः ।
प्राणान्मुमोच महिषस्तदतीव चित्रं
कैर्जीव्यते हि कुपितान्तकदर्शनेन ॥ १२ ॥
देवि प्रसीद परमा भवती भवाय
सद्यो विनाशयसि कोपवती कुलानि ।

विज्ञातमेतदधुनैव यदस्तमेतन्नीतं
बलं सुविपुलं महिषासुरस्य ॥ १३ ॥
ते सम्मता जनपदेषु धनानि तेषां
तेषां यशांसि नच सीदति धर्म्मवर्गः ।
धन्यास्त एव निभृतात्मजभृत्यदारा
येषां सदाभ्युदयदा भवती प्रसन्ना ॥ १४ ॥
धर्म्म्याणि देवि सकलानि सदैव कर्म्मा-
ण्यत्यादृतः प्रतिदिनं सुकृती करोति ।
स्वर्गं प्रयाति च ततो भवतीप्रासादा-
ल्लोकत्रयेऽपि फलदा ननु देवि तेन ॥ १५ ॥
दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभान्ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्व्वोपकारकरणाय सदार्द्रचित्ता ॥ १६ ॥
एभिर्हतैर्जगदुपैति सुखं तथैते
कुर्व्वन्तु नाम नरकाय चिराय पापं ।
संग्राममृत्युमधिगम्य दिवं प्रयान्तु
मत्वेति नूनमहितान् विनिहंसि देवि ॥ १७ ॥
दृष्टैव किन्न भवती प्रकरोति भस्म
सर्व्वासुरानरिषु यत् प्रहिणोषि शस्त्रम् ।
लोकान् प्रयान्तु रिपवोऽपि हि शस्त्रपूता
इत्थं मतिर्भवति तेष्वपि तेऽतिसाध्वी ॥ १८ ॥

खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः
शूलाग्रकान्तिनिवहेन दृशोऽसुराणां।
यन्नागता विलयमंशुमदिन्दुखण्ड-
योग्याननं तव विलोकयतां तदेतत्॥ १९ ॥
दुर्वृत्तवृत्तशमनं तव देवि शीलं
रूपं तथैतदविचिन्त्यमतुल्यमन्यैः।
वीर्य्यञ्च हन्तृ हृतदेवपराक्रमाणां
वैरिष्वपि प्रकटितैव दया त्वयेत्थं॥ २० ॥
केनोपमा भवतु तेऽस्य पराक्रमस्य
रूपञ्च शत्रुभयकार्य्यतिहारि कुत्र।
चित्ते कृपा समरनिष्ठुरता च दृष्टा
त्वय्येव देवि वरदे भुवनत्रयेऽपि॥ २१ ॥
त्रैलोक्यमेतदखिलं रिपुनाशनेन
त्रातं त्वया समरमूर्द्धनि तेऽपि हत्वा।
नीता दिवं रिपुगणा भयमप्यपास्त-
मस्माकमुन्मदसुरारिभवन्नमस्ते॥ २२ ॥
शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके।
घण्टास्वनेन नः पाहि चापज्यानिस्वनेन च॥ २३ ॥
प्राच्यां रक्ष प्रतीच्याञ्च चण्डिके रक्ष दक्षिणे।
भ्रामणेनात्मशूलस्य उत्तरस्यान्तथेश्वरि॥ २४ ॥
सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते।
यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवं॥ २५ ॥

शूलगदादीनि यानि चास्त्राणि तेऽम्बिके।
पल्लवसङ्गीनि तैरस्मान्रक्ष सर्व्वतः॥ २६॥

ऋषिरुवाच॥

स्तुता सुरैर्दिव्यैः कुसुमैर्नन्दनोद्भवैः।
र्च्चिता जगतां धात्री तथा गन्धानुलेपनैः॥ २७॥
या समस्तैस्त्रिदशैर्दिव्यैर्धूपैस्तु धूपिता।
ह प्रसादसुमुखी समस्तान् प्रणतान् सुरान्॥ २८॥

देव्युवाच॥

तां त्रिदशाः सर्व्वे यदस्मत्तोऽभिवाञ्छितं।
ाम्यहमिति प्रीत्या स्तवैरेभिः सुपूजिता॥ २९॥

देवा ऊचुः॥

वत्या कृतं सर्व्वं न किञ्चिदवशिष्यते।
यं निहतः शत्रुरस्माकं महिषासुरः॥ ३०॥
ः वापि वरो देयस्त्वयास्माकं महेश्वरि।
ृता संस्मृता त्वन्नो हिंसेथाः परमापदः॥ ३१॥
। मर्त्यः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने।
। वित्तर्द्धिविभवैर्धनदारादिसम्पदां॥
येऽस्मत्प्रसन्ना त्वं भवेथाः सर्व्वदाम्बिके॥ ३२॥

ऋषिरुवाच॥

। प्रसादिता देवैर्जगतोऽर्थे तथात्मनः।
ित्युक्त्वा भद्रकाली बभूवान्तर्हिता नृप॥ ३३॥
ेतत्कथितं भूप सम्भूता सा यथा पुरा।

देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ॥ ३४ ॥
पुनश्च गौरीदेहा सा समुद्भूता यथाभवत् ।
वधाय दुष्टदैत्यानां तथा शुम्भनिशुम्भयोः ॥ ३५ ॥
रक्षणाय च लोकानां देवानामुपकारिणी ।
तच्छृणुष्व मयाख्यातं यथावत्कथयामि ते ॥ ३६ ॥

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये महिषासुर-वधः समाप्तः ॥ ८४ ॥

पञ्चाशीतितमोऽध्यायः ॥

ऋषिरुवाच ॥

पुरा शुम्भनिशुम्भाभ्यामसुराभ्यां शचीपतेः ।
त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रयात् ॥ १ ॥
तावेव सूर्य्यतां तद्वदधिकारं तथैन्दवं ।
कौवेरमथ याम्यञ्च चक्राते वरुणस्य च ॥ २ ॥
तावेव पवनर्द्धिञ्च चक्रतुर्व्वह्निकर्म्म च ।
ततो देवा विनिर्धूता भ्रष्टराज्याः पराजिताः ॥ ३ ॥
हृताधिकारास्त्रिदशास्ताभ्यां सर्व्वे निराकृताः ।
महासुराभ्यां तां देवीं संस्मरन्त्यपराजितां ॥ ४ ॥
त्वयास्माकं वरो दत्तो यथापत्सु स्मृताखिलाः ।
भवतां नाशयिष्यामि तत्क्षणात् परमापदः ॥ ५ ॥

इति कृत्वा मतिं देवा हिमवन्तं नगेश्वरं।
जग्मुस्तत्र ततो देवीं विष्णुमायां प्रतुष्टुवुः॥ ६॥

देवा ऊचुः।

नमो देव्यै महादेव्यै शिवायै सततं नमः।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म तां॥ ७॥
रौद्रायै नमो नित्यायै गौर्य्यै धात्र्यै नमो नमः।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः॥ ८॥
कल्याण्यै प्रणता वृद्ध्यै सिद्ध्यै कुर्म्मो नमो नमः।
नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्व्वाण्यै ते नमो नमः॥ ९॥
दुर्गायै दुर्गपारायै सारायै सर्व्वकारिण्यै।
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः॥ १०॥
अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः॥ ११॥
या देवी सर्व्वभूतेषु विष्णुमायेति शब्दिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ १२॥
या देवी सर्व्वभूतेषु चेतनेत्यभिधीयते।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ १३॥
या देवी सर्व्वभूतेषु बुद्धिरूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ १४॥
या देवी सर्व्वभूतेषु निद्रारूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ १५॥

या देवी सर्व्वभूतेषु क्षुधारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १६ ॥
या देवी सर्व्वभूतेषु छायारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १७ ॥
या देवी सर्व्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १८ ॥
या देवी सर्व्वभूतेषु तृष्णारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १९ ॥
या देवी सर्व्वभूतेषु क्षान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २० ॥
या देवी सर्व्वभूतेषु जातिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २१ ॥
या देवी सर्व्वभूतेषु लज्जारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २२ ॥
या देवी सर्व्वभूतेषु शान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २३ ॥
या देवी सर्व्वभूतेषु श्रद्धारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २४ ॥
या देवी सर्व्वभूतेषु कान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २५ ॥
या देवी सर्व्वभूतेषु लक्ष्मीरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २६ ॥

या देवी सर्व्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २७ ॥
या देवी सर्व्वभूतेषु स्मृतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २८ ॥
या देवी सर्व्वभूतेषु दयारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २९ ॥
या देवी सर्व्वभूतेषु तुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३० ॥
या देवी सर्व्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३१ ॥
या देवी सर्व्वभूतेषु भ्रान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३२ ॥
इन्द्रियाणामधिष्ठात्री भूतानाञ्चाखिलेषु या ।
भूतेषु सततं तस्यै व्याप्तिदेव्यै नमो नमः ॥ ३३ ॥
चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३४ ॥

स्तुता सुरैः पूर्व्वमभीष्टसंश्रयात्
तथा सुरेन्द्रेण दिनेषु सेविता ।
करोतु सा नः शुभहेतुरीश्वरी
शुभानि भद्राण्यभिहन्तु चापदः ॥ ३५ ॥
या साम्प्रतं चोद्धतदैत्यतापितै-
रस्माभिरीशा च सुरैर्नमस्यते ।

हुतं हविस्त्वय्यमलमेघत्वमुपगच्छति ।
ततश्च जलरूपेण परिणाममुपैति यत् ॥ ३० ॥
तेनाखिलौषधीजन्म भवत्यनिलसारथे ।
ओषधीभिरशेषाभिः सुखं जीवन्ति जन्तवः ॥ ३१ ॥
वितन्वते नरा यज्ञान् त्वत्सृष्टास्वोषधीषु च ।
यज्ञैर्देवास्तथा दैत्यास्तद्वद्रक्षांसि पावक ॥ ३२ ॥
आप्याय्यन्ते च ते यज्ञास्त्वदाधारा हुताशन ।
अतः सर्व्वस्य योनिस्त्वं वह्ने सर्व्वमयस्तथा ॥ ३३ ॥
देवता दानवा यक्षा दैत्या गन्धर्व्वराक्षसाः ।
मानुषाः पशवो वृक्षा मृगपक्षिसरीसृपाः ॥ ३४ ॥
आप्याय्यन्ते त्वया सर्व्वे संवर्ध्यन्ते च पावक ।
त्वत्त एवोद्भवं यान्ति त्वय्यन्ते च तथा लयं ॥ ३५ ॥
अपः सृजसि देव त्वं त्वमत्सि पुनरेव ताः ।
पच्यमानास्त्वया ताश्च प्राणिनां पुष्टिकारणं ॥ ३६ ॥
देवेषु तेजोरूपेण कान्त्या सिद्धेष्ववस्थितः ।
विषरूपेण नागेषु वायुरूपः पतत्त्रिषु ॥ ३७ ॥
मनुजेषु भवान् क्रोधो मोहः पक्षिमृगादिषु ।
अवष्टम्भोऽसि तरुषु काठिन्यं त्वं मही प्रति ॥ ३८ ॥
जले द्रवः त्वं भगवान् जवरूपी तथाऽनिले ।
व्यापित्वेन तथैवाग्ने नभस्यात्मा व्यवस्थितः ॥ ३९ ॥
त्वमग्ने सर्व्वभूतानामन्तश्चरसि पालयन् ।
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः ॥ ४० ॥

त्वामष्टधा कल्पयित्वा यज्ञमाद्यमकल्पयन् ।
त्वया सृष्टमिदं विश्वं वदन्ति परमर्षयः ॥ ४१ ॥
त्वामृते हि जगत्सर्व्वं सद्यो नश्येद्धुताशन ।
तुभ्यं कृत्वा द्विजः पूजां स्वकर्मविहितां गतिं ॥ ४२ ॥
प्रयाति हव्यकव्याद्यैः स्वधास्वाहाभ्युदीरणात् ।
परिणामात्मवीर्य्या हि प्राणिनाममरार्च्चित ॥ ४३ ॥
दहन्ति सर्व्वभूतानि ततो निष्क्रम्य हेतयः ।
जातवेदस्तवैवेयं विश्वसृष्टिर्महाद्युते ॥ ४४ ॥
तवैव वैदिकं कर्म्म सर्व्वभूतात्मकं जगत् ।
नमस्तेऽनल पिङ्गाक्ष नमस्तेऽस्तु हुताशन ॥ ४५ ॥
पावकाद्य नमस्तेऽस्तु नमस्ते हव्यवाहन ।
त्वमेव भुक्तपीतानां पाचनाद्विश्वपाचकः ॥ ४६ ॥
शस्यानां पाककर्त्ता त्वं पोष्टा त्वं जगतस्तथा ।
त्वमेव मेघस्त्वं वायुस्त्वं वीजं शस्यहेतुकं ॥ ४७ ॥
पोषाय सर्व्वभूतानां भूतभव्यभवो ह्यसि ।
त्वं ज्योतिः सर्व्वभूतेषु त्वमादित्यो विभावसुः ॥ ४८ ॥
त्वमहस्त्वं तथा रात्रिरुभे सन्ध्ये तथा भवान् ।
हिरण्यरेतास्त्वं वह्ने हिरण्योद्भवकारणं ॥ ४९ ॥
हिरण्यगर्भश्च भवान् हिरण्यसदृशप्रभः ।
त्वं मुहूर्त्तं क्षणश्च त्वं त्वं त्रुटिस्त्वं तथा लवः ॥ ५० ॥
कलाकाष्ठानिमेषादिरूपेणासि जगत्प्रभो ।
त्वमेतदखिलं कालः परिणामात्मको भवान् ॥ ५१ ॥

या जिह्वा भवतः काली कालनिष्ठाकरी प्रभो ।
भयान्नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ५२ ॥
कराली नाम या जिह्वा महाप्रलयकारणं ।
तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ५३ ॥
मनोजवा च या जिह्वा लघिमा गुणलक्षणा ।
तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ५४ ॥
करोति कामं भूतेभ्यो या ते जिह्वा सुलोहिता ।
तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ५५ ॥
सधूम्रवर्णा या जिह्वा प्राणिनां रोगदायिका ।
तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ५६ ॥
स्फुलिङ्गिनी च या जिह्वा यतः सकलपुद्गला ।
तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ५७ ॥
या ते विश्वा सदा जिह्वा प्राणिनां शर्म्मदायिनी ।
तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ५८ ॥
पिङ्गाक्ष लोहितग्रीव कृष्णवर्ण हुताशन ।
त्राहि मां सर्व्वदोषेभ्यः संसारादुद्धरेह मां ॥ ५९ ॥
प्रसीद वह्ने सप्तार्च्चिः कृशानो हव्यवाहन ।
अग्निपावकशुक्रादिनामाष्टभिरुदीरितः ॥ ६० ॥
अग्नेऽग्रे सर्व्वभूतानां समुद्भूत विभावसो ।
प्रसीद हव्यवाहाख्य अभिष्टुत मयाव्यय ॥ ६१ ॥

त्वमक्षयो वह्निरचिन्त्यरूपः
समृद्धिमान् दुष्प्रसहोऽतितीव्रः ।

त्वमव्ययं भीममशेषलोकं
समूर्त्तको हन्त्ययथवामतिवीर्य्यः ॥ ६२ ॥
त्वमुत्तमं सत्त्वमशेषसत्त्व-
हृत्पुण्डरीकस्त्वमनन्तमीड्यं ।
त्वया ततं विश्वमिदं चराचरं
हुताशनैको बहुधा त्वमत्र ॥ ६३ ॥
त्वमक्षयः सगिरिवना वसुन्धरा
नभः ससोमार्कमहर्दिवाखिलं ।
महोदधेर्जठरगतश्च वाडवो
भवान् विभूत्या परया करे स्थितः ॥ ६४ ॥
हुताशनस्त्वमिति सदाभिपूज्यसे
महाक्रतौ नियमपरैर्महर्षिभिः ।
अभिष्टुतः पिवसि च सोममध्वरे
वषट्कृतान्यपि च हवींषि भूतये ॥ ६५ ॥
त्वं विप्रैः सततमिहेज्यसे फलार्थं
वेदाङ्गेष्वथ सकलेषु गीयसे त्वं ।
त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा
वेदाङ्गान्यधिगमयन्ति सर्व्वकाले ॥ ६६ ॥
त्वं ब्रह्मा यजनपरस्तथैव विष्णु-
र्भूतेशः सुरपतिरर्य्यमा जलेशः ।
सूर्य्येन्दू सकलसुरासुराश्च हव्यैः
सन्तोष्याभिमतफलान्यवाप्नुवन्ति ॥ ६७ ॥

अग्निभिः परममहोपघातदुष्टं
संस्पृष्टं तव शुचि-जायते समस्तं ।
स्नानानां परममतीव भस्मना सत्
सन्ध्यायां मुनिभिरतीव सेव्यसे तत् ॥ ६८ ॥
प्रसीद वह्नि शुचिनामधेय
प्रसीद वायो विमलातिदीप्ते ।
प्रसीद मे पावक वैद्युताद्य
प्रसीद हव्याशन पाहि मां त्वं ॥ ६९ ॥
यत्ते वह्नि शिवं रूपं ये च ते सप्त हेतयः ।
तैः पाहि नः स्तुतो देव पिता पुत्रमिवात्मजं ॥ ७० ॥

इति श्रीमार्कण्डेयपुराणे अग्निस्तोत्रं नाम ॥ ९९ ॥

---

शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

एवं स्तुतस्ततस्तेन भगवान् हव्यवाहनः ।
ज्वालामालावृतस्तत्र तस्यासीदग्रतो मुने ॥ १ ॥
देवो विभावसुः प्रीतस्तोत्रेणानेन वै द्विज ।
तं शान्तिमाह प्रणतं मेघगम्भीरवागथ ॥ २ ॥

अग्निरुवाच ॥

परितुष्टोऽस्मि ते विप्र भक्त्या या ते स्तुतिः कृता ।
वरं ददामि भवते प्रार्थ्यतां यत्तवेप्सितं ॥ ३ ॥

अग्निरुवाच ॥

भगवन् कृतकृत्योऽस्मि यत्त्वां पश्यामि रूपिणं ।
तथापि भक्तिनम्रस्य भवता श्रूयतां मम ॥ ४ ॥
भ्रातृयज्ञं गतो देव ममाचार्य्यो निजाश्रमात् ।
आगतश्चाश्रमं धिष्ण्यं त्वत्सनाथं स पश्यतु ॥ ५ ॥
ममापराधात् सन्त्यक्तं धिष्ण्यं यत्ते विभावसो ।
तत्त्वयाधिष्ठितं सोऽद्य पूर्व्ववत् पश्यतां द्विजः ॥ ६ ॥
तथान्यदपि मे देव प्रसादं कुरुषे यदि ।
पुत्रो विशिष्टो भवतु तदपत्यस्य मे गुरोः ॥ ७ ॥
यथा च मैत्त्रीं तनये स करिष्यति मे गुरुः ।
तथा समस्तसत्त्वेषु भवत्वस्य मनो मृदु ॥ ८ ॥
पश्यतां स्तोष्यते येन प्रीतिं यातोऽसि मेऽव्यय ।
स्तोत्रेण तस्य वरदो भवेथा मत्प्रसादितः ॥ ९ ॥

मार्कण्डेय उवाच ॥

एतत् श्रुत्वा वचस्तस्य तमाह द्विजसत्तमं ।
स्तोत्रेणाराधितो भूयो गुरुभक्त्या च पावकः ॥ १० ॥

अग्निरुवाच ॥

गुरोरर्थे यतो ब्रह्मन् याचितं ते वरद्वयं ।
नात्मार्थं तेन मे प्रीतिस्त्वय्यतीव महामुने ॥ ११ ॥
भविष्यत्येतदखिलं गुरोर्यत्प्रार्थितं त्वया ।
मैत्री समस्तभूतेषु पुत्त्रस्यास्य भविष्यति ॥ १२ ॥
मन्वन्तराधिपः पुत्रो भौत्यो नाम भविष्यति ।

महाबलो महावीर्य्यो महाप्राणो गुरुस्तव ॥ १३ ॥
अनेन यश्च स्तोत्रेण स्तोष्यते मां समाहितः ।
तस्याभिलषितं सर्व्वं पुण्यञ्चास्य भविष्यति ॥ १४ ॥
यज्ञेषु पर्व्वकालेषु तीर्थेज्याहोमकर्म्मसु ।
धर्म्माय पठतामेतन्मम पुष्टिकरं परं ॥ १५ ॥
अहोरात्रकृतं पापं श्रुतमेतत् सकृत् द्विज ।
नाशयिष्यत्यसन्दिग्धं मम तुष्टिकरं परं ॥ १६ ॥
अहोमकालदोषादीन्नयोग्यैरपि तत्कृतैः ।
ये दोषास्तानिदं सद्यः शमयिष्यति संश्रुतं ॥ १७ ॥
पौर्णमास्याममावस्यां पर्व्वस्वन्येषु प्रस्तवः ।
ममैष संश्रुतो मर्त्त्यैर्भविता पापनाशनः ॥ १८ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा भगवानग्निः पश्यतस्तस्य वै मुने ।
बभूवादर्शनः सद्यो दीपस्थो निर्वृतो यथा ॥ १९ ॥
स च शान्तिर्गते वह्नौ परितुष्टेन चेतसा ।
हर्षरोमाञ्चिततनुः प्रविवेशाश्रमं गुरोः ॥ २० ॥
जाज्वल्यमानं तत्रासौ गुरुधिष्ण्ये हुताशनं ।
ददर्श पूर्व्ववत्प्राप ततः स परमां मुदं ॥ २१ ॥
एतस्मिन्नन्तरे सोऽपि गुरुस्तस्य महात्मनः ।
भ्रातुर्यवीयसो यस्मादाजगाम स्वमाश्रमं ॥ २२ ॥
तस्याग्रतश्च शिष्योऽसौ चक्रे पादाभिवन्दनं ।
गृहीतासनपूजश्च तमाह स तदा गुरुः ॥ २३ ॥

तत्सातिशाहं त्वयि मे तथान्येषु च जन्तुषु ।
न वेद्मि किमिदं त्वञ्चेद्वत्सैतत्कथयाशु मे ॥ २४ ॥
ततः स शान्तिस्तत्सर्व्वमाचार्य्याय महामने ।
अग्निनाशादिकं विप्रः समाचष्टे यथातथं ॥ २५ ॥
तच्छ्रुत्वा स परिष्वज्य स्नेहार्द्रनयनो गुरुः ।
शिष्याय प्रददौ वेदान् साङ्गोपाङ्गान् महामुने ॥ २६ ॥
भौत्यो नाम मनुस्तस्य पुत्त्रो भूतेरजायत ।
तस्य मन्वन्तरे देवानृषीन् भूपांश्च मे शृणु ॥ २७ ॥
भविष्यस्य भविष्यांस्तु गदतो मम विस्तरात् ।
देवेन्द्रो यश्च भविता तस्य विख्यातकर्म्मणः ॥ २८ ॥
चाक्षुषाश्च कनिष्ठाश्च पवित्रा भ्राजिरास्तथा ।
धारावृकाश्च इत्येते पञ्च देवगणाः स्मृताः ॥ २९ ॥
शुचिरिन्द्रस्तदा तेषां त्रिदशानां भविष्यति ।
महाबलो महावीर्य्यः सर्व्वैरिन्द्रगुणैर्युतः ॥ ३० ॥
अग्नीध्रश्चाग्निबाहुश्च शुचिर्मुक्तोऽथ माधवः ।
शुक्रोऽजितश्च सप्तैते तदा सप्तर्षयः स्मृताः ॥ ३१ ॥
गुरुर्गभीरो ब्रध्नश्च भरतोऽनुग्रहस्तथा ।
स्त्रीमानी च प्रतीरश्च विष्णुः संक्रन्दनस्तथा ॥ ३२ ॥
तेजस्वी सुबलश्चैव भौत्यस्यैते मनोः सुताः ।
चतुर्द्दश मयैतत्ते मन्वन्तरमुदाहृतं ॥ ३३ ॥
श्रुत्वा मन्वन्तराणीत्थं क्रमेण मुनिसत्तम ।
पुण्यमाप्नोति मनुजस्तथा क्षीणाञ्च सन्ततिं ॥ ३४ ॥

श्रुत्वा मन्वन्तरं पूर्व्वं धर्ममाप्नोति मानवः ।
स्वारोचिषस्य श्रवणात् सर्व्वकामानवाप्नुते ॥ ३५ ॥
औत्तमे धनमाप्नोति ज्ञानञ्चाप्नोति तामसे ।
रैवते च श्रुते बुद्धिं सुरूपां विन्दते स्त्रियं ॥ ३६ ॥
आरोग्यञ्चाक्षुषे पुंसां श्रुते वैवस्वते बलं ।
गुणवत्पुत्त्रपौत्त्रन्तु सूर्य्यसावर्णिके श्रुते ॥ ३७ ॥
माहात्म्यं ब्रह्मसावर्णौ धर्मसावर्णिके शुभं ।
मतिमाप्नोति मनुजो रुद्रसावर्णिके जयं ॥ ३८ ॥
ज्ञातिश्रेष्ठो गुणैर्युक्तो दक्षसावर्णिके श्रुते ।
निर्ज्जातयत्यरिबलं रौच्यं श्रुत्वा नरोत्तम ॥ ३९ ॥
देवप्रसादमाप्नोति भौत्ये मन्वन्तरे श्रुते ।
तथाग्निहोत्रं पुत्त्रांश्च गुणयुक्तानवाप्नुते ॥ ४० ॥
सर्व्वाण्यनुक्रमाद्यश्च शृणोति मुनिसत्तम ।
मन्वन्तराणि तस्यापि श्रूयतां फलमुत्तमं ॥ ४१ ॥
तत्र देवानृषीनिन्द्रान्मनूंस्तत्तनयान्नृपान् ।
वंशांश्च श्रुत्वा सर्व्वेभ्यः पापेभ्यो विप्रमुच्यते ॥ ४२ ॥
देवर्षीन्द्रनृपाश्चान्ये ये तन्मन्वन्तराधिपाः ।
ते प्रीयन्ते तथा प्रीताः प्रयच्छन्ति शुभां मतिं ॥ ४३ ॥
ततः शुभां मतिं प्राप्य कृत्वा कर्म्म तथा शुभं ।
शुभां गतिमवाप्नोति यावदिन्द्राश्चतुर्द्दश ॥ ४४ ॥
सर्व्वे स्युर्ऋतवः क्षेम्याः सर्व्वे सौम्यास्तथा ग्रहाः ।
भवन्त्यसंशयं श्रुत्वा क्रमान्मन्वन्तरस्थितिं ॥ ४५ ॥

इति श्रीमार्कण्डेयपुराणे चतुर्दश मन्वन्तराणि समाप्तानि ॥ १०० ॥

एकाधिकद्विशततमोऽध्यायः ॥

क्रौष्टुकिरुवाच ॥

भगवन् कथिता सम्यक् त्वया मन्वन्तरस्थितिः ।
क्रमाद्विस्तरतस्त्वत्तो मया चैवावधारिता ॥ १ ॥
ब्रह्माद्यमखिलं वंशं भूभुजां द्विजसत्तम ।
श्रोतुं ममेच्छतः सम्यक् भगवन् प्रब्रवीहि मे ॥ २ ॥

मार्कण्डेय उवाच ॥

शृणु वत्स नृपाणां त्वमशेषाणां समुद्भवं ।
चरितञ्च जगन्मूलमादौ कृत्वा प्रजापतिं ॥ ३ ॥
अयं हि वंशो भूपालैरनेकक्रतुकर्तृभिः ।
संग्रामजिद्भिर्धर्मज्ञैः शतसंख्यैरलंकृतः ॥ ४ ॥
श्रुत्वा चैषां नरेन्द्राणां चरितानि महात्मनां ।
उत्पत्तयश्च पुरुषः सर्व्वपापैः प्रमुच्यते ॥ ५ ॥
मनुर्यत्र तथेक्ष्वाकू रघवन्नो भगीरथः ।
अन्ये च शतशो भूपाः सम्यक् पालितभूमयः ॥ ६ ॥
धर्मज्ञा यज्विनः शूराः सम्यक्परमवेदिनः ।
श्रुते तस्मिन् पुमान् वंशे पापौघाद्विप्रमुच्यते ॥ ७ ॥
तदयं श्रूयतां वंशो यतो वंशाः सहस्रशः ।
भिद्यन्ते मनजेन्द्राणामश्वरोहा यथा वटात् ॥ ८ ॥

ब्रह्मा प्रजापतिः पूर्व्वं सिसृक्षुर्व्विविधाः प्रजाः
अङ्गुष्ठाद्दक्षिणाद्दक्षमसृजद्द्विजसत्तम ॥ ९ ॥
वामाङ्गुष्ठाच्च तत्पत्नीं जगत्सूतिकरो विभुः ।
ससर्ज भगवान् ब्रह्मा जगतां कारणं परं ॥ १० ॥
अदितिस्तस्य दक्षस्य कन्याजायत शोभना ।
तस्याञ्च कश्यपो देवं मार्त्तण्डं समजीजनत् ॥ ११ ॥
ब्रह्म स्वरूपं जगतामशेषाणां वरप्रदं ।
आदिमध्यान्तभूतञ्च सर्गस्थित्यन्तकर्म्मसु ॥ १२ ॥
यतोऽखिलमिदं यस्मिन्नशेषञ्च स्थितं द्विज ।
यत्स्वरूपं जगच्चेदं सदेवासुरमानुषं ॥ १३ ॥
यः सर्व्वभूतः सर्व्वात्मा परमात्मा सनातनः ॥
अदित्यामभवद्भास्वान् पूर्व्वमाराधितस्तया ॥ १४ ॥

क्रौष्टुकिरुवाच ॥

भगवन् श्रोतुमिच्छामि यत्स्वरूपं विवस्वतः ।
यत्कारणञ्चादिदेवः सोऽभवत् कश्यपात्मजः ॥ १५ ॥
यथा चाराधितो देव्या सोऽदित्या कश्यपेन च ।
आराधितेन चोक्तं यत्तेन देवेन भास्वता ॥ १६ ॥
प्रभावश्चावतीर्णस्य यथावन्मुनिसत्तम ।
भवता कथितं सम्यक् श्रोतुमिच्छाम्यशेषतः ॥ १७ ॥

मार्कण्डेय उवाच ॥

विस्पष्टा परमा विद्या ज्योतिर्भा शाश्वती स्फुटा ।
कैवल्यं ज्ञानमाविर्भूः प्राकाम्यं संविदेव च ॥ १८ ॥

बोधश्चावगतिश्चैव स्मृतिर्विज्ञानमेवच ।
इत्येतानीह रूपाणि तस्य रूपस्य भास्वतः ॥ १९ ॥
श्रूयताञ्च महाभाग विस्तरात्गदतो मम ।
यत्पृष्टवानसि रवेराविर्भावो यथाभवत् ॥ २० ॥
निष्प्रभेऽस्मिन्निरालोके सर्व्वतस्तमसावृते ।
बृहदण्डमभूदेकमक्षरं कारणं परं ॥ २१ ॥
तद्विभेद तदन्तःस्थो भगवान् प्रपितामहः ।
पद्मयोनिः स्वयं ब्रह्मा यः स्रष्टा जगतां प्रभुः ॥ २२ ॥
तन्मुखादोमिति महानभूच्छब्दो महामुने ।
ततो भूस्तु भुवस्तस्मात् ततश्च स्वरनन्तरं ॥ २३ ॥
एता व्याहृतयस्तिस्रः स्वरूपं तद्विवस्वतः ।
ओमित्यस्मात्स्वरूपात्तु सूक्ष्मरूपं रवेः परं ॥ २४ ॥
ततो महरितिस्थूलं जनं स्थूलतरं ततः ।
ततस्तपस्ततः सत्यमिति मूर्त्तानि सप्तधा ॥ २५ ॥
स्थितानि तस्य रूपाणि भवन्ति न भवन्ति च ।
स्वभावभावयोर्भावं यतो गच्छन्ति संशयं ॥ २६ ॥
आद्यन्तं यत्परं सूक्ष्ममरूपं परमं स्थितं ।
ओमित्युक्तं मया विप्र तत्परं ब्रह्म तद्वपुः ॥ २७ ॥

इति श्रीमार्कण्डेयपुराणे वंशानुकीर्त्तनं नाम ॥ १०१ ॥

## द्व्यधिक शततमोऽध्यायः ॥



### मार्कण्डेय उवाच ॥

तस्मादण्डाद्विभिन्नात्तु ब्रह्मणोऽव्यक्तजन्मनः ।
ऋचा बभूवुः प्रथमं प्रथमाद्वदनान्मुने ॥ १ ॥
जवापुष्पनिभाः सद्यस्तेजोरूपान्तसंहताः ।
पृथक् पृथग्विभिन्नाश्च रजोरूपवहास्ततः ॥ २ ॥
यजूंषि दक्षिणाद्वक्त्रादनिरुद्धानि काञ्चनं ।
यादृग्वर्णस्तथावर्णान्यसंहतिधराणि च ॥ ३ ॥
पश्चिमं यद्विभोर्वक्त्रं ब्रह्मणः परमेष्ठिनः ।
आविर्भूतानि सामानि ततश्छन्दांसि तान्यथ ॥ ४ ॥
अथर्व्वाणमशेषञ्च भृङ्गाञ्जनचयप्रभं ।
यावद्घोरस्वरूपन्तदाभिचारिकशान्तिकं ॥ ५ ॥
उत्तरात् प्रकटीभूतं वदनात्तस्य वेधसः ।
सुखसत्त्वतमःप्रायं सौम्यासौम्यस्वरूपवत् ॥ ६ ॥
ऋचो रजोगुणाः सत्त्वं यजुषाञ्च गुणा मुने ।
तमोगुणानि सामानि तमःसत्त्वमथर्व्वसु ॥ ७ ॥
एतानि ज्वलमानानि तेजसाऽप्रतिमेन वै ।
पृथक् पृथगवस्थानं भाञ्जि पूर्व्वमिवाभवन् ॥ ८ ॥
ततस्तदाद्यं यत्तेज ओमित्युक्ताभिशब्द्यते ।
तस्य स्वभावाद्यत्तेजस्तत्समावृत्य संस्थितं ॥ ९ ॥

यथा यजुर्म्मयस्तेजस्तद्वत्साम्नां महामुने ।
एकत्वमुपयातानि परे तेजसि संश्रये ॥ १० ॥
शान्तिकं पौष्टिकञ्चैव तथा चैवाभिचारिकं ।
ऋगादिषु लयं ब्रह्मन् वितयं विष्वयागमत् ॥ ११ ॥
ततो विश्वमिदं सद्यस्तमोनाशात् सुनिर्म्मलं ।
विभावनीयं विप्रर्षे तिर्य्यगूर्द्धमधस्तथा ॥ १२ ॥
ततस्तन्मण्डलीभूतं छान्दसं तेज उत्तमं ।
परेण तेजसा ब्रह्मन्नेकत्वमुपयाति तत् ॥ १३ ॥
आदित्यसंज्ञामगमदादावेव यतोऽभवत् ।
विश्वस्यास्य महाभाग कारणञ्चाव्ययात्मकं ॥ १४ ॥
प्रातर्म्मध्यन्दिने चैव तथा चैवापराह्णिके ।
त्रयी तपति सा काले ऋग्यजुःसामसंज्ञिता ॥ १५ ॥
ऋचस्तपन्ति पूर्व्वाह्णे मध्याह्ने च यजूंषि वै ॥
सामानि चापराह्णे वै तपन्ति मुनिसत्तम ॥ १६ ॥
शान्तिकं ऋक्षु पूर्व्वाह्णे यजुःष्वन्तरपौष्टिकं ॥
विन्यस्तं साम्नि सायाह्ने आभिचारिकमन्ततः ॥ १७ ॥
मध्यन्दिनेऽपराह्णे च समे चैवाभिचारिकं ।
अपराह्णे पितृणान्तु साम्ना कार्य्याणि तानि वै ॥ १८ ॥
विसृष्टौ ऋङ्मयो ब्रह्मा स्थितो विष्णुर्यजुर्म्मयः ।
रुद्रः साममयोऽन्ते च तस्मात्तस्याशुचिर्ध्वनिः ॥ १९ ॥
तदेवं भगवान् भास्वान् वेदात्मा वेदसंस्थितः ।
वेदविद्यात्मकश्चैव परः पुरुष उच्यते ॥ २० ॥

स्वर्गस्थित्यन्तहेतुश्च रजःसत्त्वादिकान् गुणान् ।
आश्रित्य ब्रह्मविष्ण्वादिसंज्ञामभ्येति शाश्वतः ॥ २१ ॥
देवैः सदेज्यः स तु वेदमूर्त्ति-
रमूर्त्तिराद्योऽखिलमर्त्यमूर्त्तिः ।
विश्वाश्रयं ज्योतिरवेद्यधर्म्मा
वेदान्तगम्यः परमः परेभ्यः ॥ २२ ॥

इति श्रीमार्कण्डेयपुराणे मार्त्तण्डमाहात्म्ये ॥ १०२ ॥

---

अधिकशततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

तस्मिं सन्ताप्यमाने तु तेजसोर्द्धमधस्तथा ।
सिसृक्षुश्चिन्तयामास पद्मयोनिः पितामहः ॥ १ ॥
सृष्टिः कृतापि मे नाशं प्रयास्यत्यभितेजसः ।
भास्वतः सृष्टिसंहारस्थितिहेतोर्महात्मनः ॥ २ ॥
अप्राणाः प्राणिनः सर्व्वे आपः शुष्यन्ति तेजसा ।
न चाम्भसा विना सृष्टिर्व्विश्वस्यास्य भविष्यति ॥ ३ ॥
इति सञ्चिन्त्य भगवान् स्तोत्रं भगवतो रवेः ।
चकार तन्मयो भूत्वा ब्रह्मा लोकपितामहः ॥ ४ ॥

ब्रह्मोवाच ॥

नमस्ये यन्मयं सर्व्वमेतत्सर्व्वमयश्च यः ।
विश्वमूर्त्तिः परं ज्योतिर्यत्तद्ध्यायन्ति योगिनः ॥ ५ ॥

य ऋङ्मयो यो यजुषांनिधानं
सान्नाञ्च यो योनिरचिन्त्यशक्तिः ।
त्रयीमयी स्थूलतयाऽर्द्धमात्रा
परस्वरूपो गुणपारयोग्यः ॥ ६ ॥
तं सर्व्वहेतुं परमच्युवेद्य-
मादौ परज्योतिरवह्निरूपं ।
स्थूलञ्च देवात्मतया नमस्ये
भास्वन्तमाद्यं परमं परेभ्यः ॥ ७ ॥
सृष्टिङ्करोमि यदहं तव शक्तिराद्या
तत्प्रेरितो जलमहीपवनाग्निरूपां ।
तद्देवतादिविषयां प्रणवाद्यशेषां
नात्मेच्छया स्थितिलयावपि तद्वदेव ॥ ८ ॥
वह्निस्त्वमेव जलशोषणतः पृथिव्याः
सृष्टिङ्करोमि जगताञ्च तथाद्यपाकं ।
व्यापी त्वमेव भगवन् गगनस्वरूपं
त्वं पञ्चधा जगदिदं परिपासि विश्वं ॥ ९ ॥
यज्ञैर्यजन्ति परमात्मविदो भवन्तं
विष्णुस्वरूपमखिलेष्टिमयं विवस्वन् ।
ध्यायन्ति चापि यतयो नियतात्मचित्ताः
सर्व्वेश्वरं परममात्मविमुक्तिकामाः ॥ १० ॥
नमस्ते देवरूपाय यज्ञरूपाय ते नमः ।
परब्रह्मस्वरूपाय चिन्त्यमानाय योगिभिः ॥ ११ ॥

उपसंहर तेजोयत्तेजसः संहतिस्तव ।
सृष्टेर्विघाताय विभो सृष्टौचाहं समुद्यतः ॥ १२ ॥

मार्कण्डेय उवाच ॥

इत्येवं संस्तुतो भास्वान् ब्रह्मणा सर्गकर्तृणा ।
उपसंहृतवांस्तेजः परं स्वल्पमधारयत् ॥ १३ ॥
चकार च ततः सृष्टिं जगतः पद्मसम्भवः ।
तथा तेषु महाभागः पूर्व्वकल्पान्तरेषु वै ॥ १४ ॥
देवासुरादीन् मर्त्त्यांश्च पश्वादीन् वृक्षवीरुधः ।
ससर्ज्ज पूर्व्ववद्ब्रह्मा नरकांश्च महामुने ॥ १५ ॥

इति श्रीमार्कण्डेयपुराणे आदित्यस्तवो नाम ॥ १०३ ॥

---

## चतुरधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

सृष्ट्वा जगदिदं ब्रह्मा प्रविभागमथाकरोत् ।
वर्णाश्रमसमुद्राद्रिद्वीपानां पूर्व्ववद्यथा ॥ १ ॥
देवदैत्योरगादीनां रूपस्थानानि पूर्व्ववत् ।
देवेभ्य एव भगवानकरोत् कमलोद्भवः ॥ २ ॥
ब्रह्मणस्तनयो योऽभून्मरीचिरिति विश्रुतः ।
कश्यपस्तस्य पुत्रोऽभूत् काश्यपो नाम नामतः ॥ ३ ॥

दक्षस्य तनया ब्रह्मन् तस्य भार्य्यास्त्रयोदश ।
बह्वस्तत्सुताश्चासन् देवदैत्योरगादयः ॥ ४ ॥
अदितिर्जनयामास देवांस्त्रिभुवनेश्वरान् ।
दैत्यान् दितिर्दनुश्चोग्रान् दानवानुरुविक्रमान् ॥ ५ ॥
गरुडारुणौ च विनता यक्षरक्षांसि वै खसा ।
कद्रुः सुषाव नागांश्च गन्धर्व्वान् सुषुवे मुनिः ॥ ६ ॥
क्रोधाया जज्ञिरे कुल्या रिष्टायाश्चाप्सरोगणाः ।
ऐरावतादीन्मातङ्गानिरा च सुषुवे द्विज ॥ ७ ॥
ताम्रा च सुषुवे श्येनीप्रमुखाः कन्यका द्विज ।
यासां प्रसूताः खगमाः श्येनभासशुकादयः ॥ ८ ॥
इलायाः पादपा जाताः प्रधायास्पतसां गणाः ।
अदित्यां या समुत्पन्ना कश्यपस्येति सन्ततिः ॥ ९ ॥
तस्याश्च पुत्रदौहित्रैः पौत्रदौहित्रिकादिभिः ।
व्याप्तमेतज्जगत् सूत्या तेषां तासाञ्च वै मुने ॥ १० ॥
तेषां कश्यपपुत्राणां प्रधाना देवतागणाः ।
सात्त्विका राजसास्त्वेते तामसाश्च मुने गणाः ॥ ११ ॥
देवान् यज्ञभुजश्चक्रे तथा त्रिभुवनेश्वरान् ।
ब्रह्मा ब्रह्मविदां श्रेष्ठः परमेष्ठी प्रजापतिः ॥ १२ ॥
तानबाधन्त सहिताः सपत्ना दैत्यदानवाः ।
राक्षसाश्च तथा युद्धं तेषामासीत् सुदारुणं १३ ॥
दिव्यं वर्षसहस्रन्तु पराजीयन्त देवताः ।
जयिनश्चाभवन् विप्र बलिनो दैत्यदानवाः ॥ १४ ॥

ततो निराकृतान् पुत्त्रान् दैतेयैर्दानवैस्तथा ।
हृतत्रिभुवनान् दृष्ट्वा अदितिर्मुनिसत्तम ॥ १५ ॥
आच्छिन्नयज्ञभागांश्च शुचा संपीडिता भृशं ।
आराधनाय सवितुः परं यत्नं प्रचक्रमे ॥ १६ ॥
एकाग्रा नियताहारा परं नियममास्थिता ।
तुष्टाव तेजसां राशिं गगनस्थं दिवाकरं ॥ १७ ॥

अदितिरुवाच ॥

नमस्तुभ्यं परां सूक्ष्मां सौवर्णीं बिभ्रते तनुं ।
धाम धामवतामीश धाम्नामाधार शाश्वत ॥ १८ ॥
जगतामुपकाराय त्वामहं स्तौमि गोपते ।
आददानस्य यद्रूपं तीव्रं तस्मै नमाम्यहं ॥ १९ ॥
ग्रहीतुमष्टमासेन कालेनेन्दुमयं रसं ।
बिभ्रतस्तव यद्रूपमतितीव्रं नतास्मि तत् ॥ २० ॥
तमेव मुञ्चतः सर्व्वं रसं वै वर्षणाय यत् ।
रूपमाप्यायकं भास्वंस्तस्मै मेघाय ते नमः ॥ २१ ॥
वार्य्युत्सर्गविनिष्पन्नमशेषञ्चौषधीगणं ।
पाकाय तव यद्रूपं भास्करं तं नमाम्यहं ॥ २२ ॥
यच्च रूपं तवातीव हिमोत्सर्गादिशीतलं ।
तत्कालसस्यपोषाय तरणे तस्य ते नमः ॥ २३ ॥
नातितीव्रं च यद्रूपं नातिशीतञ्च यत्तव ।
वसन्तर्त्तौ रवे सौम्यं तस्मै देव नमो नमः ॥ २४ ॥
आप्यायनमशेषाणां देवानाञ्च तथा परं ।

पितृणाञ्च नमस्तस्मै शस्यानां पाकहेतवे ॥ २५ ॥
यद्रूपं जीवनायैकं वीरुधाममृतात्मकं ।
पीयते देवपितृभिस्तस्मै सोमात्मने नमः ॥ २६ ॥
आभ्यां यदर्करूपाभ्यां रूपं विश्वमयन्तव ।
समेतमग्नीषोमाभ्यां नमस्तस्मै गुणात्मने ॥ २७ ॥
यद्रूपं ऋग्यजुःसाम्नामैक्येन तपते तव ।
विश्वमेतत्त्रयीसंज्ञं नमस्तस्मै विभावसो ॥ २८ ॥
यत्तु तस्मात्परं रूपं ओमित्युक्ताभिशब्दितं ।
अस्थूलानन्तममलं नमस्तस्मै सदात्मने ॥ २९ ॥

मार्कण्डेय उवाच ॥

एवं सा नियता देवी चक्रे स्तोत्रमहर्निशं ।
निराहारा विवस्वन्तमारिराधयिषुर्मुने ॥ ३० ॥
ततः कालेन महता भगवांस्तपनोऽम्बरे ।
प्रत्यक्षतामगादस्या दाक्षायण्या द्विजोत्तम ॥ ३१ ॥
सा ददर्श महाकूटं तेजसोऽम्बरसंश्रितं ।
भूमौ च संस्थितं भास्वत् ज्वालामालातिदुर्दृशं ॥ ३२ ॥
तं दृष्ट्वा सा तदा देवी साध्वसं परमङ्गता ।
जगाद मे प्रसीदेति न त्वां पश्यामि गोपते ॥ ३३ ॥
यथा दृष्टवती पूर्व्वमम्बरस्थं सुदुर्दृशं ।
निराहारा विवस्वन्तं तपन्तं तदनन्तरं ॥ ३४ ॥
संघातं तेजसां तद्वदिह पश्यामि भूतले ।
प्रसादं कुरु पश्येयं यद्रूपन्ते दिवाकर ॥

भक्तानुकम्पक विभो भक्ताहं पाहि मे सुतान् ॥ ३५ ॥

त्वं धाता विसृजसि विश्वमेतत्

त्वं पासि स्थितिकरणाय संप्रवृत्तः ।

त्वय्यन्ते लयमखिलं प्रयाति तत्त्वं

त्वत्तोऽन्या न हि गतिरस्ति सर्व्वलोके ॥ ३६ ॥

त्वं ब्रह्मा हरिरजसंज्ञितस्त्वमिन्द्रो

वित्तेशः पितृपतिरम्बुपतिः समीरः ।

सोमोऽग्निर्गगनमहीधरोऽब्धिः

किं स्तव्यं तव सकलात्मरूप धाम्नः ॥ ३७ ॥

यज्ञेश त्वामनुदिनमात्मकर्मसक्ताः

स्तुवन्तो विविधपदैर्द्विजा यजन्ति ।

ध्यायन्तो विनियतचेतसो भवन्तं

योगस्थाः परमपदं प्रयान्ति योगमूर्त्या ॥ ३८ ॥

तपसि पचसि विश्वं पासि भस्मीकरोषि

प्रकटयसि मयूखैर्ह्लादयस्यम्बुगर्भैः ।

सृजसि पुनरपि त्वं भावनास्वच्युतासु

प्रणमितसरमर्त्यैः पापकृद्भिस्त्वगम्यः ॥ ३९ ॥

इति श्रीमार्कण्डेयपुराणे दिवाकरस्तुतिर्नाम ॥ १०४ ॥

पञ्चाधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

ततः स्वतेजसस्तस्मादाविर्भूतो विभावसुः ।
अदृश्यत तदादित्यस्तप्तताम्रोपमः प्रभुः ॥ १ ॥
अथ तां प्रणतां देवीं तस्य सन्दर्शनात्मने ।
प्राह भास्वान् वृणुष्वेष्टं वरं मत्तो यमिच्छसि ॥ २ ॥
प्रणता शिरसा सा च जानुपीडितमेदिनी ।
प्रत्युवाच विवस्वन्तं वरदं समुपस्थितं ॥ ३ ॥
देव प्रसीद पुत्राणां हृतं त्रिभुवनं मम ।
यज्ञभागाश्च दैत्यैश्च दानवैश्च बलाधिकैः ॥ ४ ॥
तन्निमित्तप्रसादं त्वं कुरुष्व मम गोपते ।
अंशेन तेषां भ्रातृत्वं गत्वा नाशय तद्रिपून् ॥ ५ ॥
यथा मे तनया भूयो यज्ञभागभुजः प्रभो ।
भवेयुरधिपाश्चैव त्रैलोक्यस्य दिवाकर ॥ ६ ॥
तथानुकम्पा पुत्राणां सुप्रसन्नो रवे मम ।
कुरु प्रपन्नार्त्तिहर स्थितिकर्त्ता त्वमुच्यते ॥ ७ ॥

मार्कण्डेय उवाच ॥

ततस्तामाह भगवान् भास्करो वारितस्करः ।
प्रणतामदितिं विप्र प्रसादं सुमुखो विभुः ॥ ८ ॥
सहस्रांशेन ते गर्भे सम्भूयाहमशेषतः ।
त्वत्पुत्रशत्रूनदिते नाशयाम्याशु निर्वृता: ॥ ९ ॥

इत्युक्त्वा भगवान् भास्वानन्तर्द्धानमुपागमत् ।
निवृत्ता सापि तपसः संप्राप्ताखिलवाञ्छिता ॥ १० ॥
ततो रश्मिसहस्रन्तु-सौसुम्नाख्यो रवेः करः ।
विप्रावतारं संचक्रे देवमातुरथोदरे ॥ ११ ॥
कृच्छ्रचान्द्रायणादीनि सा च चक्रे समाहिता ।
शुचिनी धारयामास दिव्यं गर्भमिति द्विज ॥ १२ ॥
ततस्तां कश्यपः प्राह किञ्चित्कोपप्लुताक्षरं ।
किम्मारयसि गर्भाण्डमिति नित्योपवासिनी ॥ १३ ॥
सा च तं प्राह गर्भाण्डमेतत्पश्यसि कोपन ।
न मारितं विपक्षाणां मृत्यवे तद्भविष्यति ॥ १४ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा तं तदा गर्भमुत्ससर्ज्ज सुरावनिः ।
जाज्वल्यमानन्तेजोभिः पत्युर्व्वचनकोपिता ॥ १५ ॥
तं दृष्ट्वा कश्यपो गर्भमुद्यद्भास्करवर्च्चसं ।
तुष्टाव प्रणतो भूत्वा ऋग्भिराद्याभिरादरात् ॥ १६ ॥
संस्तूयमानः स तदा गर्भाण्डात्प्रकटोऽभवत् ।
पद्मपत्रसवर्णाभस्तेजसा व्याप्तदिङ्मुखः ॥ १७ ॥
अथान्तरीक्षादाभाष्य कश्यपं मुनिसत्तमं ।
सतोयमेघगम्भीरवागुवाचाशरीरिणी ॥ १८ ॥
मारितं ते यतः प्रोक्तमेतदण्डं त्वया मुने ।
तस्मान्मुने सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति ॥ १९ ॥
सूर्य्याधिकारञ्च विभुर्जगत्येष करिष्यति ।

हनिष्यत्यसुरांश्चायं यज्ञभागहरानरीन् ॥ २० ॥
देवा निशम्येति वचो गगनात्समुपागतम् ।
प्रहर्षमतुलं याता दानवाश्च हतौजसः ॥ २१ ॥
ततो युद्धाय दैतेयानाजुहाव शतक्रतुः ।
सह देवैर्मुदा युक्ता दानवाश्च समभ्ययुः ॥ २२ ॥
तेषां युद्धमभूद्घोरं देवानामसुरैः सह ।
शस्त्रास्त्रदीप्तिसंदीप्तं समस्तभुवनान्तरं ॥ २३ ॥
तस्मिन् युद्धे भगवता मार्त्तण्डेन निरीक्षिताः ।
तेजसा दह्यमानास्ते भस्मीभूता महासुराः ॥ २४ ॥
ततः प्रहर्षमतुलं प्राप्ताः सर्व्वे दिवौकसः ।
तुष्टुवुस्तेजसां योनिं मार्त्तण्डमदितिन्तथा ॥ २५ ॥
स्वाधिकारांस्तथा प्राप्ता यज्ञभागांश्च पूर्व्ववत् ।
भगवानपि मार्त्तण्डः स्वाधिकारमथाकरोत् ॥ २६ ॥
कदम्बपुष्पवद्भास्वानधश्चोर्द्ध्वञ्च रश्मिभिः ।
वृत्ताग्निपिण्डसदृशो दध्रे नातिस्फुटवपुः ॥ २७ ॥

इति श्रीमार्कण्डेयपुराणे मार्त्तण्डोत्पत्तिर्नाम ॥ १०५ ॥

---

## षडधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ।

अथ तस्मै ददौ कन्यां संज्ञां नाम विवस्वते ।
प्रसाद्य प्रणतो भूत्वा विश्वकर्म्मा प्रजापतिः ॥ १ ॥

वैवस्वतस्तु सम्भूतो मनुस्तस्यां विवस्वतः ।
पूर्व्वमेव तथा ख्यातं तत्स्वरूपं विशेषतः ॥ २ ॥
त्रीण्यपत्यान्यसौ तस्यां जनयामास गोपतिः ।
द्वौ पुत्रौ सुमहाभागौ कन्याञ्च यमुनां मुने ॥ ३ ॥
मनुर्व्विवस्वतो ज्येष्ठः श्राद्धदेवः प्रजापतिः ।
ततो यमो यमी चैव यमलौ संबभूवतुः ॥ ४ ॥
यत्तेजोऽभ्यधिकन्तस्य मार्त्तण्डस्य विवस्वतः ।
तेनातितापयामास त्रींल्लोकान् सचराचरान् ॥ ५ ॥
गोलाकारन्तु तं दृष्ट्वा संज्ञा रूपं विवस्वतः ।
असहन्ती महत्तेजः स्वच्छायां प्रेच्य साऽब्रवीत् ॥ ६ ॥

संज्ञोवाच ॥

अहं यास्यामि भद्रन्ते स्वमेव भवनं पितुः ।
निर्व्विकारं त्वयाप्यत्र स्थेयं मच्छासनाच्छुभे ॥ ७ ॥
इमौ च बालकौ मह्यं कन्या च वरवर्णिनी ।
सम्भाव्यौ नैव चाख्येयमिदम्भगवते त्वया ॥ ८ ॥

छायोवाच ॥

आकेशग्रहणाद्देवि आशापान्नैव कर्हिचित् ।
आख्यास्यामि मतं तुभ्यं गम्यतां यत्र वाञ्छितं ॥ ९ ॥
इत्युक्ता छायया संज्ञा जगाम पितृमन्दिरं ।
तत्रावसत् पितुर्गेहे कञ्चित्कालं शुभेक्षणा ॥ १० ॥
भर्त्तुः समीपं याहीति पित्रोक्ता सा पुनः पुनः ।
अगच्छद्वडवा भूत्वा कुरून् विप्रोत्तरांस्ततः ॥ ११ ॥

तत्र तेपे तपः साध्वी निराहारा महामुने।
पितुः समीपं यातायाः संज्ञाया वाक्यतत्परा ॥ १२ ॥
तद्रूपधारिणी छाया भास्करं समुपस्थिता।
तस्याञ्च भगवान् सूर्य्यः संज्ञायामिति चिन्तयन् ॥ १३ ॥
तथैव जनयामास द्वौ सुतौ कन्यकां तथा।
पूर्व्वजस्य मनोस्तुल्यः सावर्णिस्तेन सोऽभवत् ॥ १४ ॥
यस्तयोः प्रथमं जातः पुत्रयोर्द्विजसत्तम।
द्वितीयो योऽभवच्चान्यः स ग्रहोऽभूच्छनैश्चरः ॥ १५ ॥
कन्याभूत्तपती या तां वव्रे सम्वरणो नृपः।
संज्ञा तु पार्थिवी तेषामात्मजानां यथाऽकरोत् ॥ १६ ॥
स्नेहान्न पूर्व्वजातानां तथा कृतवती सती।
मनुस्तत्क्षान्तवांस्तस्या यमश्चास्या न चक्षमे ॥ १७ ॥
बहुशो याच्यमानस्तु पितुः पत्न्या सुदुःखितः।
स वै कोपाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् ॥ १८ ॥
पदा सन्तर्जयामास छायासंज्ञां यमो मुने।
ततः शशाप च यमं संज्ञा सामर्षिणी भृशं ॥ १९ ॥

छायोवाच ॥

पदा तर्ज्जयसे यस्मात् पितृभार्य्यां गरीयसीं।
तस्मात्तवैव चरणः पतिष्यति नसंशयः ॥ २० ॥
यमस्तु तेन शापेन भृशं पीडितमानसः।
मनुना सह धर्मात्मा सर्व्वं पित्रे न्यवेदयत् ॥ २१ ॥

यम उवाच॥

स्नेहेन तुल्यमस्मासु माता देव न वर्त्तते।
विसृज्य ज्यायसोऽप्यस्मान् कनीयांसौ बुभूषति॥ २२॥
तस्यां मयोद्यतः पादो न तु देहे निपातितः।
बाल्याद्वा यदि वा मोहात्तद्भवान् क्षन्तुमर्हति॥ २३॥
शप्तोऽहं तात कोपेन जनन्या तनयो यतः।
ततो नमस्ये जननीं इमां वै तपतां वर॥ २४॥
विगुणेष्वपि पुत्रेषु न माता विगुणा पितः।
पादस्ते पततां पुत्र कथमेतत्प्रवक्ष्यति॥ २५॥
तव प्रसादाच्चरणो न पतेद्भगवान् यथा।
मातृशापादयं मेऽद्य तथा चिन्तय गोपते॥ २६॥

रविरुवाच॥

असंशयमिदं पुत्र भविष्यत्यत्र कारणं।
येन त्वामाविशत्क्रोधो धर्मज्ञं सत्यवादिनं॥ २७॥
सर्व्वेषामेव शापानां प्रतिघातो हि विद्यते।
न तु मात्राभिशप्तानां क्वचिच्छापनिवर्त्तनं॥ २८॥
न शक्यमेतन्मिथ्या तु कर्त्तुं मातुर्व्वचस्तव।
किञ्चित्तव विधास्यामि पुत्रस्नेहादनुग्रहं॥ २९॥
कृमयो मांसमादाय प्रयास्यन्ति महीतलं।
कृतं तस्या वचः सत्यं त्वञ्च त्रातो भविष्यसि॥ ३०॥

मार्कण्डेय उवाच॥

आदित्यस्त्वब्रवीच्छायां किमर्थं तनयेषु वै।

तुल्येष्वप्यधिकः स्नेह एकत्र क्रियते त्वया ॥ ३१ ॥
नूनं नैषां त्वं जननी संज्ञा कापि त्वमागता ।
विगुणेष्वप्यपत्येषु कथं माता शपेत्सुतं ॥ ३२ ॥

मार्कण्डेय उवाच ॥

सा तत्परिहरन्ती च नाचचक्षे विवस्वतः ।
स चात्मानं समाधाय मर्कस्तत्त्वमपश्यत ॥ ३३ ॥
तं शप्तुमुद्यतं दृष्ट्वा छायासंज्ञा दिवस्पतिं ।
भयेन कम्पती ब्रह्मन् यथा वृत्तं न्यवेदयत् ॥ ३४ ॥
विवस्वांस्तु ततः क्रुद्धः श्रुत्वा श्वशुरमभ्यगात् ।
स चापि तं यथान्यायमर्च्चयित्वा दिवाकरं ॥
निर्द्दग्धुकामं रोषेण सान्त्वयामास सुव्रतः ॥ ३५ ॥

विश्वकर्म्मोवाच ॥

तवातितेजसा व्याप्तमिदं रूपं सुदुःसहं ।
असहन्ती ततः संज्ञा वने चरति वै तपः ॥ ३६ ॥
द्रक्ष्यते तां भवानद्य स्वभार्य्यां शुभचारिणीं ।
रूपार्थं भवतोऽरण्ये चरन्तीं सुमहत्तपः ॥ ३७ ॥
श्रुतं मे ब्रह्मणो वाक्यं यदि ते देव रोचते ।
रूपं निवर्त्तयाम्येतत् तव कान्तं दिवस्पते ॥ ३८ ॥

मार्कण्डेय उवाच ॥

यतो हि भास्वतो रूपं प्रागासीत्परिमण्डलं ।
ततस्तथेति तं प्राह त्वष्टारं भगवान् रविः ॥ ३९ ॥
विश्वकर्मा त्वनुज्ञातः शाकद्वीपे विवस्वतः ।

भ्रमिमारोप्य तत्तेजःशातनायोपचक्रमे ॥ ४० ॥
भ्रमताऽशेषजगतां नाभिभूतेन भास्वता ।
समुद्राद्रिवनोपेता साऽरोह मही नभः ॥ ४१ ॥
गगनञ्चाखिलं ब्रह्मन् सचन्द्रग्रहतारकं ।
अधो गतं महाभाग बभूवाक्षिप्तमाकुलं ॥ ४२ ॥
विक्षिप्तसलिलाः सर्व्वे बभूवुश्च तथाब्धयः ।
व्यभिद्यन्त महाशैलाः शीर्णसानुनिबन्धनाः ॥ ४३ ॥
ध्रुवाधाराण्यशेषाणि धिष्ण्यानि मुनिसत्तम ।
त्रुट्यद्रश्मिनिबन्धानि अधो जग्मुः सहस्रशः ॥ ४४ ॥
वेगभ्रमणसंजातवायुक्षिप्ताः समन्ततः ।
व्यशीर्य्यन्त महामेघा घोररावविचारिणः ॥ ४५ ॥
भास्वद्भ्रमणविभ्रान्तं भूम्याकाशरसातलं ।
जगादाकुलमत्यर्थं तदासीन्मुनिसत्तम ॥ ४६ ॥
त्रैलोक्ये सकले विप्र भ्रममाणे सुरर्षयः ।
देवाश्च ब्रह्मणा सार्द्धं भास्वन्तमभितुष्टुवुः ॥ ४७ ॥
आदिदेवोऽसि देवानां ज्ञातमेतत्स्वरूपतः ।
सर्गस्थित्यन्तकालेषु त्रिधा भेदेन तिष्ठसि ॥ ४८ ॥
स्वस्ति तेऽस्तु जगन्नाथ घर्मवर्षाहिमाकर ।
कुरुष्व शान्तिं लोकानां देवदेव दिवाकर ॥ ४९ ॥
इन्द्रश्चागत्य तं देवं लिख्यमानं यथाऽस्तुवत् ।
जय देव जगद्व्यापिन् जयाशेषजगत्पते ॥ ५० ॥
ऋषयश्च ततः सर्व्वे वशिष्ठात्रिपुरोगमाः ।

तुष्टुवुर्व्विविधैः स्तोत्रैः स्वस्तिस्वस्तीतिवादिनः ॥ ५१ ॥
वेदोक्ताभिरथाग्र्याभिर्वालिखिल्याश्च तुष्टुवुः ।
ऋग्भिराद्याभिर्भास्वन्तं लिख्यमानं मुदा युताः ॥ ५२ ॥
त्वं नाथ मोक्षिणां मोक्षो ध्येयस्त्वं ध्यानिनां परः ।
त्वं गतिः सर्व्वभूतानां कर्मकाण्डेऽपि वर्त्तताम् ॥ ५३ ॥
शं प्रजाभ्योऽस्तु देवेश शन्नोऽस्तु जगताम्पते ।
शन्नोऽस्तु द्विपदे नित्यं शन्नश्चास्तु चतुष्पदे ॥ ५४ ॥
ततो विद्याधरगणा यक्षराक्षसपन्नगाः ।
कृताञ्जलिपुटाः सर्व्वे शिरोभिः प्रणता रविं ॥ ५५ ॥
ऊचुरेवंविधा वाचो मनःश्रोत्रसुखावहाः ।
सह्यं भवतु ते तेजो भूतानां भूतभावन ॥ ५६ ॥
ततो हाहाहुहुश्चैव नारदस्तुम्बुरुस्तथा ।
उपगायितुमारब्धा गान्धर्व्वकुशला रविं ॥ ५७ ॥
षड्जमध्यमगान्धारग्रामत्रयविशारदाः ।
मूर्च्छनाभिश्च तालैश्च सम्प्रयोगैः सुखप्रदं ॥ ५८ ॥
विश्वाची च घृताची च उर्व्वश्यथ तिलोत्तमा ।
मेनका सहजन्या च रम्भाद्याप्सरसां वराः ॥ ५९ ॥
नन्ततुर्जगतामीशे लिख्यमाने विभावसौ ।
हावभावविलासाढ्यान् कुर्व्वन्तोऽभिनयान् बहून् ॥ ६० ॥
प्रावाद्यन्त ततस्तत्र वेणुवीणादिदर्दुराः ।
पणवाः पुष्कराश्चैव मृदङ्गाः पटहानकाः ॥ ६१ ॥
देवदुन्दुभयः शङ्खाः शतशोऽथ सहस्रशः ।

गायद्भिश्चैव गन्धर्व्वैर्नृत्यद्भिश्चाप्सरोगणैः ॥ ६२ ॥
तूर्य्यवादित्रघोषैश्च सर्वं कोलाहलीकृतं ।
ततः कृताञ्जलिपुटा भक्तिनम्रात्ममूर्त्तयः ॥ ६३ ॥
लिख्यमानं सहस्रांशुं प्रणेमुः सर्वदेवताः ।
ततः कोलाहले तस्मिन् सर्वदेवसमागमे ॥
तेजसः शातनञ्चक्रे विश्वकर्मा शनैः शनैः ॥ ६४ ॥

इति हिमजलघर्मकालहेतो-
र्हरकमलासनविष्णुसंस्तुतस्य ।
तनुपरिलिखनन्निशम्य भानो-
र्व्रजति दिवाकरलोकमायुषोऽन्ते ॥ ६५ ॥

इति श्रीमार्कण्डेयपुराणे भानुतनुलिखने । १०८ ।

---

सप्ताधिक शततमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

लिख्यमाने ततो भानौ विश्वकर्मा प्रजापतिः ।
उद्भूतपुलकस्तोत्रमिदञ्चक्रे विवस्वतः ॥ १ ॥

विवस्वते प्रणतहितानुकम्पिने
महात्मने समजवसप्तसप्तये ।
सुतेजसे कमलकुलावबोधिने
नमस्तमःपटलपटावपाटिने ॥ २ ॥

पावनातिशयपुण्यकर्म्मणे
नैककामविषयप्रदायिने ।
भास्वरानलमयूखधायिने
सर्व्वलोकहितकारिणे नमः ॥ ३ ॥
अजाय लोकत्रयकारणाय
भूतात्मने गोपतये वृषाय ।
नमो महाकारुणिकोत्तमाय
सूर्य्याय चक्षुःप्रभवालयाय ॥ ४ ॥
विवस्वते ज्ञानभृतान्तरात्मने
जगत्प्रतिष्ठाय जगद्धितैषिणे ।
स्वयम्भुवे लोकसमस्तचक्षुषे
सुरोत्तमायामिततेजसे नमः ॥ ५ ॥
क्षणमुदयाचलमौलिमालिने
सुरगणमहितहितो जगतः ।
त्वमुरुमयूखसहस्रवपु-
र्जगति विभासि तमांसि नुदन् ॥ ६ ॥
भव तिमिरासवपानमदात्
भवति विलोहितविग्रहवान् ।
मिहिर विभासि यतः सततं
त्रिभुवनभावनभानिकरैः ॥ ७ ॥
रथमधिरुह्य संमावयवं
चारु विकम्पितमुक्तचिरं ।

सततमिह चरथैर्भवन्
चरसि जगद्धिताय विततं ॥ ८ ॥
अमृतसुधांशुरसेन समं
विबुधं पितृनपि तर्पयसे ।
अरिगणसूदन तेन तव
प्रणिपत्य लिखामि जगद्धिताय ॥ ९ ॥
शुक्लसमवर्णहयप्रथितं
तव पदपांशुपवित्रतलं ।
नतजनवत्सल मां प्रणतं
त्रिभुवनपावन पाहि रवे ॥ १० ॥
इति सकलजगत्प्रसूतिभूतं
त्रिभुवनपावनधामभूतं ।
रविमखिलजगत्प्रदीपभूतं
देवं प्रणतोऽस्मि विश्वकर्माणं । ११ ॥

इति श्रीमार्कण्डेयपुराणे सूर्य्यस्तवनं नाम ॥ १०७ ॥

## अष्टाधिक शततमोऽध्यायः ॥



मार्कण्डेय उवाच ।

एवं सूर्य्यस्तवं कुर्व्वन् विश्वकर्मा दिवस्पतेः ।
तेजसः षोडशं भागं मण्डलस्थमधारयत् ॥ १ ॥

शातितैस्तेजसो भागैर्ष्डभिः पञ्चभिस्तथा ।
अतीव कान्तिमत्त्वाच्च भानोरासीत्तदा वपुः ॥ २ ॥
शातितञ्चास्य यत्तेजस्तेन चक्रं विनिर्मितं ।
विष्णोः शूलञ्च शर्व्वस्य शिविका धनदस्य च ॥ ३ ॥
दण्डः प्रेतपतेः शक्तिर्देवसेनापतेस्तथा ।
अन्येषाञ्चैव देवानामायुधानि स विश्वकृत् ॥ ४ ॥
चकार तेजसा भानोर्भासुराण्यरिशान्तये ।
इति शातिततेजाः स शुशुभे नातितेजसा ॥ ५ ॥
वपुर्दधार मार्त्तण्डः सर्व्वावयवशोभनं ।
स ददर्श समाधिस्थः स्वां भार्य्यां वडवाकृतिं ॥ ६ ॥
अधृष्यां सर्व्वभूतानां तपसा नियमेन च ।
उत्तरांश्च कुरून् गत्वा भूत्वाऽश्वो भानुरागमत् ॥ ७ ॥
सा च दृष्ट्वा तमायान्तं परपुंसो विशङ्कया ।
जगाम संमुखे तस्य पृष्ठरक्षणतत्परा ॥ ८ ॥
ततश्च नासिकायोगं तयोस्तत्र समेतयोः ।
वडवायाञ्च तत्तेजो नासिकाभ्यां विवस्वतः ॥ ९ ॥
देवौ तत्र समुत्पन्नावश्विनौ भिषजां वरौ ।
नासत्यदस्रौ तनयावश्ववक्त्राद्विनिर्गतौ ॥ १० ॥
मार्त्तण्डस्य सुतावेतावश्वरूपधरस्य हि ।
रेतसोऽन्ते च रेवन्तः खड्गी धन्वी तनुत्रधृक् ॥ ११ ॥
अश्वारूढः समुद्भूतो बाणतूणसमन्वितः ।
ततः स्वरूपमसमं दर्शयामास भानुमान् ॥ १२ ॥

तस्य शान्तं समालोक्य सा रूपं मुदमादधे ।
स्वरूपधारिणीञ्चेमां स निनाय निजालयं ॥ १३ ॥
संज्ञां भार्य्यां प्रीतिमतीं भास्करो वारितस्करः ।
ततः पूर्व्वसुतो योऽस्याः सोऽभूद्वैवस्वतो मनुः ॥ १४ ॥
द्वितीयश्च यमः शापात् धर्म्मदृष्टिरनुग्रहात् ।
यमस्तु तेन शापेन भृशं पीडितमानसः ॥ १५ ॥
धर्मोऽभिरोचते यस्मात् धर्म्मराजस्ततः स्मृतः ।
कृमयो मांसमादाय पादतस्ते महीतलं ॥ १६ ॥
पतिष्यन्तीति शापान्तं तस्य चक्रे पिता स्वयं ।
धर्म्मदृष्टिर्यतश्चासौ समो मित्रे तथाऽहिते ॥ १७ ॥
ततो नियोगे तं याम्ये चकार तिमिरापहः ।
तस्मै ददौ पिता विप्र भागवान् लोकपालतां ॥ १८ ॥
पितृणामाधिपत्यञ्च परितुष्टो दिवाकरः ।
यमुनाञ्च नदीञ्चक्रे कलिन्दान्तरवाहिनीं ॥ १९ ॥
अश्विनौ देवभिषजौ कृतौ पित्रा महात्मना ।
गुह्यकाधिपतित्वे च रेवन्तो विनियोजितः ॥ २० ॥
एवमप्याह च ततो भगवाँल्लोकभावितः ।
त्वमप्यशेषलोकस्य पूज्यो वत्स भविष्यसि ॥ २१ ॥
अरण्यादिमहादाववैरिदस्युभयेषु च ।
त्वां स्मरिष्यन्ति ये मर्त्या मोक्ष्यन्ते ते महापदः ॥ २२ ॥
क्षेमं बुद्धिं सुखं राज्यमारोग्यं कीर्त्तिमुन्नतिं ।
नराणां परितुष्टस्त्वं पूजितः संप्रदास्यसि ॥ २३ ॥

छायासंज्ञासुतश्चापि सावर्णिः सुमहायशाः ।
भाव्यः सोऽनागते काले मनुः सावर्णिकोऽष्टमः ॥ २४ ॥
मेरुपृष्ठे तपो घोरमद्यापि चरते प्रभुः ।
भ्राता शनैश्चरस्तस्य ग्रहोऽभूच्छासनाद्रवेः ॥ २५ ॥
यवीयसी तु या कन्याऽऽदित्यस्याभूद्द्विजोत्तम ।
अभवत्सा सरिच्छ्रेष्ठा यमुना लोकपावनी ॥ २६ ॥
यस्तु ज्येष्ठो महाभागः सर्गो यस्येह साम्प्रतं ।
विस्तरं तस्य वक्ष्यामि मनोर्वैवस्वतस्य च ॥ २७ ॥
इदं यो जन्म देवानां शृणुयाद्वा पठेत वा ।
विवस्वतस्तनूजानां रवेर्माहात्म्यमेव च ॥ २८ ॥
आपदं प्राप्य मुच्येत प्राप्नुयाच्च महायशः ।
अहोरात्रकृतं पापमेतच्छमयते श्रुतं ।
माहात्म्यमादिदेवस्य मार्त्तण्डस्य महात्मनः ॥ २९ ॥

इति श्रीमार्कण्डेयपुराणे रवेर्माहात्म्यं नाम ॥ १०८ ॥

---

## नवाधिक शततमोऽध्यायः ॥

क्रौष्टुकिरुवाच ॥

भगवन् कथितः सम्यक् भानोः सन्ततिसम्भवः ।
माहात्म्यमादिदेवस्य स्वरूपञ्चातिविस्तरात् ॥ १ ॥
भूयोऽपि भास्वतः सम्यङ्माहात्म्यं मुनिसत्तम ।
श्रोतुमिच्छाम्यहं तन्मे प्रसन्नो वक्तुमर्हसि ॥ २ ॥

मार्कण्डेय उवाच।

श्रूयतामादिदेवस्य माहात्म्यं कथयामि ते।
विवस्वतो यच्चकार पूर्व्वमाराधितो जनैः॥ ३॥
दमस्य पुत्रो विख्यातो राजाऽभूद्राज्यवर्द्धनः।
स सम्यक् पालनञ्चक्रे पृथिव्याः पृथिवीपतिः॥ ४॥
धर्मतः पाल्यमानन्तु तेन राष्ट्रं महात्मना।
ववृधेऽनुदिनं विप्र जनेन च धनेन च॥ ५॥
हृष्टपुष्टमतीवासीत्तस्मिन्राजन्यशेषतः।
राजकं सकलञ्चोर्व्यां पौरजानपदो जनः॥ ६॥
नोपसर्गो न च व्याधिर्न च व्यालोद्भवं भयं।
न चावृष्टिभयन्तच दमपुत्रे महीपतौ॥ ७॥
स ईजे च महायज्ञैर्ददौ दानानि चार्थिनां।
सुधर्मस्याविरोधेन बुभुजे विषयानपि॥ ८॥
तस्यैवं कुर्व्वतो राज्यं सम्यक् पालयतः प्रजाः।
सप्तवर्षसहस्राणि जग्मुरेकमहो यथा॥ ९॥
विदूरथस्य तनया दाक्षिणात्यस्य भूभृतः।
तस्य पत्नी बभूवाथ मानिनी नाम मानिनी॥ १०॥
कदाचित्तस्य सा सुभ्रूः शिरसोऽभ्यञ्जनादृते।
पश्यतो राजलोकस्य मुमोचाश्रूणि मानिनी॥ ११॥
तदश्रुविन्दवो गात्रे यदा तस्य महीपतेः।
तदा वीक्ष्याश्रुवदनां तामपृच्छत मानिनीं॥ १२॥
निःशब्दमश्रुमोक्षेण रुदतीन्तां विलोक्य वै।

किमेतदिति पप्रच्छ मानिनीं राज्यवर्द्धनः॥ १३॥
पृष्टा सा तु ततस्तेन भर्त्रा प्राह मनस्विनी।
नकिञ्चिदिति तां भूयः पप्रच्छ स महीपतिः॥ १४॥
बहुशः पृच्छतस्तस्य भूभृतः सा सुमध्यमा।
दर्शयामास पलितं केशभारान्तरोद्भवं॥ १५॥
एतत्पश्येति भूपाल किमिदं मन्युकारणं।
ममातिमन्दभाग्याया जहासाथ नृपस्ततः॥ १६॥
स विहस्याह तां पत्नीं शृण्वतां सर्व्वभूभृतां।
पौराणाञ्च महीपाला ये तत्रासन् समागताः॥ १७॥
शोकेनालं विशालाक्षि रोदितव्यं न ते शुभे।
जन्मर्द्धिपरिणामाद्या विकाराः सर्व्वजन्तुषु॥ १८॥
अधीताः सकला वेदा इष्टा यज्ञाः सहस्रशः।
दत्तं द्विजानां पुत्राश्च समुत्पन्ना वरानने॥ १९॥
भुक्ता भोगास्त्वया सार्द्धं ये मर्त्यैरतिदुर्लभाः।
सम्यक् च पालिता पृथ्वी साधु युद्धेष्वनुष्ठितं॥ २०॥
मित्रैः सहृष्टैर्हसितं विहृतं च वनान्तरे।
किमन्यन्न कृतं भद्रे पलितेभ्यो बिभेषि यत्॥ २१॥
भवन्तु केशाः पलिता वलयः सन्तु मे शुभे।
शैथिल्यमेतु मे कायः कृतकृत्योऽस्मि मानिनि॥ २२॥
मूर्द्ध्नि यद्दर्शितं भद्रे भवत्या पलितं मम।
चिकित्सामेष तस्याहं करोमि वनसंश्रयात्॥ २३॥
बाल्ये बालक्रिया पूर्व्वं तद्वत्कौमारके च या।

यौवने चापि या योग्या वार्द्धके वनसंश्रया ॥ २४ ॥
एवं मत्पूर्व्वकैर्भद्रे कृतन्तत्पूर्व्वकैश्च यत् ।
अतो न तेऽश्रुपातस्य किञ्चित्पश्यामि कारणं ॥ २५ ॥
अलन्ते मन्युना भद्रे तन्वभ्युदयकारि मे ।
[illegible]नं पलितस्यास्य मारोटीर्निष्प्रयोजनं ॥ २६ ॥

मार्कण्डेय उवाच ॥

ततः प्रणम्य तं भूपाः पौराश्चैव समीपगाः ।
साम्ना प्रोचुर्महीपालाः महर्षे राज्यवर्द्धनं ॥ २७ ॥
न रोदितव्यमनया तव पत्न्या नराधिप ।
रोदितव्यमिहास्माभिरथवा सर्व्वजन्तुभिः ॥ २८ ॥
त्वं ब्रवीषि यथा नाथ वनवासाश्रितं वचः ।
पतन्ति तेन नः प्राणा लालितानां त्वया नृप ॥ २९ ॥
सर्व्वे यास्यामहे भूप यदि याति भवान् वनं ।
ततोऽशेषक्रियाहानिः सर्व्वपृथ्वीनिवासिनां ॥ ३० ॥
भविष्यति न सन्देहस्त्वयि नाथ वनाश्रये ।
सा च धर्मोपघाताय यदि तन्नविमुच्यतां ॥ ३१ ॥
सप्तवर्षसहस्राणि त्वयेयं पालिता मही ।
तत्समुत्थं महापुण्यमालोकय नराधिप ॥ ३२ ॥
वने वसन्महाराज त्वं करिष्यसि यत्तपः ।
तन्महीपालनस्यास्य कलां नार्हन्ति षोडशीं ॥ ३३ ॥

राजोवाच ॥

सप्तवर्षसहस्राणि मयेयं पालिता मही ।

इदानीं वनवासस्य मम कालोऽयमागतः ॥ ३४ ॥
ममापत्यानि जातानि दृष्टा मेऽपत्यसन्ततिः ।
स्वल्पैरेव समाहोभिरन्तको न भविष्यति ॥ ३५ ॥
यदेतत्पलितं मूर्द्धि तद्विजानीत नागराः ।
दूतभूतमनार्य्यस्य मृत्योरत्युग्रकर्मणः ॥ ३६ ॥
सोऽहं राज्ये सुतं कृत्वा भोगांस्त्यक्त्वा वनाश्रयः ।
तपस्तप्स्ये समायान्ति न यावद्यमसैनिकाः ॥ ३७ ॥

मार्कण्डेय उवाच ॥

ततो यियासुः स वनं दैवज्ञानवनीपतिः ।
पुत्रराज्याभिषेकाय दिनलग्नान्यपृच्छत ॥ ३८ ॥
श्रुत्वा च ते तु नृपतेर्व्वचो व्याकुलचेतसः ।
दिनं लग्नञ्च होराञ्च न विदुः शास्त्रदृष्टयः ॥ ३९ ॥
ऊचुश्च तं महीपालं दैवज्ञा वाष्पगद्गदं ।
ज्ञानानि नः प्रणष्टानि श्रुत्वैतत्ते वचो नृप ॥ ४० ॥
ततोऽन्यनगरेभ्यश्च भृत्यराष्ट्रेभ्य एव च ।
ततस्तस्माच्च नगरात् प्राचुर्य्येणाभ्युपागमन् ॥ ४१ ॥
समुत्पत्य महीपालं तं यियासुं मुने वनं ।
प्रकम्पिशिरसो भूत्वा प्रोचुर्ब्राह्मणसत्तमाः ॥ ४२ ॥
प्रसीद पाहि नो राजन् पालिताः स्म यथा पुरा ।
सीदिष्यत्यखिलो लोकस्त्वयि भूप वनाश्रये ॥ ४३ ॥
स कुरुष्व तथा राजन् यथा नो सीदते जगत् ।

यावज्जीवामहे वीर त्वच्छायामिमे वयं॥
नेच्छामश्च भवच्छून्यं द्रष्टुं सिंहासनं विभो॥ ४४॥

मार्कण्डेय उवाच।

इत्येवं तैस्तथान्यैश्च द्विजैः पौरपुरःसरैः।
भूपैर्भृत्यैरमात्यैश्च प्रोक्तः प्रोक्तः पुनः पुनः॥ ४५॥
वनवासविनिर्ब्बन्धं नोपसंहरते यदा।
क्षमिष्यत्यन्तको नेति ददाति च तथोत्तरं॥ ४६॥
ततोऽमात्याश्च भृत्याश्च पौरवृद्धास्तथा द्विजाः।
समेत्य मन्त्रयामासुः किमत्र क्रियतामिति॥ ४७॥
तेषां मन्त्रयतां विप्र निश्चयोऽयमजायत।
अनुरागवतां तत्र महीपालेऽतिधार्मिके॥ ४८॥
सम्यग्ध्यानपरा भूत्वा प्रार्थयामः समाहिताः।
तपसाराध्य भास्वन्तमायुरस्य महीपतेः॥ ४९॥
तत्रैकनिश्चयाः कार्य्ये केचिद्देवं च भास्करं।
सम्यगर्घोपचाराद्यैरुपहारैरपूजयन्॥ ५०॥
अपरे मौनिनो भूत्वा ऋग्जापेन तथाऽपरे।
यजुषामथ साम्नाञ्च तोषयाञ्चक्रिरे रविं॥ ५१॥
अपरे च निराहारा नदीपुलिनशायिनः।
तपसा चक्रुरायस्ता भास्कराराधनं द्विजाः॥ ५२॥
अग्निहोत्रपराश्चान्ये रविसूक्तान्यहर्निशं।
जेपुस्तथापरे [illegible] भास्करे न्यस्तदृष्टयः॥ ५३॥
इत्येवमतिनिर्[illegible] भास्कराराधनं प्रति।

बहुप्रकारं चक्रुस्ते तं तं विधिमुपाश्रिताः ॥ ५४ ॥
तथा तु यततां तेषां भास्कराराधनं प्रति।
सुदामा नाम गन्धर्व्व उपगम्येदमब्रवीत् ॥ ५५ ॥
यद्याराधनमिष्टं वो भास्करस्य द्विजातयः।
तदेतत् क्रियतां येन भानुः प्रीतिमुपैष्यति ॥ ५६ ॥
तस्माद्गुरुविशालाख्यं वनं सिद्धनिषेवितं।
कामरूपे महाशैले गम्यतान्तत्र वै लघु ॥ ५७ ॥
तस्मिन्नाराधनं भानोः क्रियतां सुसमाहितैः।
सिद्धक्षेत्रं हितं तत्र सर्व्वकामानवाप्स्यथ ॥ ५८ ॥

मार्कण्डेय उवाच ॥

इति ते तद्वचः श्रुत्वा गत्वा तत् काननं द्विजाः।
ददृशुर्भास्वतस्तत्र पुण्यमायतनं शुभं ॥ ५९ ॥
तत्र ते नियताहारा वर्णा विप्रादयो द्विज।
पुष्पोपहाराद्यां पूजाञ्चक्रुरतन्द्रिताः ॥ ६० ॥
गन्धानुलेपनाद्यैश्च धूपगन्धादिकैस्तथा।
जपहोमान्नदीपाद्यैः पूजयन्ते समाहिताः ॥
कुर्व्वन्तस्तुष्टुवुर्ब्रह्मन् विवस्वन्तं द्विजातयः ॥ ६१ ॥

ब्राह्मणा ऊचुः ॥

देवदानवयक्षाणां ग्रहाणां ज्योतिषामपि।
तेजसाभ्यधिकं देवं प्रणाम शरणं रविं ॥ ६२ ॥
दिवि स्थितञ्च देवेशं द्योतयन्तं समन्ततः।
वसुधामन्तरीक्षञ्च व्याप्नुवन्तं मरीचिभिः ॥ ६३ ॥

आदित्यं भास्करं भानुं सवितारं दिवाकरं ।
पूषाणमार्य्यमाणं च स्वर्भानुं दीप्तदीधितिं ॥ ६४ ॥
चतुर्युगान्तकालाग्निं दुष्प्रेच्यं प्रलयान्तगं ।
योगीश्वरमनन्तं च रक्तं पीतं सितासितं ॥ ६५ ॥
ऋषीणामग्निहोत्रेषु यज्ञदेवेष्ववस्थितं ।
अक्षरं परमं गुह्यं मोक्षद्वारमनुत्तमं ॥ ६६ ॥
छन्दोभिरश्वरूपैश्च सकृद्युक्तैर्विहङ्गमं ।
उदयास्तमने युक्तं सदा मेरोः प्रदक्षिणे ॥ ६७ ॥
अन्ततश्च ऋतश्चैव पुण्यतीर्थं पृथग्विधं ।
विश्वस्थितिमचिन्त्यञ्च प्रपन्नाःस्म प्रभाकरं ॥ ६८ ॥
यो ब्रह्मा यो महादेवो यो विष्णुर्यः प्रजापतिः ।
वायुराकाशमापश्च पृथिवीगिरिसागराः ॥ ६९ ॥
ग्रहनक्षत्रचन्द्राद्या वानस्पत्यं द्रुमौषधं ।
व्यक्ताव्यक्तेषु भूतेषु धर्माधर्मप्रवर्त्तकः ॥ ७० ॥
ब्राह्मी माहेश्वरी चैव वैष्णवी चैव ते तनुः ।
त्रिधा यस्य स्वरूपन्तु भानोर्भास्वान् प्रसीदतु ॥ ७१ ॥
यस्य सर्व्वमजस्येदमङ्गभूतं जगत्प्रभोः ।
स नः प्रसीदतां भास्वान् जगतां यश्च जीवनं ॥ ७२ ॥
यस्यैकभास्वरं रूपं प्रभामण्डलदुर्दृशं ।
द्वितीयमैन्दवं सौम्यं स नो भास्वान् प्रसीदतु ॥ ७३ ॥
ताभ्याञ्च यस्य रूपाभ्यामिदं विश्वं विनिर्मितं ।
अग्नीषोममयं भास्वान् स नो देवः प्रसीदतु ॥ ७४ ॥

मार्कण्डेय उवाच ॥

इत्थं स्तुत्वा तदा भक्त्या सम्यक् पूजयतांस्तथा ।
तुतोष भगवान् भास्वांस्त्रिभिर्मासैर्द्विजोत्तम ॥ ७५ ॥
ततः स मण्डलादुर्य्यन्निजबिम्बसमप्रभः ।
अवतीर्य्य ददौ तेभ्यो दुर्द्दशो दर्शनं रविः ॥ ७६ ॥
ततस्ते स्पष्टरूपं तं सवितारमजं जनाः ।
पुलकोत्कम्पिनो विप्रा भक्तिनम्राः प्रणेमिरे ॥ ७७ ॥

नमो नमस्तेऽस्तु सहस्ररश्मे
सर्व्वस्य हेतुस्त्वमशेषकेतुः ।
पातास्त्वमीड्योऽखिलयज्ञधाम
ध्येयस्तथा योगविदां प्रसीद ॥ ७८ ॥

इति श्रीमार्कण्डेयपुराणे भानुस्तवः ॥ १०९ ॥

---

## दशाधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

ततः प्रसन्नो भगवान् भानुराहाखिलं जनं ।
व्रियतां यदभिप्रेतं मत्तः प्राप्तुं द्विजादयः ॥ १ ॥

मार्कण्डेय उवाच ॥

ततस्ते प्रणिपत्योचुर्व्विप्र विप्रादयो जनाः ।
ससाध्वसमशीतांशुमवलोक्य पुरः स्थितं ॥ २ ॥

प्रजा ऊचुः ॥

ततस्तं प्रणिपत्योचुर्वरदं जगदीश्वरं ।
भगवन् यदि नो भक्त्या प्रसन्नस्तिमिरापह ॥ ३ ॥
दशवर्षसहस्राणि ततो नो जीवतां नृपः ।
निरामयो जितारातिः सुकोषः स्थिरयौवनः ॥
दशवर्षसहस्राणि जीवतां राज्यवर्द्धनः ॥ ४ ॥

मार्कण्डेय उवाच ॥

तथेत्युक्ता जनान् भास्वान् दुर्दृशोऽभून्महामुने ।
तेऽपि लब्धवरा हृष्टाः समाजग्मुर्जनेश्वरं ॥ ५ ॥
यथा दत्तश्च ते तस्मै नरेन्द्राय न्यवेदयन् ।
वरं लब्ध्वा सहस्रांशोः सकाशादखिलं द्विज ॥ ६ ॥
तच्छ्रुत्वा जहृषे तस्य सा पत्नी मानिनी द्विज ।
स च राजा चिरं दध्यौ नाह किञ्चिच्च तं जनं ॥ ७ ॥
ततः सा मनिनी भूपं हर्षापूरितमानसा ।
दिष्ट्याऽऽयुषा महीपाल वर्द्धस्वेत्याह तं पतिं ॥ ८ ॥
तथा तया मुदा भर्त्ता मानिन्याथ सभाजितः ।
नाह किञ्चिन्महीपालश्चिन्ताजड़मना द्विज ॥ ९ ॥
सा पुनः प्राह भर्त्तारं चिन्तयानमधोमुखं ।
कस्मान्न हर्षमभ्येषि परमाभ्युदये नृप ॥ १० ॥
दशवर्षसहस्राणि निरुजः स्थिरयौवनः ।
भावी त्वमद्य प्रभृति किं तथापि न हृष्यसे ॥ ११ ॥
किन्तु तत्कारणं ब्रूहि यच्चिन्ताकृष्टमानसः ।

परमाभ्युदयेऽपि त्वं संप्राप्ते पृथिवीपते ॥ १२ ॥

राजोवाच ।

कथमभ्युदयो भद्रे किं सभाजयसे च माम् ।
प्राप्तौ दुःखसहस्राणां किं सभाजनयिष्यते ॥ १३ ॥
दशवर्षसहस्राणि जीविष्याम्यहमेककः ।
न त्वं तव विपत्तौ मे किंच दुःखं भविष्यति ॥ १४ ॥
पुत्रान् पौत्रान् प्रपौत्रांश्च तथान्यानिष्टबान्धवान् ।
पश्यतो मे मृतान् दुःखं किमल्पं हि भविष्यति ॥ १५ ॥
भृत्येषु चातिभक्तेषु मित्रवर्गे तथा मृते ।
भद्रे दुःखमपारं मे भविष्यति तु सन्ततम् ॥ १६ ॥
यैर्मदर्थं तपस्तप्तं कृशैर्धर्मनिसन्ततैः ।
ते मरिष्यन्त्यहं भोगी जीविष्यामीति धिक्करम् ॥ १७ ॥
सेयमापद्वरारोहे प्राप्ता नाभ्युदयो मम ।
कथं वा मन्यसे न त्वं यत्सभाजयसेऽद्य माम् ॥ १८ ॥

मालिन्युवाच ।

महाराज यथात्थ त्वं तथैवमात्र संशयः ।
मया पौरैश्च दोषोऽयं प्रीत्या नालोकितस्तव ॥ १९ ॥
एवं गतेऽत्र किं कार्य्यं नरनाथ विचिन्त्यताम् ।
नान्यथा भावि यत्प्राह प्रसन्नो भगवान्रविः ॥ २० ॥

राजोवाच ।

उपकारः कृतः पौरैः प्रीत्या भृत्यैश्च यो मम ।
कथं भोक्ष्याम्यहं भोगान् मत्वा तेषामनिष्कृतिम् ॥ २१ ॥

सोऽहमद्य प्रभृत्याद्रिं गत्वा नियतमानसः ।
तपस्तप्स्ये निराहारो भानोराराधनोद्यतः ॥ २२ ॥
दशवर्षसहस्राणि यथाहं स्थिरयौवनः ।
तस्य प्रसादाद्देवस्य जीविष्यामि निरामयः ॥ २३ ॥
तथा यदि प्रजाः सर्व्वाः भृत्यास्त्वञ्च सुताश्च मे ।
पुत्राः पौत्राः प्रपौत्राश्च सुहृदश्च वरानने ॥ २४ ॥
जीवन्त्येतं प्रसादं नः करोति भगवान्रविः ।
ततोऽहं भविता राज्ये भच्ये भोगांस्तथा मुदा ॥ २५ ॥
नचेदेवं करोत्यर्कस्तदद्रौ तव मानिनि ।
तपस्तप्स्ये निराहारो यावज्जीवितसंक्षयः ॥ २६ ॥

मार्कण्डेय उवाच ॥

इत्युक्ता सा तदा तेन तथेत्याह नराधिपं ।
जगाम तेन च समं साऽपि तं धरणीधरं ॥ २७ ॥
स तदायतनं गत्वा भार्यया सह पार्थिवः ।
भानोराराधनञ्चक्रे शुश्रूषानिरतो द्विज ॥ २८ ॥
निराहारकृशः सा च यथासौ पृथिवीपतिः ।
तेपे तपस्तथैवोग्रं शीतवातातपक्षमा ॥ २९ ॥
तस्य पूजयतो भानुं तप्यतश्च तपो महत् ।
साग्रे संवत्सरे याते ततः प्रीतो दिवाकरः ॥ ३० ॥
समस्तभृत्यपौरादिपुत्राणां च कृते द्विज ।
ददौ यथाभिलषितं वरं द्विजवरोत्तम ॥ ३१ ॥

लब्ध्वा वरं स नृपतिः सम्प्रीतात्मागमत् पुरं ।
चकार मुदितो राज्यं प्रजा धर्म्मेण पालयन् ॥ ३२ ॥
ईजे यज्ञान् स च बहून् ददौ दानान्यनेकशः ।
मानिन्या सहितो भोगान् बुभुजे च स धर्म्मवित् ॥ ३३ ॥
दशवर्षसहस्राणि पुत्रपौत्रादिभिः सह ।
भृत्यैः पौरैः समुदितः सोऽभवत् स्थिरयौवनः ॥ ३४ ॥
तस्येति चरितं दृष्ट्वा प्रमतिर्नाम भार्गवः ।
विस्मयाकृष्टहृदयो गाथामेतामगायत ॥ ३५ ॥
भानुभक्तेरहो शक्तिर्यद्राजा राज्यवर्द्धनः ।
आयुषो वर्द्धने जातः स्वजनस्य तथात्मनः ॥ ३६ ॥
इति ते कथितं विप्र यत्पृष्टोऽहं त्वया विभो ।
आदिदेवस्य माहात्म्यमादित्यस्य विवस्वतः ॥ ३७ ॥
विप्रैस्तदखिलं श्रुत्वा भानोर्माहात्म्यमुत्तमं ।
पठंश्च मुच्यते पापैः सप्तरात्रकृतं नरः ॥ ३८ ॥
अरोगी धनवानाढ्यः कुले महति धीमतां ।
जायते च महाप्राज्ञो यश्चैतद्धारयेद्बुधः ॥ ३९ ॥
मन्त्राश्च येऽत्राभिहिता भास्वतो मुनिसत्तम ।
जापः प्रत्येकमेतेषां त्रिसन्ध्यं पातकापहः ॥ ४० ॥
समस्तमेतन्माहात्म्यं यत्र पाठ्यते रवेः ।
पठ्यते तत्र भगवान् सान्निध्यं न विमुञ्चति ॥ ४१ ॥
तस्मादेतत् त्वया ब्रह्मन् भानोर्माहात्म्यमुत्तमं ।
धार्य्यं मनसि चाप्येवं सततं पुण्यमभीप्सता ॥ ४२ ॥

सुवर्णशृङ्गीमतिशोभनाङ्गीं
पयस्विनीं गां प्रददाति यो वै ।
शृणोति चैतत् [illegible]:
समं तयोः पुण्यफलं द्विजाग्र्य ॥ ४३ ॥

इति श्रीमार्कण्डेयपुराणे भानोर्माहात्म्यं समाप्तं ॥ ११० ॥

---

एकादशाधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

एवंप्रभावो भगवाननादिनिधनो रविः ।
यस्य त्वं क्रौष्टुके भक्त्या माहात्म्यं मयि पृच्छसि ॥ १ ॥
परमात्मा स योगीनां युञ्जतां चेतसां लयः ।
क्षेत्रज्ञः सांख्ययोगानां यज्ञेशो यज्विनामपि ॥ २ ॥
सूर्याधिकारं वहतो विष्णोरीशस्य वेधसः ।
मनुस्तस्याभवत्पुत्र[illegible]संश्रयः ॥ ३ ॥
मन्वन्तराधिपो विप्र यस्य [illegible]न्तरं ।
इक्ष्वाकुर्नाभगो रिष्टो [illegible] ॥ ४ ॥
नरिष्यन्तोऽथ नाभागः पृषध्रो धृष्ट [illegible] ।
एते पुत्रा मनो[illegible] ॥ [illegible] ॥
विख्यातवीर्या[illegible] ।
[illegible] ॥ [illegible] ॥

मित्रावरुणयोरिष्टिं चकार कनिकाम्बरः ।
यत्र चापहृते होतुरपचारान्महामुने ॥ ७ ॥
इला नाम समुत्पन्ना मनोः कन्या सुमध्यमा ।
तां दृष्ट्वा कन्यकां तत्र समुत्पन्नां ततो मनुः ॥ ८ ॥
तुष्टाव मित्रावरुणौ वाक्यञ्चेदमुवाच ह ।
भवत्प्रसादात्तनयो विशिष्टो मे भवेदिति ॥ ९ ॥
कृते मखे समुत्पन्ना तनया मम धीमतः ।
यदि प्रसन्नौ वरदौ तदियन्तनया मम ॥ १० ॥
प्रसादाद्भवतोः पुत्रो भवत्वतिगुणान्वितः ।
तथेति चाभ्यामुक्ते तु देवाभ्यां सैव कन्यका ॥ ११ ॥
इला समभवत् सद्यः सुद्युम्न इति विश्रुतः ।
पुनश्चेश्वरकोपेन मृगव्यामटता वने ॥ १२ ॥
स्त्रीत्वमासादितन्तेन मनुपुत्रेण धीमता ।
पुरूरवसनामानं चक्रवर्तिनमूर्जितं ॥ १३ ॥
जनयामास तनयं यच्च सोमसुतो बुधः ।
जाते सुते पुनः कृत्वा सोऽश्वमेधं महाक्रतुं ॥ १४ ॥
पुरुषत्वमनुप्राप्तः सुद्युम्नः पार्थिवोऽभवत् ।
सुद्युम्नस्य त्रयः पुत्रा उत्कलो विनयो गयः ॥ १५ ॥
पुरुषत्वे महावीर्या यज्विनः पृथुलौजसः ।
पुरुषत्वे तु ये जातास्तस्य राज्ञस्त्रयः सुताः ॥ १६ ॥
बभुजुस्ते महीमेतां धर्मे नियतचेतसः ।
स्त्रीभूतस्य तु यो जातस्तस्य राज्ञः पुरूरवाः ॥ १७ ॥

न स लेभे महाभागं यतो बुधसुतो हि सः।
ततो वशिष्ठवचनात् प्रतिष्ठानं पुरोत्तमं॥
तस्मै दत्तं स राजाभूत्तत्रातीवमनोहरे॥ १८॥

इति श्रीमार्कण्डेयपुराणे वंशानुक्रमो नाम॥ १११॥

द्वादशाधिक शततमोऽध्यायः॥

मार्कण्डेय उवाच॥

पृषध्राख्यो मनोः पुत्रो मृगव्यामगमद्वनं।
तत्र चंक्रममाणोऽसौ विपिने निर्जने वने॥ १॥
नाससाद मृगं कञ्चिद्भानुदीधितितापितः।
क्षुत्तृट्तापपरीताङ्ग इतश्चेतश्च चंक्रमन्॥ २॥
स ददर्श तदा तत्र होमधेनुं मनोहरां।
न तावता न सन्धष्टं ब्राह्मणस्याग्निहोत्रिणः॥ ३॥
स मन्यमानो गवयमिषुणा तामताडयत्।
पपात सापि तद्बाणनिर्भिन्नहृदया भुवि॥ ४॥
ततोऽग्निहोत्रिणः पुत्रो ब्रह्मचारी तपोरतिः।
ददर्श स पितुर्दृष्ट्वा होमधेनुं निपातितां॥ ५॥
गोपालः प्रेषितः पुत्रो बाभ्रव्यो नाम नामतः।
कोपामर्षपराधीनचित्तवृत्तिस्ततो मुने॥ ६॥
चुकोप विगलत्स्वेदजलस्तोयाविलेक्षणः।
तं क्रुद्धं प्रेक्ष्य स नृपः पृषध्रो मुनिदारकं॥ ७॥

प्रसीदेति जगौ कस्मात् शूद्रवत् कुरुषे स्तवं ।
न क्षत्रियं न वा वैश्यमेवं क्रोधमुपैति वै ।
यथा त्वं शूद्रवज्जातो विशिष्टे ब्राह्मणः कुले ॥ ८ ॥

मार्कण्डेय उवाच ।

इति निर्भर्त्सितस्तेन स राज्ञा मौलिनः सुतः ।
शशाप तं दुरात्मानं शूद्र एव भविष्यति ॥ ९ ॥
प्रयास्यति क्षयं ब्रह्म यत्तेऽधीतं गुरोर्मुखात् ।
होमधेनुर्मम गुरोर्यदियं हिंसिता त्वया ॥ १० ॥
एवं शप्तो नृपः क्रुद्धस्तच्छापपरिपीडितः ।
प्रतिशापपरो विप्र तोयं जग्राह पाणिना ॥ ११ ॥
सोऽपि राज्ञो विनाशाय कोपञ्चक्रे द्विजोत्तमः ।
तमभ्येत्य त्वरायुक्तो वारयामास वै पिता ॥ १२ ॥
वत्सालमलमत्यर्थं कोपेनायातिवैरिणा ।
ऐहिकामुष्मिकहितः शम एव द्विजन्मनां ॥ १३ ॥
कोपस्तपो नाशयति क्रुद्धो ध्वस्यत्यथायुषः ।
क्रुद्धस्य गलते ज्ञानं क्रुद्धस्यार्थश्च हीयते ॥ १४ ॥
न धर्मः क्रोधशीलस्य नार्थम्प्राप्नोति रोषणः ।
नालं सुखाय कामाप्तिः कोपेनाविष्टचेतसां ॥ १५ ॥
यदि राज्ञा हता धेनुरियं विज्ञानिना सता ।
युक्तमत्र दयां कर्त्तुमात्मनो हितबोधिना ॥ १६ ॥
अथवाऽजानता धेनुरियं व्यापादिता मम ।
तत्कथं शापयोग्योऽयं दुष्टं नास्य मनो यतः ॥ १७ ॥

आत्मनो हितमन्विच्छन् बाधते योऽपरं नरः ।
कर्त्तव्या मूढविज्ञाने दया तत्र दयालुभिः ॥ १८ ॥
अज्ञानतः कृते दण्डं पातयन्ति बुधा यदि ।
बुधेभ्यस्तमहं मन्ये वरमज्ञानिनो नराः ॥ १९ ॥
नास्य शापस्त्वया देयः पार्थिवस्यास्य पुत्रक ।
स्वकर्मणैव पतिता गौरेषा दुःखमृत्युना ॥ २० ॥

मार्कण्डेय उवाच ॥

पृषध्रोऽपि मुनेः पुत्रं प्रणम्यानम्रकन्धरः ।
प्रसीदेति जगादोच्चैरज्ञानाद्घातितेति च ॥ २१ ॥
मया गवयबुद्ध्या गौरबध्या घातिता मुने ।
अज्ञानाद्धोमधेनुस्ते प्रसीद त्वञ्च नो मुने ॥ २२ ॥

ऋषिपुत्त्र उवाच ॥

आजन्मनो महीपाल न मया व्याहृतं मृषा ।
क्रोधश्चाद्य महाभाग नान्यथा मे कदाचन ॥ २३ ॥
तन्नाहमेनं शक्नोमि शापं कर्त्तुं नृपान्यथा ।
यस्ते समुद्यतः शापो द्वितीयः स निवर्त्तितः ॥ २४ ॥
इत्युक्तवन्तं तं बालमादाय स पिता ततः ।
जगाम स्वाश्रमं सोऽपि पृषध्रः शूद्रतामगात् ॥ २५ ॥

इति श्रीमार्कण्डेयपुराणे पृषध्रोपाख्याने । ११२ ॥

त्रयोदशाधिकशततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

कारूषाः क्षत्रियाः शूराः करूषस्याभवन् सुताः ।
ते तु सप्तशता वीरास्तेभ्यश्चान्ये सहस्रशः ॥ १ ॥
दिष्टपुत्रस्तु नाभागः स्थितः प्रथमयौवने ।
ददर्श वैश्यतनयामतीव सुमनोहरां ॥ २ ॥
तस्यां स दृष्टमात्रायां मदनाक्षिप्तमानसः ।
बभूव भूपतनयो निःश्वासाक्षेपतत्परः ॥ ३ ॥
तस्याः स गत्वा जनकं वव्रे तां वैश्यकन्यकां ।
ततोऽनङ्गपराधीनमनोवृत्तिं नृपात्मजं ॥ ४ ॥
तच्चाह स पिता तस्या राजपुत्रं कृताञ्जलिः ।
बिभ्यत्तस्य पितुर्विप्र प्रश्रयावनतं वचः ॥ ५ ॥
भवन्तो भूभुजो भृत्या वयं वः करदायकाः ।
कथं सम्बन्धमसदृशैरस्माभिरभिवाञ्छसि ॥ ६ ॥

राजपुत्र उवाच ॥

साम्यं मानुषदेहस्य काममोहादिभिः कृतं ।
तथापि काले तैरेव योज्यते मानुषं वपुः ॥ ७ ॥
तथैव चोपकाराय जायन्ते तस्य तान्यपि ।
अन्यानि चान्ये जीवन्ति भिन्नजातिमतां सतां ॥ ८
तथा सामग्र्ययोग्यानि योग्यतां यान्ति कालतः ।
योग्यान्ययोग्यतां यान्ति कालसंस्था हि योग्यता ॥ ९

आप्याय्यते यच्छरीरमाकारादिभिरीप्सितैः ।
कालं ज्ञात्वा तथा भुक्तं तदेव परिक्षिय्यते ॥ १० ॥
इत्थं ममैषाभिमता तनया दीयतां त्वया ।
अन्यथा मच्छरीरस्य विपत्तिरुपलक्ष्यते ॥ ११ ॥

वैश्य उवाच ॥

परतन्त्रा वयं त्वञ्च परतन्त्रो महीभुजः ।
पित्रा तेनाभ्यनुज्ञातस्त्वं गृहाण ददाम्यहं ॥ १२ ॥

राजपुत्र उवाच ॥

प्रष्टव्या सर्व्वकार्य्येषु गुरवो गुरुवर्त्तिभिः ।
नत्वीदृशेष्वकार्य्येषु गुरूणां वाक्य गोचरः ॥ १३ ॥
क्व मन्मथकथालापो गुरूणां श्रवणं क्वथं ।
विरुद्धमेतदन्यत्र प्रष्टव्या गुरवो नृभिः ॥ १४ ॥

वैश्य उवाच ॥

एवमेतत्स्मरालापस्तवायं पृच्छतो गुरुं ।
अहं पृच्छामि नालापो मम कामकथाश्रयः ॥ १५ ॥

मार्कण्डेय उवाच ॥

इत्युक्तः सोऽभवन्मौनी राजपुत्रः स चापि तत् ।
तत्पित्रे सर्व्वमाचष्ट राजपुत्रस्य यन्मतं ॥ १६ ॥
ततस्तस्य पिता विप्रान्ऋचीकादीन् द्विजोत्तमान् ।
प्रवेश्य राजपुत्रस्य यथाख्यातं न्यवेदयत् ॥ १७ ॥
निवेद्य च ततः प्राह मुनीनेवं व्यवस्थितः ।
यत्कर्त्तव्यं तदादेष्टुमर्हन्ति द्विजसत्तमाः ॥ १८ ॥

राजपुत्रानुरागस्ते यद्यस्यां वैश्यसन्ततौ ।
तदस्तु धर्म एवैष किन्तु न्यायक्रमेण सः ॥ १९ ॥
मूर्द्धाभिषिक्ततनयापाणिग्राहोऽभवत्पुरा ।
भवत्वनन्तरञ्चेयं तव भार्य्या भविष्यति ॥ २० ॥
एवं न दोषो भवति तथेमामुप भुञ्जतः ।
अन्यथाऽभ्येति ते जातिरुत्कृष्टाबाधिका परम् ॥ २१ ॥

मार्कण्डेय उवाच ॥

इत्युक्तस्तदपास्यैव वचस्तेषां महात्मनां ।
विनिष्क्रम्य गृहीत्वा तामुद्यतासिरथाब्रवीत् ॥ २२ ॥
राक्षसेन विवाहेन मया वैश्यसुता हृता ।
यस्य सामर्थ्यमत्रास्ति स एतां मोचयत्विति ॥ २३ ॥
ततः स वैश्यस्तां दृष्ट्वा गृहीतां तनयां द्रुतं ।
त्राहीति पितरन्तस्य प्रययौ शरणं द्विज ॥ २४ ॥
ततस्तस्य पिता क्रुद्ध आदिदेश बलं महत् ।
हन्यतां हन्यतां दुष्टो नाभागो धर्मदूषकः ॥ २५ ॥
ततस्तद्युयुधे सैन्यं तेन भूभृत्सुतेन वै ।
कृतास्त्रेण तदास्त्रेण तत्प्राचुर्य्येण पातितं ॥ २६ ॥
स श्रुत्वा निहतं सैन्यं राजपुत्रेण भूपतिः ।
स्वयमेव ययौ योद्धुं स्वसैन्यपरिवारितः ॥ २७ ॥
ततो युद्धमभूत्तस्य भूभुजः स्वसुतेन यत् ।
राजपुत्रेण महास्त्रैस्तत्रातिशयितः पिता ॥ २८ ॥

ततोऽन्तरीक्षादागत्य परिव्राट् सहसा मुनिः।
प्रत्युवाच महीपालं विरमस्वेति संयुगात्॥ २९॥
त्वत्पुत्रस्य महाभाग विधर्मोऽयं महात्मनः।
तवापि वैश्येन सह न युद्धं धर्मवन्नृप॥ ३०॥
ब्राह्मणो ब्राह्मणीपूर्व्वं कुर्व्वन्दारपरिग्रहं।
ब्राह्मण्यात् सर्व्ववर्णेषु न हानिमुपगच्छति॥ ३१॥
तथैव क्षत्रियसुतां क्षत्रियः पूर्व्वमुद्वहन्।
इतरे च ततो राजंस्तावन्ते न स्वधर्मतः॥ ३२॥
पूर्व्वं वैश्यस्तथा वैश्यां पश्चात् शूद्रकुलोद्भवां।
न हीयते वैश्यकुलादयं न्यायः क्रमोदितः॥ ३३॥
ब्राह्मणाः क्षत्रिया वैश्याः सवर्णापाणिसंग्रहं।
अकृत्वाऽन्यतरापाणेः पतन्ति नृप संग्रहात्॥ ३४॥
यस्या यस्या हि हीनायाः कुरुते पाणिसंग्रहं।
अकृत्वा वर्णसंयोगं सोऽपि तद्वस्तुभाग्भवेत्॥ ३५॥
सोऽयं वैश्यत्वमापन्नस्तव पुत्रः स मन्दधीः।
नास्याधिकारो युद्धाय क्षत्रियेण त्वया सह॥ ३६॥
वयमेतन्न जानीमः कारणं नृपनन्दन।
यथा भविष्यतीदञ्च निवर्त्त रणकर्मतः॥ ३७॥

इति श्रीमार्कण्डेयपुराणे नाभागचरिते॥ ११९॥

चतुर्दशाधिक शततमोऽध्यायः ।

मार्कण्डेय उवाच ।

निवृत्तोऽसौ ततो भूपः संग्रामात् स्वसुतेन वै ।
उपयेमे च तां वैश्यतनयां सोऽपि तत्सुतः ॥ १ ॥
ततः स वैश्यतां प्राप्तः समुत्पत्याह पार्थिवं ।
भूपाल यन्मया कार्य्यं तत्समादिश्यतां मम ॥ २ ॥

राजोवाच ।

धर्माधिकरणे युक्ता बाभ्रव्याद्यास्तपस्विनः ।
यदस्य कर्म धर्माय तद्वदन्तु तथा चर ॥ ३ ॥

मार्कण्डेय उवाच ।

ततस्ते मुनयस्तस्य पाशुपाल्यं तथा कृषिं ।
वाणिज्यञ्च परं धर्ममाचचक्षुः सभासदः ॥ ४ ॥
तथा च चक्रे स सुतस्तस्य राज्ञो यथोदितं ।
तैर्धर्मवादिभिर्धर्मं च्युतस्य निजधर्मतः ॥ ५ ॥
तस्य पुत्त्रस्ततो जातो नाम्ना ख्यातो भनन्दनः ।
स मात्रा प्रहितोऽगच्छद्गोपालो भव पुत्त्रक ॥ ६ ॥
मात्रा तथा नियुक्तोऽथ प्रणिपत्य स्वमातरं ।
राजर्षिमगमन्नीपं हिमवत्पर्व्वताश्रयं ॥ ७ ॥
तं समेत्य स जग्राह तस्य पादौ यथाविधि ।
प्रणिपत्याह चैवेनं राजर्षिं स भनन्दनः ॥ ८ ॥

आदिष्टो भगवन्मात्रा गोपालस्त्वं भवेति वै ।
मया च पालनीया क्ष्मा तस्याः स्वीकरणं कथं ॥ ९ ॥
मया हि गौः पालनीया सा यदा स्वीकृता भवेत् ।
आक्रान्ता बलवद्भिः सा दायादैः पृथिवी मम ॥ १० ॥
तां यथा प्राप्नुयां पृथ्वीं त्वत्प्रसादादहं विभो ।
तथादिश करिष्यामि तवाज्ञां प्रणतोऽस्मि ते ॥ ११ ॥

मार्कण्डेय उवाच ।

ततः स नीपो राजर्षिस्तस्मै निरवशेषतः ।
भनन्दाय ददौ ब्रह्मन्नस्त्रग्रामं महात्मने ॥ १२ ॥
प्राप्तास्त्रविद्यः स ययौ पितृव्यतनयान् द्विज ।
वसुरातादिकान् पुत्रानादिष्टः स महात्मना ॥ १३
अयाचत स राज्यार्द्धं पितृपैतामहोचितं ।
ते चोचुर्वैश्यपुत्रस्त्वं कथं भोक्ष्यसि मेदिनीं ॥ १४ ॥
ततस्तैर्युद्धमभवद्भनन्दस्यात्मवंशजैः ।
वसुरातादिभिः क्रुद्धैः क्षतास्त्रस्यास्त्रवर्षिभिः ॥ १५ ॥
स जित्वा तानशेषांस्तु शस्त्रविक्षतसैनिकान् ।
जहार पृथिवीं तेषां धर्मयुद्धेन धर्मवित् ॥ १६ ॥
स निर्जितारिः सकलां पृथ्वीं राज्यं तथा पितुः ।
निवेदयामास ततस्तत्पिता जगृहे न च ॥
प्रत्युवाच च तं पुत्रं भार्य्यायाः पुरतस्तदा । १७ ॥

नाभाग उवाच ।

भनन्द राज्यमेतत्ते क्रियतां पूर्व्वजैः कृतं ॥ १८ ॥

अहं न कृतवान्राज्यं मासामर्ख्यंयुतः पुरा।
वैश्यतान्तु पुरस्कृत्य तथैवाज्ञाकरः पितुः॥ १९॥
कृत्वाऽप्रीतिं पितुरहं वैश्यकन्यापरिग्रहात्।
न पुण्यलोकभागाजा यावदाभूतसंप्लवः॥ २०॥
उल्लङ्घ्याज्ञां पुनस्तस्य पालयामि महीं यदि।
नास्ति मोक्षस्ततो नूनं मम कल्पशतैरपि॥ २१॥
न चापि युक्तं त्वद्बाहुनिर्जितं मम मानिनः।
राज्यं भोक्तुमनोहस्य दुर्बलस्येव कस्यचित्॥ २२॥
राज्यं कुरु स्वयं यावद्दायादेभ्यो विमुञ्च वा।
ममाज्ञापालनं शस्तं पितुर्न क्षितिपालनं॥ २३॥

मार्कण्डेय उवाच॥

ततः प्रहस्य तद्भार्य्या सुप्रभा नाम भामिनी।
प्रत्युवाच पतिं भूप श्रूयतां राज्यमूर्ज्जितं॥ २४॥
न त्वं वैश्यो न चैवाहं जाता वैश्यकुले नृप।
क्षत्रियस्त्वं तथैवाहं क्षत्रियाणां कुलोद्भवा॥ २५॥
पूर्व्वमासीन्महीपालः सुदेव इति विश्रुतः।
तस्याभूच्च सखा राज्ञो धूम्राक्षस्य सुतो नलः॥ २६॥
स तेन सख्या सहितो जगामाभ्रवनं वनं।
पत्नीभिः स समं रन्तुं माधवे मासि पार्थिव॥ २७॥
ततः पानान्यनेकानि भक्ष्याणि बुभुजे तथा।
भार्य्याभिः सहितस्ताभिस्तेन सख्या समन्वितः॥ २८॥

ततः पुष्करिणीतीरे ददर्शातिमनोरमां ।
पत्नीं च्यवनपुत्त्रस्य प्रमतेः पार्थिवात्मजां ॥ २९ ॥
सखा तस्य नलो मत्तो जगृहे तां च दुर्मतिः ।
पश्यतस्तस्य राजन्य तात तातेतिवादिनीं ॥ ३० ॥
आक्रन्दितं निशम्यैव स तस्याः प्रमतिः पतिः ।
आजगाम त्वरायुक्तः किमेतदिति वै वदन् ॥ ३१ ॥
ततो ददर्श राजानं सुदेवं तत्र संस्थितं ।
गृहीतां च तया पत्नीं नलेन सुदुरात्मना ॥ ३२ ॥
ततः सुदेवं प्रमतिः प्राहायं शाम्यतामिति ।
त्वञ्च शास्ता भवान्राजा दुष्टश्चायं नलो नृप ॥ ३३ ॥

मार्कण्डेय उवाच ।

तस्यास्तस्य वचः श्रुत्वा सुदेवो नलगौरवात् ।
प्राह वैश्योऽस्मि गच्छान्यं क्षत्रियं त्राणकारणात् ॥ ३४ ॥
ततः स प्रमतिः क्रुद्धस्तेजसा निर्दहन्निव ।
प्रत्युवाचाथ राजानं वैश्योऽस्मीत्यभिभाषिणं ॥ ३५ ॥

प्रमतिरुवाच ।

एवमस्तु भवान् वैश्य क्षत्रियः क्षतरक्षणात् ।
क्षत्रियैर्धार्यते शस्त्रं नार्त्तशब्दो भवेदिति ॥
स त्वं न क्षत्रियो भावी वैश्य एव कुलाधमः ॥ ३६ ॥

इति श्रीमार्कण्डेयपुराणे नाभागचरिते ॥ ११७ ॥

पञ्चदशाधिक शततमोऽध्यायः ।

—•—

मार्कण्डेय उवाच ।

तस्मै दत्वा ततः शापं नलं क्रुद्धोऽब्रवीद्द्विज ।
प्रमतिर्भार्गवः कोपात् पौलोमीं निर्दहन्निव ॥ १ ॥
मदोन्मत्तो यदा भार्य्यां भवानद्य ममाश्रमे ।
बलात्कृत्वासि भस्म त्वं तस्माद्व्रजतु मा चिरं ॥ २ ॥
तेनोदाहृतमात्रे च वाक्ये तस्मिन् तदा नलः ।
देहजेनाग्निना सद्यो भस्मपुञ्जस्तदाऽभवत् ॥ ३ ॥
दृष्ट्वा प्रभावं तत्तस्य सुदेवो विमदस्ततः ।
प्रणामनम्रः प्राहेदं क्षम्यतां क्षम्यतामिति ॥ ४ ॥
यदुक्तवांस्त्वं भगवन् सुरापानमदाकुलं ।
तत्क्षम्यतां प्रसीद त्वं शापोऽयं विनिवर्त्त्यतां ॥ ५ ॥
एवं प्रसादितस्तेन प्रमतिः प्राह भार्गवः ।
गतकोपो नले दग्धे भावधीनेन चेतसा ॥ ६ ॥
नान्यथा भावि तद्वाक्यं यन्मया समुदीरितं ।
तथापि ते करिष्यामि प्रसन्नोऽनुग्रहं परं ॥ ७ ॥
भविता वैश्यजातीयो भवान्नात्र च संशयः ।
भविता क्षत्रियो वैश्यस्तस्मिन्नेवायु जन्मनि ॥ ८ ॥
ग्रहीष्यति बलात् कन्यां यदा ते क्षत्रसम्भवः ।
तदा त्वं क्षत्रियो वैश्य स्वयंप्रीतो भविष्यति ॥ ९ ॥

एवं स वैश्यो भूपाल सुदेवोऽस्मत्पिताऽभवत् ।
अहञ्च या महाभाग त्वत्सर्वं श्रूयतां त्वया ॥ १० ॥
सुरथो नाम राजर्षिः प्रागासीद्गन्धमादने ।
तपस्वी नियताहारस्त्यक्तसङ्गो वनाश्रयः ॥ ११ ॥
ततः श्येनमुखभ्रष्टां दृष्ट्वैकां शारिकां भुवि ।
कृपाऽभूज्जनिता मूर्च्छा तया तस्य महात्मनः ॥ १२ ॥
ततो मूर्च्छावसानेऽहं तस्योत्पन्ना शरीरतः ।
स मां दृष्ट्वा च जग्राह खिद्यमानेन चेतसा ॥ १३ ॥
यस्मात्कृपाभिभूतस्य मम जातेयमात्मजा ।
तस्मात्कृपावती नाम्ना भविष्यत्याह स प्रभो ॥ १४ ॥
ततोऽहमाश्रमे तस्य वर्धमाना दिवानिशं ।
सखीभिः सह तुल्याभिर्विचरामि वनानि च ॥ १५ ॥
ततो मुनेरगस्त्यस्य भ्रातागस्त्य इति श्रुतः ।
स चिन्वन् कानने वन्यं सखीभिः कोपितोऽशपत् ॥ १६ ॥
नापराधं कृतवती तवाहं द्विजसत्तम ।
अन्यासामपराधेन किमर्थं शप्तवानसि ॥ १७ ॥

ऋषिरुवाच ।

दुष्टतां दुष्टसंसर्गाददुष्टमपि गच्छति ।
सुराविन्दुनिपातेन पञ्चगव्यघटी यथा ॥ १८ ॥
प्रणिपत्य न दुष्टासि यस्मंयाहं प्रसादितः ।
तस्मादनुग्रहं बाले शृणुयात्ते करोम्यहं ॥ १९ ॥
वैश्ययोनौ यदा जाता त्वं पुत्रं बोधयिष्यसि ।

राज्याय जातिस्मरतां तदा त्वं समवाप्स्यसि ॥ २० ॥
ततो भूयः स्वजातिं प्राप्ता त्वं पतिना सह ।
दिव्यानवाप्स्यसे भोगान् गच्छ भीतिरपैतु ते ॥ २१ ॥
एवं शप्तास्मि राजेन्द्र तेन पूर्व्वं महर्षिणा ।
पिता च मे पूर्व्वमेवं शप्तः प्रमतिनाऽभवत् ॥ २२ ॥
एवं वैश्यो न राजंस्त्वं न च वैश्यः पिता मम ।
न त्वं हि मय्यदुष्टायामदुष्टो दुष्यसे कथं ॥ २३ ॥

इति श्रीमार्कण्डेयपुराणे पञ्चदशाधिक शततमोऽध्यायः ॥ ११५ ॥

---

## षोडशाधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

इति तस्या वचः श्रुत्वा पुत्रस्य स च पार्थिवः ।
पुनः प्रोवाच धर्मज्ञस्तां पत्नीं नमयंस्तथा ॥ १ ॥
यन्मया पितुरादेशात् त्यक्तं राज्यं न तत्पुनः ।
ग्रहीष्यामि ह्ययोग्येन किमात्माऽऽज्ञाप्यते त्वया ॥ २ ॥
अहं ते संप्रदास्यामि करं वैश्यव्रते स्थितः ।
भुङ्क्ष्व राज्यमशेषं त्वमिच्छया वा परित्यज ॥ ३ ॥
इत्युक्तः स तदा पित्रा राजपुत्रो भनन्दनः ।
चकार राज्यं धर्मेण तद्दत्तारपरिग्रहं ॥ ४ ॥
अव्याहतं तस्य चक्रं क्षितिग्राममपाहज ।
न चाधर्मे मनो भूपालस्य सर्व्वोऽभवन् यमी ॥ ५ ॥

तेनेष्टो विविधैर्यज्ञैः सम्यक् पालिता वसुन्धरां ।
स एवैकोऽभवद्भर्त्ता पृथिव्यां [illegible] ॥ ६ ॥
अजायत सुतस्तस्य वत्सप्रीर्नाम नामतः ।
पितातिशयितो येन गुणौघेन महात्मना ॥ ७ ॥
तस्यापि भार्य्या सौनन्दा विदूरथसुताऽभवत् ।
पतिव्रता महाभागा सा प्राप्ता तेन वीर्य्यतः ॥
हत्वा पुरन्दररिपुं कुजम्भं दितिजेश्वरं ॥ ८ ॥

क्रौष्टुकिरुवाच ॥

भगवंस्तेन संप्राप्ता कुजम्भनिधनात् कथं ।
एतदाख्यानमाख्याहि प्रसन्नेनान्तरात्मना ॥ ९ ॥

मार्कण्डेय उवाच ॥

विदूरथो नाम नृपः ख्यातकीर्त्तिरभूद्भुवि ।
तस्य पुत्रद्वयं जातं सुनीतिः सुमतिस्तथा ॥ १० ॥
एकदा तु वनं यातो मृगयां स विदूरथः ।
ददर्श गर्त्तं सुमहद्भूमेर्मुखमिवोद्गतं ॥ ११ ॥
तं दृष्ट्वा चिन्तयामास किमेतदिति भैरवं ।
पातालविवरं मन्ये नैतद्भूमेश्चिरन्तनं ॥ १२ ॥
चिन्तयन्निति तत्रासौ ददर्श विजने वने ।
ब्राह्मणं सुव्रतं नाम तपस्विनमुपागतं ॥ १३ ॥
स तं पप्रच्छ च नृपः किमेतदिति विस्मितः ।
अतिगम्भीरमवनेर्द्दर्शितान्तर्गतोदरं ॥ १४ ॥

मार्कण्डेय उवाच ।

किन्न वेत्सि महीपाल मागधस्त्वं हि मे मतः ।
ज्ञेयं सर्व्वं नरेन्द्रेण वर्त्तते यन्महीतले ॥ १५ ॥
दानवः सुमहावीर्य्यो वसत्युग्रो रसातले ।
स जृम्भयति यत्पृथ्वीं कुजृम्भः प्रोच्यते ततः ॥ १६ ॥
क्रियते तेन यत्किञ्चिन्मूतं भूतं महीतले ।
त्रिदिवे वा नरपते तं कथं वेत्सि नो भवान् ॥ १७ ॥
सुनन्दं नाम मुषलं त्वष्टा यन्निर्मितं पुरा ।
तज्जहार स दुष्टात्मा तेन हन्ति रणे रिपून् ॥ १८ ॥
पातालान्तर्गतस्तेन भिनत्ति वसुधामिमां ।
ततोऽसुराणां सर्व्वेषां द्वाराणि कुरुतेऽसुरः ॥ १९ ॥
तेन भिन्ना च वसुधा सुनन्दमुषलायुधा ।
भोक्ष्यते वसुधामेतां तमजित्वा कथं भवान् ॥ २० ॥
यज्ञान् विध्वंसयत्युग्रो देवानामुपरोधकः ।
आप्याययति दैतेयान् स बली मुषलायुधः ॥ २१ ॥
यद्यरिं घातयस्येनं पातालान्तरगोचरं ।
ततः समस्तवसुधापतिस्त्वं परमेश्वरः ॥ २२ ॥
मुषलन्तस्य बलिनः सौनन्दं प्रोच्यते जनैः ।
तथा कलावलम्बेव तं वदन्ति विचक्षणाः ॥ २३ ॥
तत्तु निर्व्वीर्य्यतां याति संस्पृष्टं योषिता नृप ।
तस्मिन्दिने द्वितीयेऽह्नि वीर्य्यवत्तदुदीर्य्यते ॥ २४ ॥
न स वेत्ति दुराचारः प्रभावं मुषलस्य तत् ।

योषित्करायसंस्पर्शे शोषं वीर्यविशातनं ॥ २५ ॥
एवं तस्य बलं भूप दानवस्य दुरात्मनः।
मुषलस्य च ते प्रोक्तं यदुक्तं तत्समाचर ॥ २६ ॥
आसन्नमेतद्भवतः पुरस्य पृथिवीपते।
हतस्तेन महीरक्षं निश्चिन्तः किं भवान्यथा ॥ २७ ॥
इत्युक्ता तु गते तस्मिन् पुरं गत्वा महीपतिः।
मन्त्रयामास मन्त्रज्ञैः पुरमध्ये तु मन्त्रिभिः ॥ २८ ॥
यथाश्रुतमशेषन्तत् कथयामास मन्त्रिणां।
मुषलस्य प्रभावञ्च वीर्य्यशातनमेवच ॥ २९ ॥
तं मन्त्रं क्रियमाणन्तु मन्त्रिभिस्तेन भूभृता।
तत्पार्श्ववर्त्तिनी कन्या शुश्रावाथ मुदावती ॥ ३० ॥
ततः कतिपयाहे तु तां कन्यां वयसान्वितां।
जहारोपवनाद्दैत्यः कुजृम्भः स सखीवृतां ॥ ३१ ॥
तत् श्रुत्वा स महीपालः क्रोधपर्य्याकुलेक्षणः।
पुत्रावुवाच त्वरितं गच्छतं वनकोविदौ ॥ ३२ ॥
निर्विन्ध्यायास्तटे गर्त्तस्तेन गत्वा रसातलं।
स हन्यतां योऽपहर्त्ता मुदावत्याः सुदुर्मतिः ॥ ३३ ॥

मार्कण्डेय उवाच॥

ततस्तौ तुष्टतौ प्राप्य तं गर्त्तं तत्पदानुगौ।
युयुधाते कुजृम्भेन स्वसैन्येनातिकोपितौ ॥ ३४ ॥
ततः परिघनिस्त्रिंशशक्तिशूलपरश्वधैः।
बाणैश्चाविरतं युद्धं तेषामासीत् सुदारुणं ॥ ३५ ॥

तो मायाबलवता तेन दैत्येन तावुभौ ।
ाजपुत्रौ रणे बद्धौ निहताशेषसैनिकौ ॥ ३६ ॥
ात् श्रुत्वा स महीपालः प्राहेदं सर्वसैनिकान् ।
त्पुत्रः परामार्त्तिमुपेतो मुनिसत्तम ॥ ३७ ॥
स्तां निहत्य दैतेयं मोचयिष्यति मे सुतां ।
स्याहं संप्रदास्यामि तामेवायतलोचनां ॥ ३८ ॥
त्येवं घोषयामास स राजा स्वपुरे तदा ।
नैराश्यः पुत्रतनयाबन्धमोक्षाय वै मुने ॥ ३९ ॥
ततः शुश्राव वत्सप्रीर्भनन्दनसुतो हि तत् ।
प्राघोष्यमाणं बलवान् कृतास्त्रः शौर्य्यसंयुतः ॥ ४० ॥
स चागम्याभिवाद्यैनं प्राह पार्थिवसत्तमं ।
विनयावनतो भूत्वा पितुर्मित्रमनुत्तमं ॥ ४१ ॥
आज्ञापयाशु मामेव तनयौ मोचयामि ते ।
तवैव तेजसा हत्वा तं दैत्यं तनयाञ्च ते ॥ ४२ ॥

मार्कण्डेय उवाच ।

स तं मुदा परिष्वज्य प्रियसख्युरथात्मजं ।
गम्यतामिति संसिद्धै वत्सेत्याह स पार्थिवः ॥ ४३ ॥
स्थाने स्थास्यति मे वत्सो यथैवं कुरुते विधिं ।
वत्सैतत्क्रियतामाशु यद्युक्तमपि मन्यसे ॥ ४४ ॥

मार्कण्डेय उवाच ।

ततः सखड्गः सधनुर्बद्धगोधाङ्गुलित्रवान् ।
जगाम वीरः पातालं तेन गर्त्तेन सत्वरः ॥ ४५ ॥

ततो ज्यास्वनमत्युग्रं स चक्रे पार्थिवात्मजः ।
येन पातालमखिलमासीदापूरितान्तरं ॥ ४६ ॥
ततो ज्यास्वनमाकर्ण्य कुजृम्भो दानवेश्वरः ।
आजगामातिकोपेन स्वसैन्यपरिवारितः ॥ ४७ ॥
ततो युद्धमभूत्तस्य तेन पार्थिवसूनुना ।
ससैन्यस्य ससैन्येन बलिनो बलशालिना ॥ ४८ ॥
दिनानि त्रीणि स यदा योधितस्तेन दानवः ।
ततः कोपपरीतात्मा मुषलायाभ्यधावत ॥ ४९ ॥
गन्धैर्माल्यैस्तथा धूपैः पूज्यमानः स तिष्ठति ।
अन्तःपुरे महाभाग प्रजापतिविनिर्मितः ॥ ५० ॥
ततो विज्ञातमुषलप्रभावा सा मुदावती ।
पस्पर्श मुषलश्रेष्ठमतिनम्रशिरोऽधरा ॥ ५१ ॥
पुनर्यावत् स गृह्णाति मुषलं तं महासुरः ।
तावत् सा वन्दनव्याजात् पस्पर्शानेकशः शुभा ॥ ५२ ॥
ततः स गत्वा युयुधे मुषलेनासुरेश्वरः ।
व्यार्था मुषलपातास्ते संजग्मुस्तेषु शत्रुषु ॥ ५३ ॥
परमास्त्रे तु निर्व्वीर्य्ये सौनन्दे मुषले मते ।
अस्त्रैः शस्त्रैश्च दैत्येयः सोऽयुध्यत रणेऽरिणा ॥ ५४ ॥
शस्त्रास्त्रैर्न समस्तस्य राजपुत्रस्य सोऽसुरः ।
मुषलेन बलन्तस्थि तस्त्र बुद्धा निराकृतं ॥ ५५ ॥
ततः पराजित्य स भूपसूनु-
रस्त्राणि शस्त्राणि च दानवस्य ।

चकार सद्यो विरथं ततश्च
सचर्मखड्गः पुनरप्यधावत् ॥ ५६ ॥
तमापतन्तं रभसाऽभ्युदीर्णं
विस्पष्टकोपं त्रिदशेन्द्रशत्रुं ।
शस्त्रेण वह्नेर्भुवि राजपुत्रो
जघान कालानलसप्रभेन ॥ ५७ ॥
स पावकास्त्रेण हृदि क्षतो भृशं
तत्याज देहं त्रिदशारिरात्मनः ।
बभूव सद्यश्च महोरगाणां
रसातलान्तेषु महानथोत्सवः ॥ ५८ ॥
ततोऽपतत् पुष्पवृष्टिर्महीपालसुतोपरि ।
जगुर्गन्धर्व्वपतयो देववाद्यानि सस्वनुः ॥ ५९ ॥
स चापि राजपुत्रस्तं हत्वा तौ नृपतेः सुतौ ।
मोचयामास तन्वङ्गीं ताञ्च कन्यां मुदावतीं ॥ ६० ।
तच्चापि मुषलं तस्मिन् कुजृम्भे विनिपातिते ।
जग्राह नागाधिपतिरनन्तः शेषसंज्ञितः ॥ ६१ ॥
तस्याश्च परितुष्टोऽसौ शेषः सर्व्वोरगेश्वरः ।
मुदावत्या मुदा ध्यातमनोवृत्तिस्तपोधनः ॥ ६२ ॥
सुनन्दमुषलस्पर्शं यच्चकार पुनः पुनः ।
योषित् करतलस्पर्शप्रभावज्ञातिशोभना ॥ ६३ ॥
मुदावत्यास्ततो नाम नागराजस्तदाकरोत् ।
सुनन्दामिति सानन्दं सौनन्दगुणवर्द्धं द्विज ॥ ६४ ॥

स चापि राजपुत्रस्तां भ्रातृभ्यां सहितां पितुः ।
समीपमानिनायाशु प्रणिपाताय चैव तं ॥ ६५ ॥
आनीतौ तनयौ तात तथैवेयं मुदावती ।
तवाज्ञया मयानीतान् सर्वांस्त्वं तान् समादिश ॥ ६६ ॥

मार्कण्डेय उवाच ।

ततः प्रहर्षसम्पूर्णहृदयः स महीपतिः ।
साधु साध्वित्यथाहोच्चैर्वत्स वत्सेति शोभनं ॥ ६७ ॥
सभाजितोऽस्मि पितृभिर्वत्साहं कारणैस्त्रिभिः ।
त्वं जामाता च यत्प्राप्तो यच्चारिर्विनिपातितः ॥ ६८ ॥
आगतान्यक्षतान्येव यच्चापत्यानि मे पुनः ।
तद्बुद्धाद्य कृतेऽस्मि पार्थिवस्त्वा मयोदितं ॥ ६९ ॥
त्वं राजपुत्र चार्वङ्ग्याः कन्याया दुहितुर्मम ।
मुदावत्या मुदा युक्तः सत्यवाक्यं कुरुष्व मां ॥ ७० ॥

राजपुत्र उवाच ।

तातस्याज्ञा मया कार्या यद्ब्रवीषि करोमि तत् ।
त्वमेव तात जानीषे नैवाचाविकृता वयं ॥ ७१ ॥

मार्कण्डेय उवाच ।

ततस्तयोः स राजेन्द्रश्चक्रे वैवाहिकं क्रमं ।
मुदावत्याश्च दुहितुर्भनन्दनसुतस्य वै ॥ ७२ ॥
ततः स ह तया रेमे वत्सप्रीर्नवयौवनः ।
रमणीयेषु देशेषु प्रासादशिखरेषु च ॥ ७३ ॥
कालेन गच्छता वृद्धः पिता तस्य भनन्दनः ।

ानं जगाम वत्सश्री: स बभूव महीपतिः ॥ ७४ ॥
याज यज्ञान् सततं प्रजा धर्म्मेण पालयन् ।
वत् पाल्यमानास्तु प्रजास्तेन महात्मना ॥ ७५ ॥
दृष्टविषये तस्य न चाभूद्वर्णसङ्करः ।
न दस्युव्यालदुर्वृत्तभयमासीच्च कस्यचित् ॥
ोपसर्गभयञ्चैव तस्मिन् शासति भूपतौ ॥ ७६ ॥

इति श्रीमार्कण्डेयपुराणे भगनन्दवत्सश्रीचरितं नाम ॥ ११७ ॥

---

अष्टादशाधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

स्य तस्यां सुनन्दायां पुत्रा द्वादश जज्ञिरे ।
प्रांशुः प्रवीरः शूरश्च सुचक्रो विक्रमः क्रमः ॥ १ ॥
ली बलाकश्चण्डश्च प्रचण्डश्च सुविक्रमः ।
स्वरूपश्च महाभागाः सर्व्वे संग्रामजित्तमाः ॥ २ ॥
ेषां ज्येष्ठो महावीर्य्यः प्रांशुरासीन्नराधिपः ।
तरे भृत्यवत्तस्य बभूवुर्व्वशवर्त्तिनः ॥ ३ ॥
स्य यज्ञे विश्रुत्यत्तैरनेकैर्द्रव्यराशिभिः ।
्यूनवर्णाविस्पष्टैश्च सत्यनाम्ना वसुन्धरा ॥ ४ ॥
सम्यक् पालयतस्तस्य प्रजाः पुत्रानिवौरसान् ।
योऽभूद्धनचयः कोषे तेन निष्पादितास्तु ये ॥ ५ ॥

क्रतवः शतसाहस्रास्तेषां संख्या न विद्यते ।
अयुताद्येन कोटीभिर्न च पद्मादिभिर्मुने ॥ ६ ॥
प्रजातिस्तस्य पुत्रोऽभूद्यस्य यज्ञे शतक्रतुः ।
अवाप्य तृप्तिमतुलां यज्ञभागैः सुरैः सह ॥ ७ ॥
दानवानां सुवीर्य्याणां जघान नवतीर्नव ।
बलञ्च बलिनां श्रेष्ठो जम्भञ्चासुरसत्तमं ॥ ८ ॥
अन्यांश्च सुमहावीर्य्यानाजघानामरद्विषः ।
प्रजातेस्तनयाः पञ्च खनित्रप्रमुखा मुने ॥ ९ ॥
तेषां खनित्रो राजाभूत् प्रख्यातो निजविक्रमैः ।
स शान्तः सत्यवाक् शूरः सर्व्वप्राणिहिते रतः ॥ १० ॥
स्वधर्माभिरतो नित्यं वृद्धसेवी बहुश्रुतः ।
वाग्मी विनयसम्पन्नः कृतास्त्रोऽप्यविकत्थनः ॥ ११ ॥
सर्व्वलोकप्रियो नित्यमुवाचैतदहर्निशं ।
नन्दन्तु सर्व्वभूतानि स्निह्यन्तु विजनेष्वपि ॥ १२ ॥
स्वस्त्यस्तु सर्व्वभूतेषु निरातङ्कानि सन्तु च ।
मा व्याधिरस्तु भूतानामाधयो न भवन्तु च ॥ १३ ॥
मैत्रीमशेषभूतानि पुष्यन्तु सकले जने ।
शिवमस्तु द्विजातीनां प्रीतिरस्तु परस्परं ॥ १४ ॥
समृद्धिः सर्व्ववर्णानां सिद्धिरस्तु च कर्मणां ।
हे लोकाः सर्व्वभूतेषु शिवा वोऽस्तु सदा मतिः ॥ १५ ॥
यथात्मनि तथा पुत्रे हितमिच्छथ सर्व्वदा ।
तथा समस्तभूतेषु वर्त्तध्वं हितबुद्धयः ॥ १६ ॥

एतद्धो हितमत्यन्तं को वा कस्यापराध्यते ।
यत् करोत्यहितं किञ्चित् कस्यचिन्मूढमानसः ॥ १७ ॥
तं समभ्येति तन्नूनं कर्तृगामि फलं यतः ।
इति मत्वा समस्तेषु भो लोकाः कृतबुद्धयः ॥ १८ ॥
सन्तु मा लौकिकं पापं लोकाः प्राप्स्यथ वै बुधाः ।
यो मेऽद्य स्निह्यते तस्य शिवमस्तु सदा भुवि ॥ १९ ॥
यश्च मां द्वेष्टि लोकेऽस्मिन् सोऽपि भद्राणि पश्यतु ।
एवंस्वरूपः पुत्त्रोऽभूत् खनित्रस्तस्य भूपतेः ॥ २० ॥
समस्तगुणसम्पन्नः श्रीमानब्जदलेक्षणः ।
तेन ते भ्रातरः प्रीत्या पृथग्राज्येषु योजिताः ॥ २१ ॥
स्वयञ्च पृथिवीमेतां बुभुजे सागराम्बरां ।
प्राच्यां तेन कृतः शौरिर्दक्षिणायां मुदावसुः ॥ २२ ॥
दिशि प्रतीच्यां सुनय उत्तरस्यां महारथः ।
तेषां तस्य च भूपस्य पृथग्गोत्राः पुरोहिताः ॥ २३ ॥
बभूवुर्मुनयश्चैव मन्त्रिवंशक्रमागताः ।
शौरेरत्रिकुलोद्भूतः सुहोत्रो नाम वै द्विजाः ॥ २४ ॥
उदावसोः कुशावर्त्तो गौतमान्वयजोऽभवत् ।
काश्यपः प्रमतिर्नाम सुनयस्य पुरोहितः ॥ २५ ॥
महारथस्य वाशिष्ठः पुरोधाऽभून्महीभृतः ।
बुभुजुस्ते स्वराज्यानि चत्वारोऽपि नराधिपाः ॥ २६ ॥
खनित्रश्चाधिपस्तेषामशेषवसुधाधिपः ।
तेषु भ्रातृष्वशेषेषु खनित्रः स महीपतिः ॥ २७ ॥

प्रजासु च समस्तासु पुत्रेष्विव सदा हितः ।
एकदा मन्त्रिणां शौरिः स प्रोक्तो विश्ववेदिना ॥ २८ ॥
विविक्ते पृथिवीपाल किञ्चिद्वक्तव्यमस्ति नः ।
यस्येयं पृथिवी कृत्स्ना यस्य भूपा वशानुगाः ॥ २९ ॥
स राजा तस्य पुत्रश्च तत्पौत्रश्चान्वयस्ततः ।
इतरे भ्रातरस्तस्य प्राक्तव्यविषयाधिपाः ॥ ३० ॥
तत्पुत्रश्चाल्पकस्तस्मात् तत्पौत्रश्चाल्पकस्त्रिका: ।
कालेन ह्रासमासाद्य पुरुषात् पुरुषान्तरं ॥ ३१ ॥
कृष्योपजीविनो भूप भवन्तीति तदन्वयाः ।
नोद्धारं कुरुते भ्राता भ्रातृस्नेहबलार्पणः ॥ ३२ ॥
स्नेहकः पृथिवीपाल परयोर्भ्रातृपुत्रयोः ।
तत्पुत्रयोः परतरा मतिर्भवति पार्थिव ॥ ३३ ॥
तत्पुत्रः केन कार्य्येण प्रीतियुक्तो भविष्यति ।
अथवा येन तेनैव सन्तोषं कुरुते नृपः ॥ ३४ ॥
क्रियते तत् किमर्थन्तु भूपैर्मन्त्रपरिग्रहः ।
भुज्यते सकलं राज्यं मया ते मन्त्रिणा सता ॥ ३५ ॥
तत् किं सुखाधारयसे सन्तोषं कुरुते यदि ।
कार्य्यनिष्पादकं राज्यं करणं कर्त्तुरिष्यते ॥ ३६ ॥
राज्यलब्धुश्च ते कार्य्यं त्वं कर्त्ता करणं वयं ।
सोऽस्माभिः करणैराज्यं पितृपैतामहं कुरु ॥
फलप्रदा भविष्यामः परलोके न ते वयं ॥ ३७ ॥

राजोवाच ॥

ज्येष्ठो राजा महीपाल वयन्तस्यानुजा यतः ।
ततः स भुंक्ते पृथिवीं वयञ्चाल्पवसुन्धरां ॥ ३८ ॥
वयन्तु भ्रातरः पञ्च पृथ्वी चैका महामते ।
अतोऽस्याः पृथगैश्वर्य्यं कथं क्वत्स्नं भविष्यति ॥ ३९ ॥

विश्ववेदुवाच ॥

एवमेतद्भवांस्तत्र यथैका वसुधा नृप ।
तां त्वमेवाभिपद्यस्व ज्येष्ठः शास्तु महीं भवान् ॥ ४० ॥
सर्व्वाधिपत्यः सर्व्वेभ्यो भव त्वमखिलेश्वरः ।
यतन्ते च यथाऽहन्ते तेषामाहितमन्त्रिणः ॥ ४१ ॥

राजोवाच ॥

ज्येष्ठो राजा यथा प्रीत्या भजतेऽस्मान् सुतानिव ।
कथं तस्य करिष्यामि ममत्वं जगतीगतं ॥ ४२ ॥

विश्ववेदुवाच ॥

राज्यस्थितः पूजयेथा ज्येष्ठो भूपार्हणैर्नवैः ।
कनिष्ठजेष्ठता केयं राज्यं प्रार्थयतां नृणां ॥ ४३ ॥

मार्कण्डेय उवाच ॥

तथेति च प्रतिज्ञाते भूभुजा तेन सत्तम ।
वेदवेदी ततो मन्त्री तद्भ्रातॄननयद्वशं ॥ ४४ ॥
तेषां पुरोहितांश्चैव आत्मनः शान्तिकादिषु ।
नियोजयामास ततः स्वभिचाराभिचारके ॥ ४५ ॥
बिभेद तस्य भृत्यान् सामदानादिभिस्तथा ।

चक्रे च परमोद्योगं निजदण्डप्रबाधने ॥ ४६ ॥
आभिचारिकमत्युग्रमहन्यहनि कुर्वतां ।
पुरोधसां चतुर्णाञ्च जज्ञे कृत्याचतुष्टयं ॥ ४७ ॥
विकरालं महावक्त्रमतिभीषणदर्शनं ।
समुद्यतमहाशूलं प्रभूतमतिदारुणं ॥ ४८ ॥
ततस्तदागतन्तत्र खनित्रो यत्र पार्थिवः ।
निरस्तञ्चाप्यदुष्टस्य तस्य पुण्यचयेन तत् ॥ ४९ ॥
कृत्याचतुष्टयन्तेषु निपपात दुरात्मसु ।
पुरोहितेषु भूपानां तथा वै विश्ववेदिनि ॥ ५० ॥
ततो निहन्त्या निर्दग्धाः कृत्यया ते पुरोहिताः ।
विश्ववेदी तथा मन्त्री स शौरेर्दुष्टमन्त्रदः ॥ ५१ ॥

इति श्रीमार्कण्डेयपुराणे खनित्रचरित्रे ॥ ११८ ॥

ऊनविंशत्यधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

ततः समस्तलोकस्य विस्मयः सोऽभवन्महान् ।
यदेककालं नेशुस्ते पृथक्पुरनिवासिनः ॥ १ ॥
ततः शुश्राव निधनं यातान् भ्रातृपुरोहितान् ।
मन्त्रिणञ्च तथा भ्रातुर्दग्धं तं विश्ववेदिनं ॥ २ ॥
किमेतदिति सोऽतीव विस्मितो मुनिसत्तम ।
खनित्रोऽभून्महाराजो नाजानात् तच्च कारणं ॥ ३ ॥

ततो वशिष्ठं पप्रच्छ स राजा गृहमागतं ।
यत्कारणं विनेशुस्ते भ्रातृमन्त्रिपुरोहिताः ॥ ४ ॥
तेन पृष्टस्तदा प्राह यथा वृत्तं महामुनिः ।
यच्छौरिमन्त्रिणा प्रोक्तं यच्च शौरिरुवाच तं ॥ ५ ॥
यथा चानुष्ठितन्तेन भ्रातृणां भेदकारि वै ।
मन्त्रिणा तेन दुष्टेन यच्चक्रुश्च पुरोहिताः ॥ ६ ॥
यन्निमित्तं विनेशुस्ते अपापस्यापकारिणः ।
पुरोहितास्तस्य राज्ञः शत्रावपि दयापराः ॥ ७ ॥
स तच्छ्रुत्वा ततो राजा हा हतोऽस्मीति वै वदन् ।
निनिन्दात्मानमत्यर्थं वशिष्ठस्याग्रतो द्विज ॥ ८ ॥

राजोवाच ॥

धिङ्मामपुण्यसंस्थानमल्पभाग्यमशोभनं ।
दैवदोषकृतं पापं सर्व्वलोकविगर्हितं ॥ ९ ॥
तन्निमित्तं विनष्टं यत्तद्ब्राह्मणचतुष्टयं ।
मत्तः कोऽन्यः पापतरो भविष्यति पुमान् भुवि ॥ १० ॥
नाभविष्यं यदि पुमानहमत्र महीतले ।
ततस्ते न विनश्येयुर्मम भ्रातृपुरोहिताः ॥ ११ ॥
धिग्राज्यं धिक् च मे जन्म भूभुजां महतां कुले ।
कारणत्वं गतो योऽहंविनाशस्य द्विजन्मनां ॥ १२ ॥
कुर्वन्तः स्वामिनां तेऽर्थं भ्रातृणां मम याजकाः ।
नाशं ययुर्नदुष्टास्ते दुष्टोऽहं नाशकारणं ॥ १३ ॥
किं करोमि क्व गच्छामि नान्यो मत्तो हि पापकृत् ।

पृथिव्यामस्ति हेतुत्वं द्विजनाशस्य यो गतः ॥ १४ ॥
इत्यमुद्विग्नहृदयः खनित्रः पृथिवीपतिः ।
वनं यियासुः पुत्रस्य कृतवानभिषेचनं ॥ १५ ॥
अभिषिच्य सुतं राजेन्द्र क्षुपसंज्ञं महीपतिः ।
भार्य्याभिस्तिसृभिः सार्द्धं तपसे स वनं ययौ ॥ १६ ॥
तत्र गत्वा तपस्तेपे वानप्रस्थविधानवित् ।
शतानि त्रीणि वर्षाणां सार्द्धानि नृपसत्तमः ॥ १७ ॥
तपसा क्षीणदेहस्तु राजवर्य्यो द्विजोत्तम ।
निगृह्य सर्वस्रोतांसि तत्याजासून् वनेचरः ॥ १८ ॥
ततः पुण्यान् ययौ लोकान् सर्वकामदुहोऽक्षयान् ।
अश्वमेधादिभिर्यज्ञैरवाप्या ये नराधिपैः ॥ १९ ॥
भार्य्याश्च तस्य तास्तिस्रः समन्तेनैव तत्यजुः ।
प्राणान् वापुः समालोक्यं तेनैव सुमहात्मना ॥ २० ॥
एतत् खनित्रचरितं श्रुतं कल्मषनाशनं ।
पठताञ्च महाभाग नृपस्यातो निशामय ॥ २१ ॥

इति श्रीमार्कण्डेयपुराणे खनित्रचरितं समाप्तं ॥ ११९ ॥

---

त्रिंशत्यधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

क्षुपः खनित्रपुत्रस्तु प्राप्य राज्यं यथा पिता ।
तथैव पालयामास प्रजा धर्मेण रञ्जयन् ॥ १ ॥

स दानशीलो यष्टा च यज्ञानामवनीपतिः।
समः शत्रौ च मित्रे च व्यवहारादिवर्त्मनि॥ २॥
एकदा स महीपालो निजस्थानगतो मुने।
सूतैरुक्तो यथा पूर्व्वं क्षुपो राजा तथाऽभवत्॥ ३॥
ब्रह्मणस्तनयः पूर्व्वं क्षुपोऽभूत् पृथिवीपतिः।
यादृक् चरितमस्यासीत्तादृक् तस्यैव चेष्टितं॥ ४॥

राजोवाच॥

श्रोतुमिच्छामि चरितं क्षुपस्य सुमहात्मनः।
यदि तादृङ्मया शक्यं चेष्टितुं तत्करोम्यहं॥ ५॥

सूता ऊचुः॥

स चकाराकरान् भूप राजा गोब्राह्मणान् पुरा।
षष्ठांशेन कृता चोर्व्वीमिष्टिस्तेन महात्मना॥ ६॥

राजोवाच॥

तेषां महात्मनां राज्ञां कोऽनुयास्यति मद्विधः।
तथाप्युत्कृष्टचेष्टानां चेष्टासूत्तमवान् भवेत्॥ ७॥
तत् श्रूयतां प्रतिज्ञा या साम्प्रतं क्रियते मया।
क्षुपस्यानुकरिष्यामि महाराजस्य चेष्टितं॥ ८॥
त्रींस्त्रीन् यज्ञान् करिष्यामि शस्यापाते गतागते।
पृथिव्याश्चतुरर्थायां प्रतिज्ञेयं कृता मया॥ ९॥
यश्च गोब्राह्मणाः पूर्व्वमददन् भूभृते करं।
तमेव प्रतिदास्यामि ब्राह्मणानां तथा गवां॥ १०॥

मार्कण्डेय उवाच।

इति प्रतिज्ञाय वचः क्षुपस्तत्कृतवांस्तथा।
शस्यापाते स यज्ञांस्त्रीनयजद्यजतां वरः॥ ११॥
गोब्राह्मणाः पुरा राज्ञामददंश्च वै करं।
तावत्संख्यमदाद्वित्तमन्यद्गोब्राह्मणाय सः॥ १२॥
तस्य पुत्रोऽभवद्वीरः प्रमथायामनिन्दितः।
यस्य प्रतापशौर्याभ्यां कृता वश्या महीभृतः॥ १३॥
तस्यापि नन्दिनी नाम वैदर्भी दयिताऽभवत्।
विविंशं तनयं तस्यां जनयामास स प्रभुः॥ १४॥
विविंशे शासति महीं महीपाले महौजसि।
महीतलमभूद्व्याप्तं निरन्तरतया नरैः॥ १५॥
ववर्ष काले पर्जन्यो मही शस्यवती तथा।
सुफलानि च शस्यानि रसवन्ति फलानि च॥ १६॥
रसाः पुष्टिकराश्चासन् पुष्टिर्नोन्मादकारिणी।
न वित्तनिचया नृणां प्रभूता मदहेतवः॥ १७॥
तत्प्रतापेन रिपवो भयमापुर्महामने।
स्वास्थ्यं जनः सुहृद्वर्गो मुदमिच्छन्ति पौरिकाः॥ १८॥
इष्ट्वा स यज्ञान् सुबहून् सम्यक् सम्पाल्य मेदिनीं।
संग्रामे निधनं प्राप्य शक्रलोकमितो गतः॥ १९॥

इति श्रीमार्कण्डेयपुराणे विविंशचरितं समाप्तं॥ १२०॥

एकविंशत्यधिक शततमोऽध्यायः ।

मार्कण्डेय उवाच ।

तस्य पुत्रः खनीनेत्रो महाबलपराक्रमः ।
यस्य यज्ञेष्वगायन्त गन्धर्व्वा विस्मयान्विताः ॥ १ ॥
खनीनेत्रसमो नान्यो भुवि यज्वा भविष्यति ।
तेन यज्ञायुते पूर्णे दत्ता पृथ्वी ससागरा ॥ २ ॥
दत्त्वा च सकलां पृथ्वीं ब्राह्मणानां महात्मनां ।
तपसा द्रव्यमासाद्य मोचयेत् साधितेन यः ॥ ३ ॥
यतश्च प्राप्य वित्तर्द्धिमतुलां दातृसत्तमात् ।
जगृहुर्ब्राह्मणा विप्र नान्यराज्ञः प्रतिग्रहं ॥ ४ ॥
सप्तषष्टिसहस्राणि सप्तषष्टिशतानि च ।
सप्तषष्टिञ्च यो यज्ञानयजद्भूरिदक्षिणान् ॥ ५ ॥
अपुत्रः स महीपालो मृगयामुपचक्रमे ।
पश्वार्थं पितृयज्ञाय मांसकामो महामुने ॥ ६ ॥
अश्वारूढो विना सैन्यमेक एव महावने ।
बद्धगोधाङ्गुलित्राणो बाणखड्गधनुर्धरः ॥ ७ ॥
तं वाहयन्तं तुरगमन्यतो गहनाद्वनात् ।
विनिष्क्रम्य मृगः प्राह मां हत्वाभिमतं कुरु ॥ ८ ॥

राजोवाच ॥

अन्ये मृगाः पलायन्ते मत्तोभीत्या विलोक्य मां ।
कथमात्मप्रदानं त्वं मृत्यवे कर्त्तुमिच्छसि ॥ ९ ॥

मृग उवाच ॥

अपुत्रोऽहं महाराज तथा जन्मप्रयोजनं ।
विचारयन्न पश्यामि प्राणानामिह धारणं ॥ १० ॥

मार्कण्डेय उवाच ॥

अथाभ्येत्य मृगः प्राह तमन्यो वसुधाधिपं ।
मृगस्य तस्य प्रत्यक्षमलमेतेन पार्थिव ॥ ११ ॥
घातयस्वेति मां मांसैर्मम कर्म समाचर ।
यथा कृतार्थता ते स्यान्मम चाप्युपकारि तत् ॥ १२ ॥
पुत्रार्थं त्वं महाराज स्वपितॄन् यष्टुमिच्छसि ।
अपुत्रस्यास्य मांसेन लप्स्यसे वाञ्छितं कथं ॥ १३ ॥
यादृक् कर्म विनिष्पाद्यं तादृक् द्रव्यमुपाहरेत् ।
दुर्गन्धैर्न सुगन्धानां गन्धज्ञानविनिर्णयः ॥ १४ ॥

राजोवाच ॥

वैराग्यकारणं प्रोक्तमनेनापुत्रता मम ।
कथ्यतां प्राणसंत्यागे यत्ते वैराग्यकारणं ॥ १५ ॥

मृग उवाच ॥

बहवो मे सुता भूप बह्व्यो दुहितरस्तथा ।
यच्चिन्तादुःखदावाग्निज्वालामध्ये वसाम्यहं ॥ १६ ॥
सर्व्वसाध्या नरेन्द्रेयं मृगजातिः सुकातरा ।
तेष्वपत्येषु मे याति ममत्वं तेन दुःखितः ॥ १७ ॥
मनुष्यसिंहशार्दूलवृकादिभ्यो बिभेम्यहं ।
न हीनात् सर्व्वसत्त्वेभ्यः श्वसृगालादपि प्रभो ॥ १८ ॥

सोऽहं निमित्तं बन्धूनामिमां भुञ्जां वसुन्धरां।
नृसिंहादिभयात् सर्व्वामिच्छामि सुभृशं सकृत्॥ १९॥
तृणान्यन्येऽपि खादन्ति गोऽजावितुरगादिकाः।
तांस्तेषां पोषणायाहमिच्छामि निधनं गतान्॥ २०॥
निष्क्रान्तेषु ततस्तेषु ममापत्येषु वै पृथक्।
भवन्ति चिन्ताः शतशो ममत्वाहतचेतसः॥ २१॥
किं कूटपाशं किं वज्रं वागुरां किं सुतो मम।
प्राप्तश्चरन् वने किं वा नृसिंहादिवशं गतः॥ २२॥
प्राप्तोऽयमेकः संप्राप्तास्तेऽवस्थां कीदृशीं मम।
साम्प्रतं विचरन्तो वै ये गताः सुमहावनं॥ २३॥
दृष्ट्वा प्राप्तसमाभ्यासमहन्तानात्मजान्नृप।
ईषदुच्छ्वसितः क्षेममिच्छामि रजनीं पुनः॥ २४॥
प्रभाते दिवसं क्षेममस्तगेऽर्के निशामपि।
वाञ्छाम्यहं कदा क्षेमं सर्व्वकालं भविष्यति॥ २५॥
एतत्ते कथितं भूप ममोद्वेगस्य कारणं।
अतः प्रसादं कुरु मे बाणोऽयं पात्यतां मयि॥ २६॥
इति दुःखशताविष्टः प्राणानपि त्यजामि यत्।
तत्कारणं निबोध त्वं ब्रुवतो मम पार्थिव॥ २७॥
असूर्य्या नाम ते लोका यान् गच्छन्त्यात्मघातकाः।
यज्ञोपयुक्ताः पशवः संप्रयान्त्युच्छ्रितीः प्रभो॥ २८॥
अग्निः पशुरभूत् पूर्व्वं पशुरासीत्जलाधिपः।
भास्वानथोच्छ्रितीः प्राप्तो यज्ञे सिद्धामुपागतः॥ २९॥

तन्ममैतां कृपां कृत्वा नय मामुन्नतिं नृप ।
आत्मनश्चेप्सितं कामं पुत्रलाभादवाप्स्यसि ॥ ३० ॥

पूर्व्वमृग उवाच ॥

राजेन्द्र नैष हन्तव्यो धन्योऽयं सुकृती मृगः
बहवस्तनया यस्य हन्तव्योऽहमसन्ततिः ॥ ॥

उत्तरमृग उवाच ॥

एकदेहभवं यस्य दुःखं धन्यः स वै भवान् ।
बहूनि यस्य देहानि तस्य दुःखान्यनेकधा ॥ ३२ ॥
एको यदाहमासन्तु प्राक् तदा देहजं मम ।
दुःखमासीन्ममत्वे तु भार्य्यायास्तद्भूद्द्विधा ॥ ३३ ॥
यदा जातान्यपत्यानि तदा यावन्ति तानि वै ।
तावच्छरीरभूमीनि मम दुःखान्यथाभवन् ॥ ३४ ॥
न कृतार्थो भवान् यस्य नातिदुःखाय सम्भवः ।
इह दुःखाय मत्सूतिः परत्र च विरोधिनी ॥ ३५ ॥
यतो रक्षणपोषार्थमपत्यानां करोमि तत् ।
चिन्तयामि च संभूतिस्तेन मे नरके ध्रुवा ॥ ३६ ॥

राजोवाच ॥

न वेद्मि किं सन्ततिमान् धन्योऽपुत्रोऽथ किं मृग ।
पुत्रार्थश्चायमारम्भो मम दोलायते मनः ॥ ३७ ॥
दुःखाय सन्ततिः सत्यमैहिकामुष्मिकाय तत् ।
तथाप्यतनयान् यान्ति ऋणानीति श्रुतं मया ॥ ३८ ॥

सोऽहं यातिष्ये पुत्रार्थमृते प्राप्स्यन्ध्यं सग ।
तपसैव प्रयत्नेन यथा पूर्व्वं महीपतिः ॥ ३८ ॥

इति श्रीमार्कण्डेयपुराणे खनीनेत्रचरितं नाम ॥ १२१ ॥

द्वाविंशत्यधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

ततः स नृपतिर्गत्वा गोमतीं पापनाशिनीं ।
तत्र तुष्टाव नियतो भूत्वा देवं पुरन्दरं ॥ १ ॥
तप्यमानस्तपश्चोग्रं यतवाक्कायमानसः ।
तुष्टाव प्रयतः शक्रमपत्यार्थं महीपतिः ॥ २ ॥
तस्य स्तोत्रेण तपसा भक्त्या चापि सुरेश्वरः ।
तुतोष भगवानिन्द्रः प्राह चैनं महामुने ॥ ३ ॥
अनेन तपसा भक्त्या स्तोत्रेणोच्चारितेन च ।
परितुष्टोऽस्मि ते भूप व्रियतां भवता वरः ॥ ४ ॥

राजोवाच ॥

अपुत्रस्य सुतो मेऽस्तु सर्व्वशस्त्रभृतां वरः ।
सदा चाव्याहतैश्वर्य्यो धर्मकृद्धर्मवित् कृती ॥ ५ ॥

मार्कण्डेय उवाच ॥

तथेति चोक्तः शक्रेण राजा प्राप्तमनोरथः ।
प्रजाः पालयितुं भूप आजगाम निजं पुरं ॥ ६ ॥

तथास्य कुर्व्वतो यत्नं सम्यक् पालयतः प्रजाः ।
अजायत सुतो विप्र तदा शक्रप्रसादतः ॥ ७ ॥
तस्य नाम पिता चक्रे बलाश्व इति भूपतिः ।
अस्त्रग्राममशेषञ्च ग्राहयामास तं सुतं ॥ ८ ॥
पितर्य्युपरते विप्र सोऽधिराज्ये स्थितो नृपः ।
स बलाश्वो वशं निन्ये भुवि सर्व्वमहीक्षितः ॥ ९ ॥
करञ्च दापयामास सारग्रहणपूर्व्वकं ।
स सर्व्वभूमिपान् राजा पालयामास च प्रजाः ॥ १० ॥
अथाखिलनरेन्द्रास्ते दायादास्तस्य दुर्म्मदाः ।
न चाभ्युत्थाय सततं ते चास्मै प्रददुः करान् ॥ ११ ॥
व्युत्थिताः स्वेषु राष्ट्रेषु न सन्तोषपरास्ततः ।
भुवं तस्य नरेन्द्रस्य जगृहुस्ते नराधिपाः ॥ १२ ॥
स गृहीत्वा स्वकं राज्यं पृथिवीशो बलान्मुने ।
तस्थौ स्वनगरे भूपैर्व्विरोधी बहुभिः कृतः ॥ १३ ॥
समेत्य सुमहावीर्य्याः ससाधनधनास्ततः ।
रुरुधुस्तं महीपालं पुरे तत्र नरेश्वराः ॥ १४ ॥
पुररोधेन तेनाथ कुपितः स महीपतिः ।
स्वल्पकोषोऽल्पदण्डश्च वैक्लव्यं परमं गतः ॥ १५ ॥
अपश्यमानः शरणं सबलो द्विजसत्तम ।
करौ मुखाग्रतः कृत्वा निशश्वासार्त्तमानसः ॥ १६ ॥
ततोऽस्य हस्तविवरान्मुखानिलसमाहृताः ।
निर्जग्मुः शतशो योधा रथनागतुरङ्गमाः ॥ १७ ॥

ततः क्षणेन तत्सैन्यं करात् तस्य भूपतेः ।
व्याप्तमासीद्बलौघेन वारिव्याप्तमिवाम्बुधे ॥ १८ ॥
अथ सोऽतिबलौघेन महता तेन संवृतः ।
निर्गम्य नगरात्तस्मात् विजिग्ये नराधिपः ॥ १९ ॥
जित्वा च वशमानीय चकार करदान् पुनः ।
यथा पूर्व्वं महाभाग महाभाग्यो नरेश्वरः ॥ २० ॥
धुतयोः करयोर्जज्ञे यतस्तस्यारिदारुणं ।
बलं करन्धमस्तस्मात् स बलाढ्योऽभिधीयते ॥ २१ ॥
स धर्मात्मा महात्मा च स मैत्रः सर्व्वजन्तुषु ।
करन्धमोऽभवद्भूपस्त्रिषु लोकेषु विश्रुतः ॥ २२ ॥
सम्प्राप्तस्य परामार्त्तिं दृष्ट्वारिविनाशनं ।
बलन्धमेन चाक्षिप्तमभ्युपेत्य स्वयं नृपः ॥ २३ ॥

इति श्रीमार्कण्डेयपुराणे करन्धमचरितं समाप्तं ॥ १२२ ॥

---

## त्रयोविंशत्यधिकशततमोऽध्यायः ।

मार्कण्डेय उवाच ।

वीर्य्यचन्द्रसुता सुभ्रुर्व्वीरा नाम शुभव्रता ।
स्वयम्वरे सा जगृहे महाराजं करन्धमं ॥ १ ॥
तस्यां पुत्रं स राजेन्द्रो जनयामास वीर्य्यवान् ।
अवीक्षितमिति ख्यातिमुपेतं जगतीतले ॥ २ ॥

जाते तस्मिन् सुते राजा स दैवज्ञानपृच्छत।
कच्चित् प्रशस्तनक्षत्रे शस्तलग्ने सुतो मम॥ ३॥
कच्चिच्चालोकितं जन्म मम पुत्रस्य शोभनैः।
ग्रहैः कच्चिन्न दुष्टानां ग्रहाणां दृक्पथं गतः॥ ४॥
इत्युक्तास्तेन दैवज्ञास्तमूचुर्ब्बसुपतिं ततः।
शस्ते मुहूर्त्ते नक्षत्रे लग्ने चैव सुतस्तव॥ ५॥
समुत्पन्नो महावीर्य्यो महाभागो महाबलः।
भविष्यति महाराज महाराजस्तवात्मजः॥ ६॥
अवैक्षतेमं देवानां गुरुः शुक्रश्च सप्तमः।
सोमश्चतुर्थस्तनयं तवैनं समवैक्षत॥ ७॥
उपान्तसंस्थितश्चैव सोमपुत्रोऽप्यरक्षत।
नावैक्षतेमं सविता न भौमो न शनैश्चरः॥ ८॥
तव पुत्रं महाराज धन्योऽयं तनयस्तव।
सर्व्वकल्याणसम्पत्तिं समवेतो भविष्यति॥ ९॥

मार्कण्डेय उवाच॥

इति दैवज्ञवचनं निशम्य वसुधाधिपः।
हर्षपूर्णमनाः प्राह निजस्थानगतस्तदा॥ १०॥
अवैक्षतेमं देवानां गुरुः सोमसुतो बुधः।
नावैक्षतैनमादित्यो नार्कसूनुर्न भूमिजः॥ ११॥
अवैक्षतेति यत्प्रोक्तं भवद्भिर्बहुशो वचः।
अवीक्षितेति तेनास्य ख्यातं नाम भविष्यति॥ १२॥

मार्कण्डेय उवाच ।

अवीक्षितः सुतस्तस्य वेदवेदाङ्गपारगः ।
अस्त्रग्राममशेषं स कण्वपुत्रादवाप्तवान् ॥ १३ ॥
स रूपेणाति भिषजौ देवानां पार्थिवात्मजः ।
बुद्ध्या वाचस्पतिं कान्त्या शशाङ्कं तेजसा रविं ॥ १४ ॥
धैर्य्येणाब्धिं तथोर्व्वीञ्च सहिष्णुत्वेन वीर्य्यवान् ।
शौर्य्येण न समस्तस्य कश्चिदासीन्महात्मनः ॥ १५ ॥
स्वयम्वरे तं जगृहे हेमधर्मात्मजा वरा ।
सुदेवतनया गौरी सुभद्रा बलिनः सुता ॥ १६ ॥
लीलावती वीरसुता वीरभद्रसुतानिभा ।
भीमात्मजा मान्यवती दम्भपुत्री कुमुद्वती ॥ १७ ॥
याश्चैवमाभिनन्दन्ति स्वयम्वरकृतक्षणाः ।
ताश्चापि स बलाद्वीरो जग्राह नृपतेः सुतः ॥ १८ ॥
निराकृत्य नृपान् सर्व्वांस्तासां पितृकुलानि च ।
स्वकं हि वीर्य्यमाश्रित्य बलवान् स बलोद्धतः ॥ १९ ॥
एकदा तु विशालस्य वैदिशाधिपतेः सुतां ।
वैशालिनीं स सुदतीं स्वयम्वरकृतक्षणां ॥ २० ॥
परिभूयाखिलान् भूपान् स्वेच्छया न कृतस्तया ।
बलाज्जग्राह विप्रर्षे यथान्या बलगर्व्वितः ॥ २१ ॥
ततस्ते भूभृतः सर्व्वे बहुशस्तेन मानिना ।
निराकृताः सुनिर्व्विण्णा प्रोचुरन्योन्यमाकुलाः ॥ २२ ॥
क्षमतां खलनयैतामेकश्चाद्बलधर्मांखिलां ।

बहूनामेककार्य्याणां जन्म विश्वो महीभृतां ॥ २३ ॥
क्षत्रियो यः क्षतत्राणं वध्यमानस्य दुर्म्मदैः ।
करोति तस्य तन्नाम हथैवान्ये हि बिभ्रति ॥ २४ ॥
आत्मनोऽपि क्षतत्राणं दुष्टादस्मादकुर्व्वतां ।
भवतां क्षत्रियकुले जातानां कीदृशी मतिः ॥ २५ ॥
उच्चार्य्यते स्तुतिर्या च सूतमागधवन्दिभिः ।
सा सत्या मा वृथा वीरा भवत्वरिविनाशनात् ॥ २६ ॥
चरतां सा वृथैवेष भूपश्चारैर्दिगन्तरैः ।
पौरुषाश्रयिणः सर्व्वे विशिष्टकुलसम्भवाः ॥ २७ ॥
बिभेति को न मरणात् को युद्धेन विनाऽमरः ।
विचिन्त्यैतन्न हातव्यं पौरुषं शस्त्रवृत्तिभिः ॥ २८ ॥
एतन्निशम्य ते भूपा विसृष्टामर्षपूरिताः ।
ऊचुः परस्परं सर्व्वे समुत्तस्थुश्च सायुधाः ॥ २९ ॥
केचिद्रथानारुरुहुः केचिन्नागांस्तथा हयान् ।
अन्येऽमर्षपराधीनास्तमुपेताः पदातयः ॥ ३० ॥

इति श्रीमार्कण्डेयपुराणेऽवीक्षितचरिते ॥ १२१ ॥

---

चतुर्विंशत्यधिक शततमोऽध्यायः ।

मार्कण्डेय उवाच ।

इति संग्रामसज्जास्ते भूपा भूपसुतास्तथा ।
निराकृताः सुबहुशस्तत्राजग्मुरवीक्षिताः ॥ १ ॥

ततो बभूव संग्रामस्तस्य तैः सह दारुणः ।
एकस्य बहुभिर्भूपैर्भूपपुत्रवरैर्मुने ॥ २ ॥
तेऽसिशक्तिगदाबाणपाणयस्तं सुदुर्मदाः ।
अभिघ्नन्तो युयुधिरे तैः समस्तैरसावपि ॥ ३ ॥
स तान् शरशतैरुग्रैर्बिभेद नृपनन्दनः ।
हतास्त्रो बलवान् बाणैस्ते च तं विभिदुः शितैः ॥ ४ ॥
कस्यचिच्चिच्छिदे बाहुमन्यस्य च शिरोधरम् ।
हृदि विव्याध चैवान्यमन्यं वक्षस्यताडयत् ॥ ५ ॥
कस्यचिच्छेद करिणस्तुरगस्य तथा शिरः ।
तथान्येषान्तथैवाश्वान्त्रथस्यान्यस्य सारथिं ॥ ६ ॥
बाणानापततश्चक्रे द्विधा बाणैस्तथा द्विषां ।
चिच्छेदान्यस्य खड्गञ्च धनुरन्यस्य लाघवात् ॥ ७ ॥
तनुत्रेऽपहृते तेन भग्नाशान्यो नृपात्मजः ।
अवीक्षिताहतश्चान्यः पदातिः प्रययौ रणं ॥ ८ ॥
इत्याकुलीकृते तस्मिन् समये राजमण्डले ।
तस्थुः सप्तशता वीरा मरणे कृतनिश्चयाः ॥ ९ ॥
आभिजात्यवयःशौर्य्यवीर्य्यलज्जासमन्विताः ।
निर्ज्जिते सकले सैन्ये पलायनपरायणे ॥ १० ॥
तैः समेत्य महीपालैः स तु पुत्रो महीक्षितः ।
युयुधे धर्मयुद्धेन तेन तेनातिकोपितः ॥ ११ ॥
विच्छिन्नयन्तकवचान् स तानपि महाबलः ।
कर्त्तुं व्यवसितस्ते च ततः युद्धं महाभुजे ॥ १२ ॥

धर्ममुत्सृज्य युयुधुर्युध्यमानेन धर्मतः।
नरेन्द्रपुत्राः प्रस्वेदजलक्लिन्नाननाः समं ॥ १३ ॥
विव्याध कश्चिद्बाणौघैः कश्चिच्चिच्छेद कार्मुकं।
ध्वजमस्यापरो बाणैश्छित्त्वा भूमावपातयत् ॥ १४ ॥
जघ्नुरन्ये तथैवाश्वान् बभञ्जुश्चापरे रथं।
गदापातेनाथवान्ये बाणैः पृष्ठमताडयत् ॥ १५ ॥
छिन्ने धनुषि सक्रोधः स तदा नृपतेः सुतः।
जग्राहासिं तथा चर्म तदप्यन्येन पातयत् ॥ १६ ॥
छिन्नासिचर्मा जग्राह स गदां गदिनां वरः।
तामप्यन्यः क्षुरप्रेण चिच्छेद कृतहस्तवत् ॥ १७ ॥
अन्ये शरसहस्रेण शतेनान्ये नराधिपाः।
बिभिदुः कोष्ठकीकृत्य धर्मयुद्धपराङ्मुखाः ॥ १८ ॥
स विह्वलः पपातोर्व्यामेको बहुभिरर्दितः।
राजपुत्रा महाभागा बबन्धुस्ते च तं ततः ॥ १९ ॥
तमधर्मेण ते सर्वे गृहीत्वा नृपतेः सुतं।
विशालेन समं राज्ञा वैदिशं विविशुः पुरं ॥ २० ॥
हृष्टाः प्रमुदिता बद्धन्तमादाय नृपात्मजं।
स्वयम्बरा च सा कन्या न्यस्ता तेन ततः पुरः ॥ २१ ॥
पुनः पुनश्च पित्रोक्ता तथापि च पुरोधसा।
आलम्ब्यतामिति वरो यस्ते राजसु रोचते ॥ २२ ॥
यदा सा मानिनी कञ्चिन्न जग्राह वरं शुभे।
तदा पप्रच्छ दैवज्ञं विशालोऽथ नरेश्वरः ॥ २३ ॥

विशिष्टतरमेतस्या विवाहाय दिनं वद ।
अथैतदीदृक् संजातं यद्वं विघ्नोपपादकं ॥ २४ ॥

मार्कण्डेय उवाच ॥

इति पृष्टो नरेन्द्रेण स दैवज्ञो विमृश्य तत् ।
दुर्मना प्राह विज्ञातपरमार्थो महीपतिं ॥ २५ ॥
भविष्यन्त्यपरानीह दिनानि पृथिवीपते ।
प्रशस्तलग्नयुक्तानि शोभनान्यचिरेण च ॥ २६ ॥
करिष्यति विवाहार्थं तेषु प्राप्तेषु मानद ।
अलमेतेन यत्नार्यं महाविघ्न उपस्थितः ॥ २७ ॥

इति श्रीमार्कण्डेयपुराणेऽवीक्षितचरिते ॥ १२४ ॥

---

पञ्चविंशत्यधिक शततमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

ततः शुश्राव तं बद्धं तनयं स करन्धमः ।
तस्य पत्नी तथा वीरा अन्ये चापि महीभृतः ॥ १ ॥
तमधर्मेण तनयं बद्धं श्रुत्वा महीपतिः ।
समस्तैः पृथिवीपालैश्चिरन्दध्यौ महामुने ॥ २ ॥
केचिद्रूचुर्महीपाला वध्याः सर्वे महीक्षितः ।
यैरेकः संयुगे बद्धः समस्तैस्तैरधर्मतः ॥ ३ ॥
सज्यतां वाहिनी शीघ्रमूचुरन्यैः किमास्यते ।
विशालो बध्यतां दुष्टस्तथैवेऽन्ये समागताः ॥ ४ ॥

अन्ये तथोऽनुधर्म्मोऽयं त्वतः पूर्व्वं महीक्षितैः ।
अन्यायेन बलांयेन गृहीता तनयाम्मतौ ॥ ५ ॥
स्वयम्वरेष्वशेषेषु तेन राजसुताग्रहा ।
स्वीकृतास्ततः सर्व्वे समेत्य तं वयोवृक्तः ॥ ६ ॥
तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रकर्षिता ॥ ७ ॥
उवाच भर्त्तुः प्रत्यक्षमन्येषाञ्च महीक्षितां ।
भद्रं कृतं भद्रभुजा मम पुत्रेण पार्थिवाः ॥ ८ ॥
गृहीता यद्बलात् कन्यां जित्वा सर्व्वमहीक्षितः ।
तदर्थं युध्यमानोऽयं युद्ध एको न धर्मतः ॥ ९ ॥
तदप्यसत्सुतस्त्वाभौ मन्ये नापचयप्रदं ।
एतदेव हि पौरुष्यं यदधर्मवशाक्षरः ॥ १० ॥
नीतिं न गणयत्येवं जिघांसुरिव केशरी ।
स्वयम्वराय विन्यस्ता मम पुत्रेण कन्यका ॥ ११ ॥
बहुशो गृहीता भूपानां पश्यतामतिमानिनां ।
क्व क्षत्रियकुले जन्म क्व याच्ञा हीनसेविता ॥ १२ ॥
बलादेव समादत्ते क्षत्रियो बलिनां पुरः ।
लोहशृङ्खलबद्धा या न वशं यान्ति कातराः ॥ १३ ॥
प्रसह्यकारिणो यान्ति राजानो धर्मशालिनः ।
तदलन्दौर्मनस्येन साध्यमेषाश्च बन्धनं ॥ १४ ॥
युष्माकमप्यायुधानामकृतृ मूर्द्धनु पातनं ।
कृत्वैव पृथिवीशानां पुत्त्रीपुत्राहितं वसु ॥ १५ ॥

भार्य्याचार्य्यनिमित्तानि ततो वाक्यानि गौरवं ।
तत् त्वर्य्यतां रथायाशु स्यन्दनान्यधिरोहत ॥ १६ ॥
सज्जीकुरुत नागाश्वमचिरेण ससारथिं ।
मन्यध्वं किं महीपालैर्बहुभिः सह विग्रहं ॥ १७ ॥
प्रभूता एव तोषाय शूरस्याल्पयुधे क्रियाः ।
कस्य नाल्पेषु सामर्थ्यं नरेन्द्रादिषु जायते ॥ १८ ॥
येभ्यो न विद्यते भीतिर्हन्तुं पुत्राहितान्मुने ।
व्याप्तलोकान् समस्तान् यो ह्यभिभूय यतो नरः ॥
व्यरोचतेति शूरः स तमांसीव दिवाकरः ॥ १९ ॥

मार्कण्डेय उवाच ।

इत्थमुद्धर्षितो राजाऽनया पत्न्या करन्धमः ।
चकार सबलोद्योगं हन्तुं पुत्राहितान्मुने ॥ २० ॥
ततस्तस्य समं भूपैर्विशालेन च सङ्गरः ।
बभूव बद्धपुत्रस्य तैरशेषैर्महामुने ॥ २१ ॥
दिनत्रयमभूद्युद्धं तेन राज्ञा समं तदा ।
करन्धमेन भूपानां विशालस्यानुकुर्व्वतां ॥ २२ ॥
यदा पराजयप्रायं तं सर्व्वं भूपमण्डलं ।
तदा विशालोऽर्घ्यकरः करन्धममुपास्थितः ॥ २३ ॥
करन्धमोऽपि संप्रीत्या तेन राज्ञाभिपूजितः ।
वियुक्ते तनये तत्र निशां तां सुखमावसत् ॥ २४ ॥
ताञ्च कन्यामुपादाय विशाले समुपस्थिते ।
अवीक्षित् प्राह विप्रर्षे विवाहार्थं पितुः पुरः ॥ २५ ॥

नाहमेतां ग्रहीष्यामि न चान्यां योषितं नृप ।
परैर्यस्या निरीक्षन्त्याः संग्रामेऽहं पराजितः ॥ २६ ॥
अन्यस्मै संप्रयच्छेमामियं चान्यं वृणोतु तं ।
अखण्डितयशोवीर्यो यः परैर्नापमानितः ॥ २७ ॥
परैः पराजितोऽहं यत् कातरेयं यथाऽबला ।
किमत्र मानुषत्वं मे न तस्या मम चान्तरं ॥ २८ ॥
स्वतन्त्रता मनुष्याणां परतन्त्रा सदाऽबला ।
नरोऽपि परतन्त्रो यस्तस्य कीदृङ्मनुष्यता ॥ २९ ॥
सोऽहमस्या मुखं भूयो द्रष्टुं दर्शयिता कथं ।
योऽहमस्याः पुरो भूमौ परैर्भूपैः खिलीकृतः ॥ ३० ॥
इत्युक्ते तेन तनयामुवाच जगतीपतिः ।
श्रुतं ते वचनं वत्से यदुक्तोऽस्य महात्मनः ॥ ३१ ॥
वरयान्यं पतिं यत्र मनस्ते रमते शुभे ।
वयं चास्मै प्रयच्छामो [illegible] ॥
एतयोरेकमातिष्ठ मार्गयोरुचिरानने ॥ ३२ ॥

कन्योवाच ।

पराजितोऽयं बहुभिर्न सम्यक् [illegible] ।
संग्रामे न यशोवीर्यहानिकारि हि पार्थिव ॥ ३३ ॥
एको बहूनां युद्धाय यातानामिव केसरी ।
यत्संस्थितः परं शौर्यं तेनास्य प्रकटीकृतं ॥ ३४ ॥
न केवलमयं तस्थौ युद्धे तेऽप्यखिला जिताः ।
बहवोऽनेन यत्नेन विक्रमोऽपि प्रकाशितः ॥ ३५ ॥

शौर्य्यविक्रमसंयुक्तमिमं सर्व्वशस्त्रकोविदः ।
धर्म्मयुद्धमधर्म्मेण जितवन्तोऽस्य वा यथा ॥ ३६ ॥
न चापि रूपवानेवं शोभनस्य महात्मनः ।
शौर्य्यविक्रमधैर्य्याणि हरन्त्यस्य मनो मम ॥ ३७ ॥
तत्किमुक्तेन बहुना याच्यतां मत्कृते नृपः ।
त्वया महानुभावोऽयं नान्यो मे भविता पतिः ॥ ३८ ॥

विशाल उवाच ।

राजपुत्र सुता प्राह ममैतच्छोभनं वचः ।
एवञ्चैव त्वया तुल्यः कुमारो न महीतले ॥ ३९ ॥
अविसम्वादि ते शौर्य्यमतीव च पराक्रमः ।
पावयास्मत्कुलं वीर दुहितुर्मे परिग्रहात् ॥ ४० ॥

राजपुत्र उवाच ।

नाहमेतां ग्रहीष्यामि न चान्यां योषितं नृप ।
आत्मन्येव हि मे बुद्धिः स्त्रीमयी मनुजेश्वर ॥ ४१ ॥

मार्कण्डेय उवाच ।

ततः करन्धमः प्राह पुत्रेयं गृह्यतां त्वया ।
विशालतनया सुभ्रूस्त्वयि हार्द्दवती दृढं ॥ ४२ ॥

राजपुत्र उवाच ।

नाज्ञाभङ्गः कदाचित्ते कृतपूर्व्वो मया प्रभो ।
तथाज्ञापय मां तात यथाज्ञां करवाणि ते ॥ ४३ ॥

मार्कण्डेय उवाच ।

अत्यन्तनिश्चितमतौ तस्मिन्राजसुते सति ।

तामुवाच विशालोऽपि व्याकुलीकृतमानसः ॥ ४४ ॥
निवर्त्यतां मनः पुत्रि एतस्मात् प्रकोपनात् ।
अन्यं वरय भर्त्तारं यस्ते चित्ते नृपात्मजे ॥ ४५ ॥

कन्योवाच ।

वरं वृणोम्यहं तात मामेष यदि नेच्छति ।
तपसोऽन्यो न मे भर्त्ता जन्मन्यस्मिन् भविष्यति ॥ ४६ ॥

मार्कण्डेय उवाच ॥

ततः करन्धमो राजा विशालेन समं मुदा ।
स्थित्वा दिनचयं तत्र निजमभ्याययौ पुरं ॥ ४७ ॥
अवीक्षितोऽपि तेनैव पित्राऽन्यैश्च नराधिपैः
निर्द्दशनैः पुराहत्तैः सान्त्वितोऽभ्यागमत् पुरं ॥ ४८ ॥
सापि कन्या वनं गत्वा निष्कृष्टा निजबान्धवैः ।
तपस्तेपे निराहारा वैराग्यं परमास्थिता ॥ ४९ ॥
निराहारा यदा सा तु मासत्रयमवस्थिता ।
सम्प्राप परमामार्त्तिं कृशाधमनिसन्तता ॥ ५० ॥
मन्दोत्साहातितन्वङ्गी मुमूर्षुरपि बालिका ।
देहत्यागाय सा चक्रे तदा बुद्धिं नृपात्मजा ॥ ५१ ॥
आत्मत्यागाय तां ज्ञात्वा कृतबुद्धिं सुरास्ततः ।
समेत्य प्रेषयामासुर्देवदूतन्तदन्तिकं ॥ ५२ ॥
समुपेत्य सुतां प्राह दूतोऽहं पार्थिवात्मजे ।
प्रेषितस्त्रिदशैस्तुभ्यं यत्प्रार्थ्यन्तन्निशामय ॥ ५३ ॥
न भवत्या परित्याज्यं शरीरमतिदुर्लभं ।

त्वं भविष्यसि कस्यापि जननी चक्रवर्त्तिनः ॥ ५४ ॥
पुत्रेण च महाभागे भोक्तव्या निहतारिणा ।
अव्याहताज्ञेन चिरं सप्तद्वीपवती मही ॥ ५५ ॥
हन्तव्यस्तेन तद्वजिह्वानां पुरतो रिपुः ।
अयः शङ्कुस्तथा भूतो वर्णे स्थाप्यास्ततः प्रजाः ॥ ५६ ॥
परिपालनीयमखिलं चातुर्वर्ण्यं स्वधर्मतः ।
हन्तव्या दस्यवो म्लेच्छा ये चान्ये दुष्टचेष्टिताः ॥ ५७ ॥
यष्टव्यं विविधैर्यज्ञैः समाप्तवरदक्षिणैः ।
वाजिमेधादिभिर्भद्रे षट्सहस्रैश्च संख्यया ॥ ५८ ॥

मार्कण्डेय उवाच ।

तं दृष्ट्वा साऽन्तरीक्षस्थं दिव्यस्रगनुलेपनं ।
देवदूतमुवाचेदं राजपुत्री ततो मृदुः ॥ ५९ ॥
सत्यं त्वमागतः स्वर्गाद्देवदूतो न संशयः ।
किन्तु भर्त्ता विना पुत्रः स कथं मे भविष्यति ॥ ६० ॥
अवीक्षितमृते भर्त्ता मम नान्योऽत्र जन्मनि ।
भवितेति प्रतिज्ञातं मयैतत्सन्निधौ पितुः ॥ ६१ ॥
स च नेच्छति मां प्रोक्तो मत्पित्रा जनकेन च ।
करन्धमेनाथ सम्यक् याचितश्च मया तथा ॥ ६२ ॥

देवदूत उवाच ।

किमनेन महाभागे बहुनोक्तेन ते सुतः ।
समुत्पत्स्यति मा त्वमधीरत्वमात्मानमधर्मतः ॥ ६३ ॥
अत्रैव कानने तिष्ठ तनुं क्षीणाञ्च पोषय ।

तपःप्रभावादेतत्ते सर्वं साधु भविष्यति ॥ ६४ ॥

मार्कण्डेय उवाच ॥

इत्युक्ता देवदूतोऽसौ यथागतमगात्ततः।
चकाराराधनं सुभ्रूः साध्यास्तत्तनुयोऽव्ययं ॥ ६५ ॥

इति श्रीमार्कण्डेयपुराणेऽवीक्षितचरिते ॥ १२५ ॥

---

षड्विंशत्यधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

अथ सावीक्षितो माता वीरा वीरप्रजावती।
पुण्येऽहनि समाहूय प्राह पुत्रमवीक्षितं ॥ १ ॥
पुत्राहमभ्यनुज्ञाता तव पित्रा महात्मना।
उपवासं करिष्यामि दुष्करोऽयं किमिच्छकः ॥ २ ॥
स चायत्तस्तव पितुस्त्वया साध्यो मयापि च।
प्रतिज्ञाते त्वया पुत्र ततस्तच्च यताम्यहं ॥ ३ ॥
द्रव्यस्यार्द्धं महाकोषात् तच दास्याम्यहं पितुः।
धनन्ते पितुरायत्तमनुज्ञाताऽस्मि तेन च ॥ ४ ॥
क्लेशसाध्यो मदायत्तः स हि श्रेयो भविष्यति।
साध्यो भवेद्वा यदि ते कश्चिद्बलपराक्रमे ॥ ५ ॥
स तेऽसाध्यो ह्यन्यथा वा दुःखसाध्यो भविष्यति।
तत्त्वं प्रतिज्ञां कुरुषे यदि पुत्राद्य चैव ते ॥
तदेतदहमाधास्ये कथ्यतां यन्मतं तव ॥ ६ ॥

अवीक्षित उवाच ।

वित्तं मे पितुरायत्तं मामसि त्वं न तव वै ।
यन्मच्छरीरनिष्पाद्यं तत्करिष्ये त्वयोदितम् ॥ ७ ॥
किमिच्छसि व्रतं मातर्निश्चिन्ता भव निर्व्यथा ।
राज्ञा पित्राऽभ्यनुज्ञातं यदि वित्तेश्वरेण मे ॥ ८ ॥

मार्कण्डेय उवाच ।

ततः सा राजमहिषी तद्व्रतं समुपोषिता ।
यथोक्तां साऽकरोत् पूजां राजराजस्य संयता ॥ ९ ॥
निधीनामप्यशेषाणां निधिपालगणस्य च ।
लक्ष्म्याश्च परया भक्त्या यतवाक्कायमानसा ॥ १० ॥
विविक्ते तु गृहस्थोऽयमथ राजा करन्धमः ।
आसीन उक्तः सचिवैर्नीतिशास्त्रविशारदैः ॥ ११ ॥

सचिवा ऊचुः ।

राजन् वयः परिणतं तवैतच्छासतो महीम् ।
एकस्ते तनयोऽवीक्षित्स चादारपरिग्रहः ॥ १२ ॥
अपुत्रः स च ते निष्ठां यदा भूप गमिष्यति ।
तदारिपक्षं पृथिवी नियतं तव यास्यति ॥ १३ ॥
वंशक्षयस्ते भविता पितृपिण्डोदकक्षयः ।
एतन्महत्ते विरवं क्रियाबाधा भविष्यति ॥ १४ ॥
तस्मात् कुरु तथा भूप यथा ते तनयः पुनः ।
करोति सततं बुद्धिं पितॄणामनुकम्पया ॥ १५ ॥

एतस्मिन्नन्तरे शब्दं शुश्राव जगतीपतिः।
पुरोहितस्य वीराया गदतो ह्यर्थिनं प्रति॥ १६॥
कः किमिच्छति दुःसाध्यं कस्य किं साध्यतामिति।
करन्धमस्य महिषी किमिच्छकमुपोषिता॥ १७॥
राजपुत्त्रोऽप्यवीक्षित्तु श्रुत्वा पौरोहितं वचः।
प्रत्युवाचार्थिनः सर्व्वान् राजद्वारमुपागतान्॥ १८॥
मया साध्यं शरीरेण यस्य किञ्चिद्ब्रवीतु सः।
मम माता महाभागा किमिच्छकमुपोषिता॥ १९॥
शृण्वन्तु मेऽर्थिनः सर्व्वे प्रतिज्ञातं मया तदा।
किमिच्छय ददाम्येष क्रियमाणे किमिच्छके॥ २०॥

मार्कण्डेय उवाच।

ततो राजा निशम्यैतद्वाक्यं पुत्त्रमुखाच्च्युतं।
समुत्पत्याब्रवीत् पुत्त्रमहमर्थी प्रयच्छ मे॥ २१॥

अवीक्षिदुवाच।

दातव्यं यन्मया तात भवते तद्ब्रवीहि मां।
कर्त्तव्यं दुष्करं वा ते साध्यं दुःसाध्यमेव वा॥ २२॥

राजोवाच।

यदि सत्यप्रतिज्ञस्त्वं ददासि च किमिच्छकं।
पौत्त्रस्य दर्शय मुखं ममोत्सङ्गगतस्य तत्॥ २३॥

अवीक्षिदुवाच।

अहन्तवैकपुत्त्रनयो ब्रह्मचर्य्यञ्च मे नृप।

न मे पुत्रोऽस्ति पौत्रस्य द्रक्ष्यामि कथं मुखं ॥ २४ ॥

राजोवाच ।

पापाय ब्रह्मचर्य्यन्ते यदिदं धार्य्यते त्वया ।
तस्मात् त्वं मोचयात्मानं मम पौत्रञ्च दर्शय ॥ २५ ॥

अवीक्षिदुवाच ।

विषमस्मान्महाराज यदन्यं तत् समादिश ।
वैराग्येण मया त्यक्तः स्त्रीसंभोगस्तथास्तु सः ॥ २६ ॥

राजोवाच ।

बहुभिर्युध्यमानानां दृष्टो वै वैरिणां जयः ।
तथापि यदि वैराग्यमुपैषि तदपण्डितः ॥ २७ ॥
किंवा नो बहुनोक्तेन ब्रह्मचर्य्यं परित्यज ।
मातुस्त्वमिच्छया वक्त्रं पौत्रस्य मम दर्शय ॥ २८ ॥

मार्कण्डेय उवाच ।

यदा स बहुभिस्तेन प्रोक्तः पुत्रेण पार्थिवः ।
नान्यत् प्रार्थयते किञ्चित् तदा पुत्रोऽब्रवीत् पुनः ॥ २९ ॥
दत्वा किमिच्छकं तुभ्यं प्राप्तोऽहं तात सङ्कटं ।
तत्करिष्यामि निर्लज्जो भूयो दारपरिग्रहं ॥ ३० ॥
स्त्रियः समक्षं विजितः पतितो धरणीतले ।
स्त्रीपतिर्भविता भूयस्तातैतदपि दुष्करं ॥ ३१ ॥
तथापि किङ्करोम्येष सत्यपाशवशङ्गतः ।
करिष्यामि यथात्थ त्वं भुज्यतां निजशासनं ॥ ३२ ॥

इति श्रीमार्कण्डेयपुराणेऽवीक्षितचरिते ॥ १२६ ॥

## सप्तविंशत्यधिकशततमोऽध्यायः ।

मार्कण्डेय उवाच ।

कदाचिद्राजपुत्रोऽसौ मृगव्यमचरद्वने ।
मृगान्विध्यन्वराहांश्च शार्दूलादींश्च दंष्ट्रिणः ॥ १ ॥
शुश्राव सहसा शब्दं त्राहि त्राहीति योषितः ।
विक्रोशन्त्याः सुबहुशो भयगद्गदमुच्चकैः ॥ २ ॥
माभैर्माभैरिति वदन् राजपुत्रः स वेगितः ।
चोदयामास तुरगं यतः शब्दः समागतः ॥ ३ ॥
ततश्च सापि चुक्रोश कन्यका विजने वने ।
गृहीता दनुपुत्रेण दृढकेशेन मानिनी ॥ ४ ॥
करन्धमसुतस्याहं भार्या चाहमवीक्षितः ।
हरत्यनार्य्यो विपिने पृथिवीशस्य धीमतः ॥ ५ ॥
यस्य सर्व्वे महीपालास्तथा गन्धर्वगुह्यकाः ।
न समर्थाः पुरः स्थातुं तस्य भार्या हृतास्म्यहं ॥ ६ ॥
यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः ।
करन्धमसुतस्यैषा तस्य भार्या हृतास्म्यहं ॥ ७ ॥

मार्कण्डेय उवाच ॥

इत्याकर्ण्य महीपालतनयः,स शरासनी ।
चिन्तयामास किमिदं मम भार्या च कानने ॥ ८ ॥
मायेयं रक्षसां नूनं दुष्टानां काननौकसां ।
अथवा गत एवाहं सर्व्वं वेत्स्यामि कारणं ॥ ९ ॥

मार्कण्डेय उवाच ।

त्वरितः स ततो गत्वा ददर्शातिमनोरमां ।
कानने कन्यकामेकां सर्व्वालङ्कारभूषितां ॥ १० ॥
गृहीतां दनुपुत्रेण दृढकेशेन दक्षिणा ।
त्राहि त्राहीति करुणं विक्रोशन्तीं पुनः पुनः ॥ ११ ॥
माभैरिति स तामाह क्षतोऽसीति च तं वदन् ।
शासतीमां महीं दुष्टः को भूपेऽत्र करन्धमे ॥ १२ ॥
यस्य प्रतापावनता भुवि सर्व्वे महीक्षितः ।
ततस्तमागतं दृष्ट्वा गृहीतवरकार्म्मुकं ॥ १३ ॥
मां त्राहीत्याह तन्वङ्गी हृतास्म्येनेति चासकृत् ।
राज्ञः करन्धमस्याहं स्नुषा भार्य्याप्यवीक्षितः ।
हृतास्म्येतेन दुष्टेन सनाथानाथवद्वने ॥ १४ ॥

मार्कण्डेय उवाच ।

ततो विममृषे वाक्यमवीक्षित् स तयोदितं ।
कथमेषा हि मे भार्य्या स्नुषा तातस्य वा कथं ॥ १५ ॥
अथवा मोचयाम्येतां तन्वीं वेत्स्यामि तत् पुनः ।
क्षत्रियैर्धार्य्यते शस्त्रमार्त्तानां त्राणकारणात् ॥ १५ ॥
ततः क्रुद्धोऽब्रवीद्वीरो दानवं तं सुदुर्मतिं ।
जीवन् गच्छ विमुच्यैनामन्यथा न भविष्यसि ॥ १६ ॥
ततः स तां विहायोग्रदण्डमुत्क्षिप्य दानवः ।
तमभ्यधावत्सोऽप्येनं शरवर्षैरवाकिरत् ॥ १७ ॥
स वार्य्यमाणो बाणौघैर्दानवोऽतिमदान्वितः ।

राजपुत्राय चिक्षेप स्वकं मुद्गरमाहतं ॥ १८ ॥
तमापतन्तं चिच्छेद शरैर्भूपसुतस्ततः ।
सोऽप्यासन्नं प्रचित्वोच्चैर्द्रुममाजौ व्यवस्थितः ॥ १९ ॥
सृजतः शरवर्षाणि तं चिक्षेप ततो द्रुमं ।
स च तं तिलशश्चक्रे भल्लैः कार्मुकमुज्झितैः ॥ २० ॥
ततश्चिक्षेप च शिलां राजपुत्राय दानवः ।
सापि मोघा पपातोर्व्यामुज्झिता तेन लाघवात् ॥ २१ ॥
राजपुत्राय कुपितो यच्चिक्षेप दानवः ।
तत्तच्चिच्छेद बाणौघैर्भूभृत्सूनुः स लीलया ॥ २२ ॥
ततो विच्छिन्नदण्डोऽसौ विच्छिन्नसकलायुधः ।
मुष्टिमुद्यम्य सक्रोधो राजपुत्रमधावत ॥ २३ ॥
तस्यापतत एवासौ करन्धमसुतः शिरः ।
छित्त्वा वेतसपत्रेण पातयामास वै भुवि ॥ २४ ॥
तस्मिन् विनिहते दैवैर्दानवे दुष्टचेष्टिते ।
करन्धमसुतः सर्व्वैः साधु साध्विति भाषितः ॥ २५ ॥
वरं वृणीष्वेति तदा देवैरुक्तो नृपात्मजः ।
वव्रे पुत्रं महावीर्य्यं पितुः प्रियचिकीर्षया ॥ २६ ॥

देवा ऊचुः ॥

भविष्यति हि ते पुत्रश्चक्रवर्त्ती महाबलः ।
अस्यामेव हि कन्यायां मोक्षितायां त्वयाऽनघ ॥ २७ ॥

राजपुत्र उवाच ॥

पित्राऽहं सत्यपाशेन बद्धः पृच्छाम्यहं सुतं ।

राजभिर्निर्जितेनाजौ त्यक्तो मे दारसंग्रहः ॥ २८ ॥
सा च मे यावती त्यक्ता विशालस्य नृपतेः सुता ।
तया च मत्कृते त्यक्तो मानवे नरसङ्गमः ॥ २९ ॥
तत् कथं तामपास्याथ विशालतनयामहं ।
नृशंसानां करिष्यामि अन्यनारीपरिग्रहं ॥ ३० ॥

देवा ऊचुः ।

इयमेव हि ते भार्य्या श्लाघ्यते या त्वया सदा ।
विशालस्य सुता सुभ्रूस्त्वत्कृते याश्रिता तपः ॥ ३१ ॥
तस्यामुत्पत्स्यते वीरः सप्तद्वीपप्रसाधकः ।
यष्टा यज्ञसहस्राणां चक्रवर्त्ती सुतस्तव ॥ ३२ ॥

मार्कण्डेय उवाच ।

इत्युक्त्वाथ ययुर्देवाः करन्धमसुतं द्विज ।
सोऽप्याह तां तदा पत्नीं कथ्यतां भीरु किं त्विदं ॥ ३३ ॥
सा चास्मै कथयामास त्यक्ताहं भवता यदा ।
त्यक्तबन्धुजनारण्यं निर्व्वेदात् समुपागता ॥ ३४ ॥
तत्राहं तपसा वीर क्षीणप्रायं कलेवरं ।
त्यक्तुकामा समभ्येत्य देवदूतेन वारिता ॥ ३५ ॥
भविष्यति च पुत्रस्ते चक्रवर्त्ती महाबलः ।
प्रीणयिष्यति यो देवानसुरांश्च हनिष्यति ॥ ३६ ॥
इति देवाज्ञया तेन देवदूतेन वारिता ।
न संत्यक्तवती देहं त्वत्सङ्गममनोरथा ॥ ३७ ॥
परश्वश्च महाभाग यातं गङ्गाह्रदं कृता ।

अवतीर्णा विकृष्टास्मि दृढ़नागेन केनचित् ॥ ३८ ॥
ततो रसातलं नीता तेन तत्र च मे पुरं ।
नागाः सहस्रशस्तस्थुर्नागपत्न्यः कुमारकाः ॥ ३९ ॥
तुष्टुवुर्मां समभ्येत्य मामन्येऽपूजयंस्तथा ।
ययाचिरे सविनयं नागा मामङ्गनास्तथा ॥ ४० ॥
प्रसादं कुरु सर्व्वेषां त्वमस्माकं सुतस्तवया ।
अपराधमुपेतानां संनिवार्य्यो बधोन्मुखः ॥ ४१ ॥
अपराधं करिष्यन्ति त्वत्पुत्रस्यानिलाशनाः ।
तन्निमित्तं निवार्य्योऽसौ प्रसादः क्रियतामिति ॥ ४२ ।
तथेति च मया प्रोक्ते दिव्यैः पातालभूषणैः ।
भूषिताहं तथा पुष्पैर्गन्धवासोभिरुत्तमैः ॥ ४३ ॥
समानीता तथालोकमिमन्तेनानिलाशिना ।
पुरा यथा कान्तिमती पूर्व्ववद्रूपशालिनी ॥ ४४ ।
इति रूपवतीं दृष्ट्वा सर्व्वालङ्कारभूषितां ।
जग्राह दृढकेशोऽयं हर्तुकामः सुदुर्मतिः ॥ ४५ ॥
युष्मद्बाहुबलेनाहं राजपुत्र विमोक्षिता ।
तत्प्रसीद महाबाहो मां प्रतीच्छ त्वया समः ॥
भूलोके राजपुत्रोऽन्यो नास्ति सत्यं ब्रवीम्यहं ।

इति श्रीमार्कण्डेयपुराणेऽवीक्षितचरिते ॥ १२७ ॥

षट्विंशत्यधिकशततमोऽध्यायः ।

---

मार्कण्डेय उवाच ।

इति तस्या वचः श्रुत्वा स्मृत्वा पितृवचः शुभं ।
किमिच्छकप्रतिज्ञाते यदुक्तं तेन भूभुजा ॥ १ ॥
प्रत्युवाच स तां कन्यामवीक्षिन्नृपतेः सुतः ।
सानुरागमनाः कन्यां त्वत्सम्भोगाच्च तत्कृते ॥ २ ॥
यदाहं त्वत्कृतांस्तन्वी त्वामरातिपराजितः ।
विजित्य शत्रून् संप्राप्तो त्वं मयात्र करोमि किं ॥ ३ ॥

कन्योवाच ।

मम पाणिं गृहाण त्वं रमणीयेऽत्र कानने ।
सकामायाः सकामेन सङ्गमो गुणवान् भवेत् ॥ ४ ॥

राजपुत्र उवाच ।

एवं भवतु भद्रन्ते विधिरेवात्र कारणं ।
अन्यथा कथमन्यत्र त्वमहञ्च समागतः ॥ ५ ॥

मार्कण्डेय उवाच ।

एतस्मिन्नन्तरे प्राप्तो गन्धर्व्वस्तनयो मुने ।
वराप्सरोभिः सहितो गन्धर्व्वैरपरैर्वृतः ॥ ६ ॥

गन्धर्व्व उवाच ।

राजपुत्र सुतेयम्मे भामिनी नाम मानिनी ।
अभिशापादगस्त्यस्य विशालतनयाऽभवत् ॥ ७ ॥

बालभावेन योऽगस्त्यः कोपितः क्रीडमानया ।
ततस्तेन तदा शप्ता मानुषी त्वं भविष्यसि ॥ ८ ॥
प्रसादितः स चास्माभिर्व्वालेयमविवेकिनी ।
त्वदपराधाद्विप्रर्षे प्रसादः क्रियतामिति ॥ ९ ॥
प्रसाद्यमानः सोऽस्माभिरिदमाह महामुनिः ।
बालेति मत्वा शापोऽल्पो दत्तोऽस्या नान्यथैव तत् ॥ १० ॥
इति शापादगस्त्यस्य विशालभवने शुभा ।
जातेयं मत्सुता सुभ्रूर्भाविनी नाम नामतः ॥ ११ ॥
तदस्यार्थे कृते प्राप्तो यद्वाहोमं त्वपात्मजा ।
ममात्मजा सुतस्तेऽत्र चक्रवर्त्ती भविष्यति ॥ १२

मार्कण्डेय उवाच ॥

तथेत्युक्तेति तस्याथ स पाणिं पार्थिवात्मजः ।
जग्राह विधिवद्धोमं चक्रे तत्र च तुम्बुरुः ॥ १३ ॥
प्रजगुर्देवगन्धर्व्वा ननृतुश्चाप्सरोगणाः ।
पुष्पाणि ससृजुर्मेघा देववाद्या निसस्वनुः ॥ १४ ॥
विवाहे राजपुत्रस्य तया तत्र समेयुषः ।
समस्तवसुधाबाधाकार्य्यकारणभूतया ॥ १५ ॥
ततो गन्धर्व्वलोकन्ते सह तेन महात्मना ।
निःशेषेण ययुः सा च स च राजसुतो मुने ॥ १६ ॥
भाविन्या मुमुदे सार्द्धमवीक्षिन्नृपनन्दनः ।
सा च तेन समं तत्र भीमसम्भ्रमसमन्विता ॥ १७ ॥

कदाचिदिति रम्येऽसौ नगरोपवने तथा ।
विक्रीडति समं तन्व्या कदाचिदुपपर्व्वते ॥ १८ ॥
कदाचित् पुलिने नद्या हंससारसशोभिते ।
कदाचिद्भवनस्यान्ते प्रासादे चातिशोभने ॥ १९ ॥
विहारदेशेष्वन्येषु रमणीयेष्वहर्निशं ।
स रेमे सहितस्तन्व्या सा च तेन महात्मना ॥ २० ॥
भक्ष्यानुलेपनं वस्त्रं स्रक्पानादिकमुत्तमं ।
उपजह्रुस्तयोस्तत्र मुनिगन्धर्व्वकिन्नराः ॥ २१ ॥
तया च रमतस्तस्य भामिन्या सह दुर्लभे ।
गन्धर्व्वलोके वीरस्य पुत्रं सा सुषुवे शुभा ॥ २२ ॥
तस्मिन् जाते महावीर्य्ये गन्धर्व्वाणां महोत्सवः ।
बभूव मनुजव्याघ्र तेन कार्य्यमवेक्षतां ॥ २३ ॥
जगुः केचित्तथैवान्ये मृदङ्गपटहानकान् ।
अवादयन्त चैवान्ये वेणुवीणादिकांस्तथा ॥ २४ ॥
ननृतुश्च तथा तत्र बहवोऽप्सरसां गणाः ।
पुष्पवृष्टिमुचो मेघा जगर्ज्जुर्मृदुनिस्वनाः ॥ २५ ॥
तथा कोलाहले तस्मिन् वर्त्तमानेऽथ तुम्बुरुः ।
तुनयेन सृतो जातजातकर्म्माकरोन्मुनिः ॥ २६ ॥
देवाः समाययुः सर्व्वे तथा देवर्षयोऽमलाः ।
पातालात्पन्नगेन्द्राश्च शेषवासुकितक्षकाः ॥ २७ ॥
तथा देवासुराणाञ्च ये प्रधाना द्विजोत्तम ।
यक्षाणां गुह्यकानाञ्च वायवश्च तथाखिलाः ॥ २८ ॥

तदाऽऽगतैरशेषर्षिदेवशाल्मलपत्तनैः।
मुनिभिश्चाकुलमभूत् मरुत्तस्य महापुरं॥ २९॥
ततः स तुम्बुरुः कृत्वा जातकर्मादिकीं क्रियां।
चक्रे स्वस्त्ययनन्तस्य बालस्य स्तुतिपूर्व्वकं॥ ३०॥
चक्रवर्त्ती महावीर्य्यो महाबाहुर्महाबलः।
महान्तं कालमीशित्वमशेषायाः क्षितेः कुरु॥ ३१॥
इमे शक्रादयः सर्व्वे लोकपालास्तथर्षयः।
स्वस्ति कुर्व्वन्तु ते वीर वीर्य्यश्चारिविनाशनं॥ ३२॥
मरुत्तव शिवायास्तु वाति पूर्व्वो न यो रजः।
मरुत्ते विमलोऽत्यर्थोऽवैषम्यायास्तु दक्षिणः॥ ३३॥
पश्चिमस्ते महद्वीर्य्यमुत्तमन्ते प्रयच्छतु।
बलं यच्छतु चोत्कृष्टं मरुत्ते च तथोत्तरः॥ ३४॥
इति स्वस्त्ययनस्यान्ते वागुवाचाशरीरिणी।
मरुत्तवेति बहुशो यदिदं गुरुरब्रवीत्॥ ३५॥
मरुत्त इति तेनायं भुवि ख्यातो भविष्यति।
भुवि चास्य महीपाला वायत्त्याशावशा यतः॥ ३६॥
एष सर्व्वक्षितीशानां वीरः स्थास्यति मूर्द्धनि।
चक्रवर्त्ती महावीर्य्यः सप्तद्वीपवतीं महीं॥ ३७॥
आक्रम्य पृथिवीपालानयं भोक्ष्यत्यवारितः।
प्रधानः पृथिवीशानां भविष्यत्येष यज्वनां॥
आधिक्यं शौर्य्यवीर्य्येण भविष्यत्यस्य राजसु॥ ३८॥

मार्कण्डेय उवाच ।

इत्याकर्ण्य वचः सर्वे केनाप्युक्तं दिवौकसाम् ।
तुतुषुर्विप्रगन्धर्वास्तथास्य माता तथा पिता ॥ ३८ ॥

इति श्रीमार्कण्डेयपुराणेऽवीक्षितचरिते । १२८ ।

## ऊनत्रिंशत्यधिकशततमोऽध्यायः ।

मार्कण्डेय उवाच ।

ततः स राजपुत्रस्तमादाय दयितं सुतं ।
पत्न्या चानुगतो विप्रगन्धर्वैराययौ पुरं ॥ १ ॥
स पितुर्भवनं प्राप्य ववन्दे पितुरादरात् ।
चरणौ सा च तन्वङ्गी ह्रीमती नृपतेः सुता ॥ २ ॥
तथाह राजपुत्रोऽसौ गृहीत्वा बालकं सुतं ।
धर्मासनगतं भूपं राज्ञां मध्ये करन्धमं ॥ ३ ॥
मुखं पौत्रस्य पश्यैतदुत्सङ्गस्थस्य यन्मया ।
किमिच्छके प्रतिज्ञातं तुभ्यं मातुः कृते पुरा ॥ ४ ॥
इत्युक्त्वा पितुरुत्सङ्गे तं कृत्वा तनयं ततः ।
यथावृत्तमशेषं स कथयामास तस्य तत् ॥ ५ ॥
स परिष्वज्य तं पौत्रमानन्दाश्रुविलोचनः ।
सभाग्योऽस्मीत्यथात्मानं प्रशशंस पुनः पुनः ॥ ६ ॥
ततः सोऽर्घ्यादिना सम्यक् गन्धर्वान् समुपागतान् ।
सम्मानयामास मुदा विस्मृतान्यप्रयोजनः ॥ ७ ॥

ततः पुरे महानासीदुत्सवः पौरवेश्मसु।
अस्माकं सन्ततिर्जाता नाथस्येति महामुने॥ ८॥
हृष्टपुष्टे पुरे तस्मिन् गीतवाद्यैर्मनोहरैः।
विलासिन्योऽतिचार्वङ्ग्यो नन्ततुर्द्विजसत्तम॥ ९॥
राजा च द्विजमुख्येभ्यो रत्नानि च वसूनि च।
गावो वस्त्राण्यलङ्कारानददद्धृष्टमानसः॥ १०॥
ततः स बालो ववृधे शुक्लपक्षे यथा शशी।
पितृणां प्रीतिजनको जनस्येष्टश्च सोऽभवत्॥ ११॥
आचार्य्याणां सकाशात् स प्राग्वेदान् जगृहे मुने।
ततः शस्त्राण्यशेषाणि धनुर्व्वेदं ततः परं॥ १२॥
कृतोद्योगो यदा सोऽभूत् खड्गकार्मुककर्मणि।
अन्येषु च तथा वीरः शस्त्रेषु विजितश्रमः॥ १३॥
ततोऽस्त्राणि स जग्राह भार्गवाद्भृगुसम्भवात्।
विनयावनतो विप्र गुरोः प्रीतिपरायणः॥ १४॥
गृहीतास्त्रः कृती वेदे धनुर्वेदस्य पारगः।
निष्णातः सर्व्वविद्यासु न बभूव ततः पुरा॥ १५॥
विशालोऽपि सुताचाराम्मुपलभ्याखिलामिमां।
हर्षनिर्भरचित्तोऽभूद्दीक्षितस्य च योग्यतां॥ १६॥
अथ राजा सुतसुतं दृष्ट्वा प्राप्तमनोरथः।
यज्ञाननेकान् विधाय दत्वा दानानि चार्थिनां॥ १७॥
कृताशेषक्रियो युद्धः सर्व्वधर्म्मज्ञो मही।
परिपाल्यारिविजयी ...॥ १८॥

स यियासुर्व्वनं पुत्रमवीक्षितमभाषत ।
पुत्र वृद्धोऽस्मि गच्छामि वनं राज्यं गृहाण मे ॥ १९ ॥
कृतकृत्योऽस्मि नान्यत् किञ्चित् त्वदभिषेचनात् ।
सुनिष्पन्नमतो राज्यं त्वं गृहाण मयार्पितं ॥ २० ॥
इत्युक्तः पितरं प्राह सोऽवीक्षिन्नृपनन्दनः ।
प्रश्रयावनतो भूत्वा यियासुस्तपसे वनं ॥ २१ ॥
नाहं तात करिष्यामि पृथिव्याः परिपालनं ।
नापैति ह्रीर्मे मनसो राज्येऽन्यं त्वं नियोजय ॥ २२ ॥
तातेन मोक्षितो बद्धो न मे वीर्य्यादिदं यतः ।
ततः कियत्पौरुषं मे पुरुषैः पाल्यते मही ॥ २३ ॥
योऽहं न पालनायालमात्मनोऽपि वसुन्धरा ।
स कथं पालयिष्यामि राज्यमन्यत्र विक्षिप ॥ २४ ॥
मन्त्री सधर्मः पुरुषो यश्चान्येनावरुध्यते ।
आत्माऽमोहाय भवतो बन्धनाद्येन मोक्षितः ॥
सोऽहं कथं भविष्यामि स्त्रीसधर्मा महीपतिः ॥ २५ ॥

पितोवाच ।

न भिन्न एव पुत्रस्य पिता पुत्रस्तथा पितुः ।
नान्येन मोचितो वीर यस्त्वं पित्रा विमोक्षितः ॥ २६ ॥

पुत्र उवाच ।

हृदयं नान्यथा नेतुं मया शक्यं नरेश्वर ।
हृदये ह्रीर्ममातीव यस्त्वहं मोक्षितस्त्वया ॥ २७ ॥
पित्रोपात्तां श्रियं भुंक्ते पित्रा कृच्छ्रात् समुद्धृतः ।

विख्यायते च यः पित्रा मानवः सोऽस्तु नो कुले ॥ २८ ॥
स्वयमर्ज्जितवित्तानां ख्यातिं स्वयमुपेयुषां ।
स्वयं निस्तीर्णकृच्छ्राणां या गतिः साऽस्तु मे गतिः ॥ २९ ॥

मार्कण्डेय उवाच ।

इत्यरुद्धं बहुशः पित्रा यदाप्युक्तोऽप्यसौ मुने ।
तदा तस्य सुतं राज्ये मरुत्तमकरोन्नृपः ॥ ३० ॥
स पित्रा समनुज्ञातं राज्यं प्राप्य पितामहात् ।
चकार सम्यक् सुहृदामानन्दमुपपादयन् ॥ ३१ ॥
राजा करन्धमश्चापि वीरामादाय तान्तथा ।
वनं जगाम तपसे यतवाक्कायमानसः ॥ ३२ ॥
तत्र वर्षसहस्रं स तपस्तप्त्वा सुदुश्चरं ।
विहाय देहं नृपतिः प्राप्तवान् स लोकतां ॥ ३३ ॥
सास्य पत्नी तदा वीरा वर्षाणामपरं शतं ।
तपश्चचार विप्रर्षे जटिला मलपङ्किनी ॥ ३४ ॥
सालोक्यमिच्छती भर्त्तुः स्वर्गतस्य महात्मनः ।
फलमूलकृताहारा भार्गवाश्रमसंश्रया ॥
द्विजातिपत्नीमध्यस्था द्विजशुश्रूषणाकुला ॥ ३५ ॥

इति श्रीमार्कण्डेयपुराणे मरुत्तचरिते । १२९ ।

## त्रिंशदधिकशततमोऽध्यायः।

क्रौष्टुकिरुवाच।

भगवन् विस्तरात् सर्व्वं ममैतत्कथितं त्वया।
करन्धमस्य चरितमवीक्षिच्चरितञ्च यत्॥ १॥
अवीक्षितस्य नृपतेस्तनयस्य महात्मनः।
श्रोतुमिच्छामि चरितं श्रूयते सोऽतिचेष्टितः॥ २॥
चक्रवर्त्ती महाभागः शूरः कान्तो महामतिः।
धर्मविद्धर्मकृच्चैव सम्यक् पालयिता भुवः॥ ३॥

मार्कण्डेय उवाच।

स पित्रा समनुज्ञातं राज्यं प्राप्य पितामहात्।
धर्मतः पालयामास पिता पुत्रानिवौरसान्॥ ४॥
इयाज सुबहून् यज्ञान् यथावत्प्राप्तदक्षिणान्।
ऋत्विक्पुरोहितादेशपरस्थचित्तो महीपतिः॥ ५॥
तस्याप्रतिहतं चक्रमासीत् द्वीपेषु सप्तसु।
गतिश्चाप्यनविच्छिन्ना खपातालजलादिषु॥ ६॥
ततः प्राप्य धनं विप्र यथावत्स्वक्रियापरः।
अयजत् स महायज्ञैर्देवानिन्द्रपुरोगमान्॥ ७॥
इतरे च यथा वर्णाः स्वे स्वे कर्मण्यतन्द्रिताः।
तदुपात्तधनाश्चक्रुरिष्टापूर्त्तादिकाः क्रियाः॥ ८॥
पाल्यमाना मही तेन मरुत्तेन महात्मना।
पस्पर्द्ध त्रिदशावासवासिभिर्द्विजसत्तम॥ ९॥

तेनातिप्रार्थिताः सर्वे [illegible] ।
यज्विना देवराजोऽपि शतयज्ञाभिसन्धिभिः ॥ १० ॥
ऋत्विक् तस्य तु संवर्तो बभूवाङ्गिरसः सुतः ।
भ्राता बृहस्पतेर्विप्र महात्मा तपसां निधिः ॥ ११ ॥
सौवर्णो मुञ्जवान् नाम पर्वतः सुरसेवितः ।
पातितं तेन तच्छृङ्गं हृतं तस्य महीपतेः ॥ १२ ॥
तेन यज्ञाखिलं यज्ञे भूमिभागादिकं द्विज ।
प्रासादाश्च कृताः शुभ्रास्तपसा सर्वकाञ्चनाः ॥ १३ ॥
गाथाश्चाप्यत्र गायन्ति मरुत्तचरिताश्रयाः ।
सातत्येनर्षयः सर्वे कुर्वन्तोऽध्ययनं यथा ॥ १४ ॥
मरुत्तेन समो नाभूद्यजमानो महीतले ।
सदः समस्तं यद्यज्ञे प्रासादाश्चैव काञ्चनाः ॥ १५ ॥
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
विप्राणां परिवेष्टारः शक्राद्यास्त्रिदशोत्तमाः ॥ १६ ॥
यथा यज्ञे मरुत्तस्य तथा कस्य महीपतेः ।
सुवर्णमखिलं त्यक्तं रत्नपूर्णगृहे द्विजैः ॥ १७ ॥
प्रासादादि समस्तञ्च सौवर्णान्नञ्च यत्कृतौ ।
चयो वर्णा ह्यलभन्त तस्मात् केचित्तथा ददुः ॥ १८ ॥
तस्यैवं कुर्वतो राज्यं सम्यक् पालयतः प्रजाः ।
तपस्वी कश्चिदभ्येत्य तमाह मुनिसत्तम ॥ १९ ॥
पितुर्माता तवाहेदं दृष्ट्वा तापसमण्डलं ।
विषाभिभूतमुरगैर्दष्टो[illegible]र्नरेश्वर ॥ २० ॥

पितामहस्ते स्वर्यातः सर्व्वान् सम्पाद्य मेदिनीं ।
तपश्चरणशक्ताऽहमिह यौर्व्वाश्रमे स्थिता ॥ २१ ॥
साऽहं पश्यामि वैकल्यं तव राज्ये प्रशासतः ।
पितामहस्य तेनाभूदपूर्व्वेषाञ्च ते नृप ॥ २२ ॥
नूनं प्रमत्तो भोगेषु सक्तो वाऽविजितेन्द्रियः ।
चारान्धता यतस्तेषां दुष्टादुष्टं न वेत्सि यत् ॥ २३ ॥
पातालादभ्युपेतैस्तु भुजगैर्दर्पशालिभिः ।
दष्टा मुनिसुताः सप्त दूषिताश्च जलाशयाः ॥ २४ ॥
स्वेदमूत्रपुरीषेण दूषितञ्च हुतं हविः ।
अपराधं समुद्दिश्य दत्तो नागबलिश्चिरात् ॥ २५ ॥
एते समर्था मुनयो भस्मीकर्त्तुं भुजङ्गमान् ।
किन्त्वेषान्नाधिकारोऽत्र त्वमेवात्राधिकारवान् ॥ २६ ॥
तावत् सुखं भूपतिजैर्भोगजं प्राप्यते नृप ।
अभिषेकजलं यावन्न मूर्द्धि विनिपात्यते ॥ २७ ॥
कानि मित्राणि कः शत्रुर्मम शत्रोर्बलं कियत् ।
कोऽहं के मन्त्रिणः पक्षे के वा भूपतयो मम ॥ २८ ॥
विरक्तो वापरैर्भिन्नः परेषामपि कीदृशः ।
कः सम्यगत्र नगरे विषये वा जनो मम ॥ २९ ॥
धर्मकर्माश्रयी मूढः कः सम्यगपि वर्त्तते ।
को दण्ड्यः परिपाल्यः कः के वोपेक्ष्या नरा मया ॥ ३० ॥
सङ्गभेदतया दण्ड्यदेशकालमवेक्षता ।
चारांश्च वारयेदन्यैरज्ञातान् भूपतिश्चरैः ॥ ३१ ॥

सचिवादिषु सर्व्वेषु चरान्दद्यान्महीपतिः ।
इत्यादौ भूपतिर्नित्यं कर्म्मण्यासक्तमानसः ॥ ३२ ॥
नयेद्दिनं तथा रात्रिं न तु भोगपरायणः ।
राज्ञां शरीरग्रहणं न भोगाय महीपते ॥ ३३ ॥
क्लेशाय महते पृथ्वीस्वधर्म्मपरिपालने ।
सम्यक् पालयतः पृथ्वीं स्वधर्म्मञ्च महीपतेः ॥ ३४ ॥
इह क्लेशो महान् स्वर्गे परमं सुखमक्षयं ।
तदेतदवबुध्य त्वं हित्वा भोगान्नरेश्वर ॥ ३५ ॥
पालनाय क्षितेः क्लेशमङ्गीकर्त्तुमिहार्हसि ।
इति वृत्तमृषीणां यद्व्यसनं त्वयि शासति ॥ ३६ ॥
भुजङ्गहेतुकं भूप चारान्धो नापि वेत्सि तत् ।
बहुनाच किमुक्तेन दुष्टे दण्डो निपात्यतां ॥ ३७ ॥
शिष्टान् पालय राजंस्त्वं धर्मषड्भागमाप्स्यसि ।
अरक्षन् पापमखिलं दुष्टैरविनयात् कृतं ॥ ३८ ॥
समवाप्स्यस्यसन्दिग्धं यदिच्छसि कुरुष्व तत् ।
एतन्मयोक्तं सकलं यत्त्वाह पितामही ॥
कुरुष्वैवं स्थिते यत्ते रोचते वसुधाधिप ॥ ३९ ॥

इति श्रीमार्कण्डेयपुराणे मरुत्तचरिते ॥ १३० ॥

एकत्रिंशदधिकशततमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

इति तापसवाक्यं स श्रुत्वा लज्जापरो नृपः ।
धिङ्मां चारान्धमित्युक्त्वा निश्वस्य जगृहे धनुः ॥ १ ॥
ततः स त्वरितं गत्वा तमौर्व्वस्याश्रमं प्रति ।
ववन्दे शिरसा वीरां मातरं पितुरात्मनः ॥ २ ॥
तापसांश्च यथा न्यायं तैश्चाशीभिरभिष्टुतः ।
दृष्ट्वा च तापसान् सप्त नागैर्दष्टान् सुतान् भुवि ॥ ३ ॥
निनिन्दात्मानमसकृत् पुरस्तेषां महीपतिः ।
उवाच चैतदद्याहं मद्वीर्य्यमवमन्यतां ॥ ४ ॥
यत्करोमि भुजङ्गानां दुष्टानां ब्राह्मणद्विषां ।
तत्पश्यतु जगत्सर्व्वं सदेवासुरमानुषं ॥ ५ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा जगृहे कोपादस्त्रं सम्वर्त्तकं नृपः ।
नाशायाशेषनागानां पातालोर्व्वीविचारिणां ॥ ६ ॥
ततो जज्वाल सहसा नागलोकः समन्ततः ।
महांस्तु तेजसा विप्र दह्यमानो निवारितः ॥ ७ ॥
हा हा तातेति हा मातर्हा वत्सेति सम्भ्रमे ।
तस्मिन्नस्त्रकृते वाचः पन्नगानामथाभवन् ॥ ८ ॥
केचित् ज्वलद्भिः पुच्छाग्रैः फणैरन्यभुजङ्गमाः ।
गृहीतपुत्रदाराश्च त्यक्ताभरणवाससः ॥ ९ ॥

पातालमुत्सृज्य ययुः शरणं भामिनीं तदा ।
मत्तमातरं पूर्व्वं यया दत्तं तदाऽभयं ॥ १० ॥
तामुपेत्योरगाः सर्व्वे सप्रणामं भयातुराः ।
सगद्गदमिदं प्रोचुः स्मर्य्यतां नः पुरोदितं ॥ ११ ॥
प्रणम्याभ्यर्च्चितं पूर्व्वं यदस्माभी रसातले ।
तस्य कालोऽयमायातस्त्वाहि वीरप्रजायिनि ॥ १२ ॥
पुत्रो निवार्य्यतां राज्ञि प्राणैः सायोज्यमस्तु नः ।
दह्यते सकलो लोको नागानामस्त्रवह्निना ॥ १३ ॥
एवं संदह्यमानानामस्माकं तनयेन ते ।
त्वामृते शरणं नान्यत् कृपां कुरु यशस्विनि ॥ १४ ॥

मार्कण्डेय उवाच ॥

इति श्रुत्वा वचस्तेषां संस्मृत्यादौ च भाषितं ।
भर्त्तारमाह सा साध्वी ससम्भ्रममिदं वचः ॥ १५ ॥
पूर्व्वमेव तवाख्यातं पाताले यद्भुजङ्गमैः ।
प्रोक्तमभ्यर्थनापूर्व्वं ममासीत्तनयं प्रति ॥ १६ ॥
त इमेऽभ्यागता भीता दह्यन्ते तस्य तेजसा ।
मामेते शरणं पूर्व्वं दत्तमेभ्यो मयाऽभयं ॥ १७ ॥
ये मां शरणमापन्नास्ते त्वां शरणमागताः ।
अपृथग्धर्मचरणा याताहं शरणं तव ॥ १८ ॥
तन्निवारय पुत्रं त्वं मत्तं वचनात्तव ।
मया चाभ्यर्थितोऽवश्यं शममभ्युपयास्यति ॥ १९ ॥

राजोवाच ।

महापराधे नियतं भवतः क्रोधमागतः ।
दुर्निर्व्वर्त्त्यमहं मन्ये तव क्रोधं सुतस्य ते ॥ २० ॥

नागा ऊचुः ॥

शरणागतास्तव वयं प्रसादः क्रियतां नृप ।
क्षतस्यार्त्तपरित्राणे निमित्तं शस्त्रधारणं ॥ २१ ॥

मार्कण्डेय उवाच ॥

नागानां तद्वचः श्रुत्वा भूतानां शरणैषिणां ।
तया चाभ्यर्थितः पत्न्या प्राहावीक्षिर्महायशाः ॥ २२ ॥
गत्वा ब्रवीमि तं भद्रे तनयं त्वरया तव ।
परित्राणाय नागानां न त्याज्याः शरणागताः ॥ २३ ॥
नोपसंहरते शस्त्रं यदि मद्वचनान्नृपः ।
तदस्त्रैर्व्वारयिष्यामि तस्यास्त्रं तनयस्य ते ॥ २४ ॥

मार्कण्डेय उवाच ।

ततो गृहीत्वा स धनुरवीक्षिः क्षत्रियोत्तमः ।
भार्य्यया सहितः प्रायात्त्वरावान् भार्गवाश्रमं ॥ २५ ॥

इति श्रीमार्कण्डेयपुराणे मरुत्तचरिते ॥ १३१ ॥

## द्वात्रिंशदधिकशततमोऽध्यायः ।

मार्कण्डेय उवाच ॥

स तु तस्याः सुतं दृष्ट्वा गृहीतवरकार्मुकं ।
धनुः शस्त्रञ्च तस्योग्रं ज्वालाव्याप्तदिगन्तरं ॥ १ ॥
उद्गिरन्तं महावह्निं दीपिताखिलभूतलं ।
पातालान्तर्गतं प्राप्तमसह्यं घोरभीषणं ॥ २ ॥
स तं दृष्ट्वा महीपालं भ्रुकुटीकुटिलाननं ।
माक्रुधस्त्वं महत्तास्त्रमुपसंह्रियतामिति ॥ ३ ॥
प्राहासकृत् त्वरालुप्तवर्णक्रममुदारधीः ।
स निशम्य गुरोर्व्वाक्यं दृष्ट्वा तच्च पुनः पुनः ॥ ४ ॥
गृहीतकार्मुकः पित्रोः प्रणिपत्य सगौरवं ।
प्रत्युवाचापराद्धा मे सुभृशं पन्नगाः पितः ॥ ५ ॥
शासतीमां मयि महीं परिभूय बलं मम ।
सप्ताश्रममुपागम्य दष्टा मुनिकुमारकाः ॥ ६ ॥
ऋषीणामाश्रमस्थानाममीषामवनीपते ।
मयि शासति दुष्टैस्तैर्दूषितानि हवींषि च ॥ ७ ॥
जलाशयास्तथाप्येभिः सर्व्व एव हि दूषिताः ।
तदेतत्कारणं किञ्चिन्न वक्तव्यं त्वया पितः ॥
न निवारयितव्योऽहं दुष्टान् प्रति पन्नगान् ॥ ८ ॥

अवीक्षिरुवाच ॥

यद्येभिर्निहता विप्रा यास्यन्ति नरकं मृताः ।
ममैतत्क्रियतां वाक्यं विरमास्त्रप्रयोगतः ॥ ९ ॥

मरुत्त उवाच ॥

नाहमेषां क्षमिष्यामि दुष्टानामपराधिनां ।
अहमेव गमिष्यामि नरकं यदि पापिनां ॥
न निग्रहे यतास्येषां मां निवारय मा पितः ॥ १० ॥

अवीक्षिरुवाच ॥

मामेते शरणं प्राप्ताः पन्नगा मम गौरवात् ।
उपसंह्रियतामस्त्रमलं कोपेन ते नृप ॥ ११ ॥

मरुत्त उवाच ।

नाहमेषां क्षमिष्यामि दुष्टानामपराधिनां ।
स्वधर्ममुल्लङ्घ्य कथं करिष्यामि वचस्तव ॥ १२ ॥
दण्ड्ये निपातयन् दण्डं भूपः शिष्टांश्च पालयन् ।
पुण्यलोकानवाप्नोति नरकांश्चाप्युपेक्षकः ॥ १३ ॥

मार्कण्डेय उवाच ॥

एवं स बहुशः पित्रा वार्य्यमाणो यदा सुतः ।
नोपसंहरते सोऽस्त्रं ततोऽसौ पुनरब्रवीत् ॥ १४ ॥
हिंससे पन्नगान् भीतान् मत्तैतान् शरणं गतान् ।
वार्य्यमाणोऽपि तस्मात्ते करिष्यामि प्रतिक्रियां ॥ १५ ॥
मयाप्यस्त्राण्यवाप्तानि न त्वमेकोऽस्त्रविद्भुवि ।
ममाग्रतः सुदुर्वृत्त पौरुषञ्च कियत्तव ॥ १६ ॥

ततः कार्मुकमारोप्य कोपताम्रविलोचनः ।
अवीक्षिरस्त्रं जग्राह कालस्य मुनिपुङ्गव: ॥ १७ ॥
ततो ज्वालापरीवारमरिसंघप्रमुक्तवं ।
कालास्त्रन्तु महावीर्य्यं योजयामास कार्मुके ॥ १८ ॥
ततश्चुक्षोभ जगती संवर्त्तास्त्रप्रतापिता ।
साब्धिशैलाखिला विप्र कालस्यास्त्रे समुद्यते ॥ १९ ॥

मार्कण्डेय उवाच ॥

कालास्त्रमुद्यतं पित्रा मरुत्तः सोऽपि वीक्ष्य तत् ।
प्राहोच्चैरस्त्रमेतन्मे दुष्टशास्तिसमुद्यतं ॥ २० ॥
न त्वद्वधार्थं कालास्त्रं मयि मुञ्चति किं भवान् ।
सद्धर्मचारिणि सुते सदैवाज्ञाकरे तव ॥ २१ ॥
मया कार्य्यं महाभाग प्रजानां परिपालनं ।
त्वयैवं क्रियते कस्मान्मद्वधायास्त्रमुद्यतं ॥ २२ ॥

अवीक्षिरुवाच ॥

शरणागतसंत्राणं कर्तुं व्यवसिता वयं ।
तस्य व्याघातकर्त्ता त्वं न मे जीवन् विमोक्ष्यसे ॥ २३ ॥
मां वा हत्वास्त्रवीर्य्येण जहि दुष्टानिहोरगान् ।
त्वां वा हत्वाऽहमस्त्रेण रक्षिष्यामि महोरगान् ॥ २४ ॥
धिक् तस्य जीवितं पुंसः शरणार्थिनमागतं ।
यो नार्त्तमनुगृह्णाति वैरिपक्षमपि ध्रुवं ॥ २५ ॥
क्षत्रियोऽहमिमे भीताः शरणं मामुपागताः ।
अपकर्त्ता त्वमेवैषां कथं वध्यो न मे भवान् ॥ २६ ॥

मरुत्त उवाच ।

मित्रं वा बान्धवो वाऽपि पिता वा यदि वा गुरुः ।
प्रजापालनविघ्नाय यो हन्तव्यः स भूभृता ॥ २७ ॥
सोऽहन्ते प्रहरिष्यामि न क्रोद्धव्यं त्वया पितः ।
स्वधर्मः परिपाल्यो मे न मे क्रोधस्तवोपरि ॥ २८ ॥

मार्कण्डेय उवाच ।

ततस्तौ निश्चितौ दृष्ट्वा परस्परवधं प्रति ।
समुत्पत्यान्तरे तस्थुर्मुनयो भार्गवादयः ॥ २९ ॥
ऊचुश्चैनन्न मोक्तव्यं त्वयास्त्रं पितरं प्रति ।
त्वया च नायं हन्तव्यः पुत्रः प्रख्यातचेष्टितः ॥ ३० ॥

मरुत्त उवाच ।

मया दुष्टा निहन्तव्याः सन्तो रक्ष्या महीक्षिता ।
इमे च दुष्टा भुजगाः कोऽपराधोऽत्र मे द्विजाः ॥ ३१ ॥

अवीक्षिदुवाच ।

शरणागतसन्त्राणं मया कार्य्यमयञ्च मे ।
अपराध्यः सुतो विप्रा यो हन्ति शरणागतान् ॥ ३२ ॥

ऋषय ऊचुः ।

इमे वदन्ति भुजगास्त्रासलोलविलोचनाः ।
संजीवयामस्तान् विप्रान् ये दष्टा दुष्टपन्नगैः ॥ ३३ ॥
तदलं विग्रहेणोभौ राजवर्य्यौ प्रसीदतां ।
उभावपि विनिर्मूढप्रतिज्ञौ धर्मकोविदौ ॥ ३४ ॥

मार्कण्डेय उवाच ।

सा तु वीरा समभ्येत्य पुत्रमेतदभाषत ।
मद्वाक्यादेष तेऽमुष्यो हन्तुं नागान् कृतोद्यमः ॥ ३५ ॥
तन्निष्पन्नं यदा विप्रास्ते जीवन्ति तथा मृताः ।
संजीवन्तश्च मुच्यन्ते यद् युष्मच्छरणं गताः ॥ ३६ ॥

भाविन्युवाच ।

अहमभ्यर्थिता पूर्व्वमेभिः पातालसंश्रयैः ।
तन्निमित्तमयं भर्त्ता मयाच विनियोजितः ॥ ३७ ॥
तदेतदार्य्यनिर्वृत्तमुभयोरपि शोभनं ।
मम भर्तुश्च पुत्रस्य त्वत्पौत्रस्यात्मजस्य च ॥ ३८ ॥

मार्कण्डेय उवाच ॥

ततः संजीवयामासुस्तान् विप्रांस्ते भुजङ्गमाः ।
दिव्यैरोषधिजातैश्च विषसंहरणेन च ॥ ३९ ॥
पित्रोर्ननाम चरणौ स ततो जगतीपतिः ।
मरुत्तश्च स तं प्रीत्या परिष्वज्येदमब्रवीत् ॥ ४० ॥
मानहा भव शत्रूणां चिरं पालय मेदिनीं ।
पुत्रपौत्रैश्च मोदस्व मा च ते सन्तु विद्विषः ॥ ४१ ॥
ततो द्विजैरनुज्ञातो वीरया च नरेश्वरौ ।
समारूढौ रथं सा च भाविनी स्वपुरङ्गता ॥ ४२ ॥
वीराऽपि कृत्वा सुमहत्तपो धर्मभृतां वरा ।
भर्तुः सा लोकतां प्राप्ता महाभागा पतिव्रता ॥ ४३ ॥

मरुत्तोऽपि चकारोर्व्वीं धर्मतः परिपालनं ।
विनिर्जितारिषड्वर्गो भोगांश्च बुभुजे नृपः ॥ ४४ ॥
तस्य पत्नी महाभागा विदर्भतनया तथा।
प्रभावती सुवीरस्य सौवीरी चाभवत् सुता ॥ ४५ ॥
सुकेशी केतुवीर्य्यस्य मागधस्यात्मजा भवत् ।
सुता च सिन्धुवीर्य्यस्य मद्रराजस्य केकयी ॥ ४६ ॥
केकयस्य च सैरिन्ध्री सिन्धुभर्त्तुर्व्वपुष्मती ।
चेदिराजसुता चाभूद्भार्य्या तस्य सुशोभना ॥ ४७ ॥
तासां पुत्रास्तस्य चासन् भूभृतोऽष्टादश द्विज ।
तेषां प्रधानो ज्येष्ठश्च नरिष्यन्तः सुतोऽभवत् ॥ ४८ ॥
एवंवीर्य्यो मरुत्तोऽभून्महाराजो महाबलः ।
तस्याप्रतिहतं चक्रमासीद्द्वीपेषु सप्तसु ॥ ४९ ॥
यस्य तुल्योऽपरो राजा न भूतो न भविष्यति ।
सत्त्वविक्रमयुक्तस्य राजर्षेरमितौजसः ॥ ५० ॥
तस्यैतच्चरितं श्रुत्वा मरुत्तस्य महात्मनः ।
जन्म चाग्र्यं द्विजश्रेष्ठ मुच्यते सर्व्वकिल्विषैः ॥ ५१ ॥

इति श्रीमार्कण्डेयपुराणे मरुत्तचरितं समाप्तं । १२२ ।

अथ त्रिंशदधिक शततमोऽध्यायः ॥

क्रौष्टुकिरुवाच ॥

मरुत्तचरितं कृत्स्नं भगवन् कथितं त्वया ।
तत्सन्ततिमशेषेण श्रोतुमिच्छा प्रवर्त्तते ॥ १ ॥
तत्सन्ततौ क्षितीशा ये राज्यार्हा वीर्य्यशालिनः ।
तानहं श्रोतुमिच्छामि त्वया ख्यातान्महामुने ॥ २ ॥

मार्कण्डेय उवाच ॥

नरिष्यन्त इति ख्यातो मरुत्तस्याभवत् सुतः ।
अष्टादशानां पुत्राणां स ज्येष्ठः श्रेष्ठ एव च ॥ ३ ॥
वर्षाणाञ्च सहस्राणि सप्ततिं दश पञ्च च ।
बुभुजे पृथिवीं कृत्स्नां मरुत्तः क्षत्रियर्षभः ॥ ४ ॥
कृत्वा राज्यं स्वधर्मेण इष्ट्वा यज्ञाननुत्तमान् ।
नरिष्यन्तं सुतं ज्येष्ठमभिषिच्य ययौ वनं ॥ ५ ॥
एकाग्रचित्तः स नृपस्तेपे तत्र तपो महत् ।
आरुरोह दिवं विप्र यशसाऽऽवृत्य रोदसी ॥ ६ ॥
नरिष्यन्तः सुतः सोऽस्य चिन्तयामास बुद्धिमान् ।
पितुर्वृत्तं समालोक्य तथान्येषाञ्च भूभृतां ॥ ७ ॥
अथ वंशे महात्मानो राजानो मम पूर्व्वजाः ।
यज्विनो धर्मतः पृथ्वीं पालयामासुरूर्ज्जिताः ॥ ८ ॥

दातारश्चापि वित्तानां संग्रामेष्वनिवर्त्तिनः।
तेषां कश्चरितं शक्तस्त्वनुयातुं महात्मनां॥ ९ ॥
किन्तु तेन कृतं कर्म धर्म्ममाश्रवनादिभिः।
तदहं कर्त्तुमिच्छामि तच्च नास्ति करोमि किं॥ १० ॥
धर्मतः पाल्यते पृथ्वी को गुणोऽत्र महीपतेः।
असम्यक्पालनात् पापी नरेन्द्रो नरकं व्रजेत्॥ ११ ॥
सति वित्ते महायज्ञाः कर्त्तव्या एव भूभृता।
दातव्यञ्चाथ किञ्चिच्च सीदतामीश्वरो गतिः॥ १२ ॥
आभिजात्यं तथा लज्जा कोपश्चारिजनाश्रयः।
कारयन्ति स्वधर्माश्च संग्रामादपलायनं॥ १३ ॥
एतत्सर्व्वं यथा सम्यक्तत्पूर्व्वैः पुरुषैः कृतं।
पित्रा च मे महत्तेन तथा तत्केन शक्यते॥ १४ ॥
तदहं किं करिष्यामि यत्न तैः पूर्व्वजैः कृतं।
ये यज्विनो वरा दान्ताः संग्रामाश्चानिवर्त्तिनः॥ १५ ॥
महत्संग्रामसंसर्गा विसंवादितपौरुषाः।
कर्मणाहं यतिष्यामि कस्यैत्यानभिशङ्कितं॥ १६ ॥
अथवा तैः स्वयं यज्ञाः कृताः पूर्व्वजनेश्वरैः।
अविश्रमद्भिर्नान्यैस्तु कारितास्तत्करोम्यहं॥ १७ ॥

मार्कण्डेय उवाच।

इति सञ्चिन्त्य यज्ञं स चकारैकं नरेश्वरः।
यादृशं न चकारान्यो वित्तोत्सर्गोपशोभितं॥ १८ ॥
द्विजानां जीवनायालं दत्वा तु सुमहाधनं।

ततः शतगुणो तेषां यज्ञेऽभमदर्दनृपः ॥ १९ ॥
गावो वस्त्राण्यलङ्कारं धान्यागारादिकं तथा ।
तथा प्रत्येकममवत्तेषां पृथ्वीनिवासिनां ॥ २० ॥
ततस्तेन यदा यज्ञः प्रारब्धो भूभुजा पुनः ।
प्रारब्धे स मखे यष्टुं ततो नालभत द्विजान् ॥ २१ ॥
यान् यान् वृणोति स नृपो विप्रानार्त्विज्यकर्मणि ।
ते ते तमूचुर्यज्ञाय वयमन्यत्र दीक्षिताः ॥ २२ ॥
अन्यं वरय यद्वित्तं त्वयास्माकं विवर्ज्जितं ।
तस्यान्तो नास्ति यज्ञेषु दत्तास्तु नृपते धनं ॥ २३ ॥

मार्कण्डेय उवाच ॥

न चाप ऋत्विजो विप्रांस्तदाशेषक्षितीश्वरः ।
बहिर्व्वेद्यां तदा दानं स दातुमुपचक्रमे ॥ २४ ॥
तथापि जगृहुर्नैव धनसम्पूर्णमन्दिराः ।
द्विजाय दातुं भूयोऽसौ निर्व्विणा इदमब्रवीत् ॥ २५ ॥
अहोऽतिशोभनं पृथ्व्यां यद्विप्रो नाधनः क्वचित् ।
अशोभनञ्च यत्कोषो विफलोऽयमयज्विनः ॥ २६ ॥
नार्त्विज्यं कुरुते कश्चिद्यजमानोऽखिलो जनः ।
द्विजानां न च नो दानं ददतां संप्रतीच्छते ॥ २७ ॥

मार्कण्डेय उवाच ॥

ततः कांश्चिद्द्विजान् भक्त्या प्रणिपत्य पुनः पुनः ।
स्वयज्ञे ऋत्विजश्चक्रे स यज्ञकर्मकामखं ॥ २८ ॥
अन्यकृतमिदञ्चासीद्यदा तस्य महीपतेः ।

स यज्ञोऽभूत्तदा पृथ्व्यां यजमानोऽखिलो जनः ॥ २९ ॥
द्विजन्मनामभून्नासीत् सदस्यश्च कश्चन ।
यजमाना द्विजाः केचित् केचित्तेषान्तु याजकाः ॥ ३० ॥
नरिष्यन्तो नरपतिरियाज स यदा तदा ।
तत्प्रदातुर्धनैर्यागं कुर्युः पृथ्व्यामशेषतः ॥ ३१ ॥
प्राच्यां कोट्यस्तु यज्ञानामासन्नष्टादशाधिकाः ।
प्रतीच्यां सप्त वै कोट्यो दक्षिणायां चतुर्दश ॥ ३२ ॥
उत्तरस्याञ्च पञ्चाशदेककालं तदाऽभवन् ।
मुने ब्राह्मणयज्ञानां नरिष्यन्तो यदाऽयजत् ॥ ३३ ॥
एवं स राजा धर्मात्मा नरिष्यन्तोऽभवत् पुरा ।
मरुत्ततनयो विप्र विख्यातबलपौरुषः ॥ ३४ ॥

इति श्रीमार्कण्डेयपुराणे नरिष्यन्तचरितं ॥ १३१ ॥

---

## चतुस्त्रिंशदधिकशततमोऽध्यायः ।

मार्कण्डेय उवाच ।

नरिष्यन्तस्य तनयो दुष्टारिदमनो दमः ।
शक्रस्येव बलं तस्य दया शीलं मुनेरिव ॥ १ ॥
बाभ्रव्यामिन्द्रसेनायां स जज्ञे तस्य भूभृतः ।
नव वर्षाणि जठरे स्थित्वा मातुर्महायशाः ॥ २ ॥

यद्वाह्वयामास दमं मातरं गर्भसंस्थितः ।
दमशीलश्च भविता तस्मादयं महायशाः ॥ ३ ॥
ततस्त्रिकालविज्ञानः स हि तस्य पुरोहितः ।
दम इत्यकरोन्नाम नरिष्यन्तसुतस्य तु ॥ ४ ॥
स दमो राजपुत्रस्तु धनुर्वेदमशेषतः ।
जगृहे नरराजस्य सकाशाद्वृषपर्व्वणः ॥ ५ ॥
दुन्दुभेर्दैत्यवर्य्यस्य तपोवननिवासिनः ।
सकाशाज्जगृहे कृत्स्नमस्त्रग्रामञ्च तत्त्वतः ॥ ६ ॥
शक्तेः सकाशाद्वेदांश्च वेदाङ्गान्यखिलानि च ।
तथार्ष्टिषेणाद्राजर्षेर्जगृहे योगमात्मवान् ॥ ७ ॥
तं स्वरूपमहात्मानं गृहीतास्त्रं महाबलं ।
स्वयम्वरे कृता पित्रा जगृहे सुमना पतिं ॥ ८ ॥
सुता दशार्णाधिपतेर्व्वलिनश्चारुकर्मणः ।
पश्यतां सर्व्वभूतानां ये तदर्थमुपागताः ॥ ९ ॥
तस्याञ्च सानुरागोऽभून्मद्रराजस्य वै सुतः ।
सुमनायां महानादो महाबलपराक्रमः ॥ १० ॥
तथा विदर्भाधिपतेः पुत्रः संक्रन्दनस्य च ।
वपुष्मान् राजपुत्रश्च महाधनुरुदारधीः ॥ ११ ॥
तेऽथ यातास्ततं दृष्ट्वा दुष्टारिदमनं दमं ।
मन्त्रयामासुरन्योऽन्यं तमानङ्गविमोहिताः ॥ १२ ॥
एतामस्य बलात् कन्यां गृहीत्वा रूपशालिनीं ।
एवं प्रयामस्तस्येयमस्माकं यं ग्रहीष्यति ॥ १३ ॥

भर्तृबुद्ध्या वरारोहा स्वयम्वरविधानतः ।
तस्येच्छया नो भविनी भार्य्या धर्मोपपादिता ॥ १४ ॥
अथ नेच्छति सा कञ्चिदन्यानां मदिरेक्षणा ।
ततस्तस्य भविनी सा यो दमं घातयिष्यति ॥ १५ ॥

मार्कण्डेय उवाच ।

इति ते निश्चयं कृत्वा सर्व्वे पार्थिवनन्दनाः ।
जगृहुस्तां सुचार्व्वङ्गीं दमपार्श्वानुवर्त्तिनीं ॥ १६ ॥
ततः केचिन्नृपास्तेषां ये तत्पक्षा विचुक्रुशुः ।
चुक्रुशुश्चापरे भूपाः केचिन्मध्यस्थतां गताः ॥ १७ ॥
ततो दमस्तान् भूपालानवलोक्य समन्ततः ।
अनाकुलमना वाक्यमिदमाह महामुने ॥ १८ ॥

दम उवाच ।

भो भूपा धर्मकृत्येषु यद्वदन्ति स्वयम्बरं ।
अधर्मो वाथवा धर्मो यदेभिर्गृह्यते बलात् ॥ १९ ॥
यद्यधर्मो न मे कार्य्यमन्यभार्य्या भविष्यति ।
धर्मो वा तदलं प्राणैर्ये रक्ष्यन्तेऽरिसङ्कुले ॥ २० ॥
ततो दशार्णाधिपतिश्चारुधर्मा नराधिपः ।
निःशब्दं कारयित्वा तत् सदः प्रोच महामुने ॥ २१ ॥
दमेन यदिदं प्रोक्तं धर्माधर्माश्रितं नृपाः ।
तद्वदध्वं यथा धर्मो ममास्य च न लुप्यते ॥ २२ ॥

मार्कण्डेय उवाच ।

ततः केचिन्महीपालास्तमूचुर्व्वसुधाधिपं ।

परस्परानुरागेण गान्धर्व्वो विहितो विधिः ॥ २३ ॥
क्षत्रियाणां परमयं न विट्शूद्रद्विजन्मनां ।
दममाश्रित्य निष्पन्नः स चास्या दुहितुस्तव ॥ २४ ॥
इति धर्म्मीदमस्यैषा दुहिता तव पार्थिव ।
योऽन्यथा वर्त्तते मोहात् कामात्मा सम्प्रवर्त्तते ॥ २५ ॥
तथाऽपरे तदा प्रोचुर्महात्मानो हि भूभृतां ।
पक्षे ये भूभृतो विप्र दशार्णाधिपतेर्व्वचः ॥ २६ ॥
मोहात् किमाहुर्धर्म्मोऽयं गान्धर्व्वः क्षत्रजन्मनः ।
न त्वेष शास्ता नान्यो हि राक्षसः शस्त्रजीविनां ॥ २७ ॥
बलादिमां यो हरति हत्वा तु परिपन्थिनः ।
तस्यैवासौ राक्षसेन विवाहेनावनीश्वराः ॥ २८ ॥
प्रधानतर एषोऽत्र विवाहश्चितये मतः ।
क्षत्रियाणामतो धर्म्मो महानन्दादिभिः कृतः ॥ २९ ॥

मार्कण्डेय उवाच ॥

अथ प्रोचुः पुनर्भूपा यैः पूर्व्वमुदिता नृपाः ।
परस्परानुरागेण जातिधर्म्माश्रितं वचः ॥ ३० ॥
सत्यं शस्तो राक्षसोऽपि क्षत्रियाणां परो विधिः ।
किन्त्वसौ जनकस्यास्ये कुमार्य्यानुमतो वरः ॥ ३१ ॥
हत्वा तु पितृसम्बन्धं बलेन ह्रियते हि या ।
स राक्षसो विधिः प्रोक्तो नान्यभर्तृकरे स्थिता ॥ ३२ ॥
पश्यतां सर्व्वभूपानामनया यद्वृतो दमः ।
गान्धर्व्वस्येह निष्पन्नो विवाहो राक्षसोऽत्र कः ॥ ३३ ॥

विवाहितायाः कन्यायाः कन्यात्वं नैव विद्यते ।
कन्यायाश्च विवाहेन सम्बन्धः पूर्व्वमीरितः ॥ ३४ ॥
त इमे ये बलादेनां दमाद्दातुमुद्यताः ।
बलिनस्ते यदि ततः कुर्व्वन्तु न तु साधु तत् ॥ ३५ ॥

मार्कण्डेय उवाच ।

तत् श्रुत्वाऽसौ दमः कोपकषायीकृतलोचनः ।
आरोपयामास धनुर्व्वचनञ्चेदमब्रवीत् ॥ ३६ ॥
ममापि भार्य्या बलिभिः पश्यतो ह्रियते यदि ।
तत्कुलेन भुजाभ्यां वा को गुणः क्लीवजन्मनः ॥ ३७ ॥
धिङ्ममास्त्राणि धिक् शौर्य्यं धिक् शरान् धिक् शरासनं ।
धिग्व्यर्थं मे कुले जन्म महत्तस्य महात्मनः ॥ ३८ ॥
यदि भार्य्यामिमे मूढाः समादाय बलान्विताः ।
प्रयान्ति जीवतो धिक् तां मम व्यर्थधनुष्मतां ॥ ३९ ॥
इत्युक्त्वा तान्महीपालान् महानन्दमुखान् बली ।
अथाब्रवीत्तदा सर्व्वान् महारिदमनो दमः ॥ ४० ॥
एषातिशोभना बाला चार्व्वङ्गी मदिरेक्षणा ।
किन्तस्य जन्मना भार्य्या न यस्येयं कुलोद्भवा ॥ ४१ ॥
इति सञ्चिन्त्य भूपालास्तथा यतेत संयुगे ।
यथा निर्ज्जित्य मामेतां पत्नीं कुरुत मानिनः ॥ ४२ ॥
इत्याभाष्य ततस्तत्र शरवर्षममुञ्चत ।
छादयन् पृथिवीपालांस्तमसेव महीरुहान् ॥ ४३ ॥
तेऽपि वीरा महीपालाः शरवृष्टिमुदारान् ।

सुमपुत्तत्प्रयुक्तांश्च दमश्चिच्छेद लीलया ॥ ४४ ॥
तेऽपि तत्प्रहितान् बाणान् तेषाञ्चासौ शरोत्करान् ।
चिच्छेद पृथिवीशानां नरव्यन्तात्मजो मुने ॥ ४५ ॥
वर्त्तमाने तदा युद्धे दमस्य क्षितिपात्मजैः ।
प्रविवेश महानन्दः खड्गपाणिर्यतो दमः ॥ ४६ ॥
तमायान्तं दमो दृष्ट्वा खड्गपाणिं महामृधे ।
मुमोच शरवर्षाणि वर्षाणीव पुरन्दरः ॥ ४७ ॥
तदस्त्राणि ततस्तानि शरजालानि तत्क्षणात् ।
महानन्दः प्रचिच्छेद खड्गेनान्यानवञ्चयत् ॥ ४८ ॥
ततो रोषात् समारुह्य स्यन्दनस्य तदा रथं ।
महानन्दो महावीर्य्यो दमेन युयुधे सह ॥ ४९ ॥
बहुधा युध्यमानस्य महानन्दस्य लाघवात् ।
दमो मुमोच हृदये शरं कालानलप्रभं ॥ ५० ॥
तं लग्नमात्मनोत्कृष्य विभिन्नेन ततो हृदि ।
दमं प्रति विचिक्षेप महानन्दोऽसिमुज्ज्वलं ॥ ५१ ॥
पतन्तञ्चैनमुल्काभं शक्त्या चिच्छेद तं दमः ।
शिरो वेतसपत्रेण महानन्दस्य चाच्छिनत् ॥ ५२ ॥
तस्मिन् हते महानन्दे प्रायुर्व्वेण पराङ्मुखाः ।
बभूवुः पार्थिवास्तस्थौ वपुष्मान् कुण्डिनाधिपः ॥ ५३ ॥
दमेन युयुधे चासौ बलगर्व्वमदान्वितः ।
दाक्षिणात्यमहीपालतनयो रणगोचरः ॥ ५४ ॥
युध्यमानस्य तस्योग्रं करवालं स वै लघु ।

चिच्छेद सारथेश्चैव शिरः संख्ये तथा ध्वजं ॥ ५५ ॥
छिन्नखड्गो गदां सोऽथ जग्राह बहुकण्टकां ।
तामप्यस्य स चिच्छेद करस्थामेव सत्वरः ॥ ५६ ॥
यावदन्यत् समादत्ते स वपुष्मान् वरायुधं ।
तावत् क्षुरेण तं विद्धा दमो भूमावपातयत् ॥ ५७ ॥
स पातितस्ततो भूमौ भिन्नगात्रः सवेपथुः ।
विनिर्वृत्तमतिर्युद्धाद्बभूव क्षितिपात्मजः ॥ ५८ ॥
तमालोक्य तथाभूतमयुद्धमतिमात्मवान् ।
उत्सृज्यादाय सुमनां सुमनाः प्रययौ दमः ॥ ५९ ॥
ततो दशार्णाधिपतिः प्रीतिमानकरोत्तयोः ।
दमस्य सुमनायाश्च विवाहं विधिपूर्व्वकं ॥ ६० ॥
कृतदारो दमस्तत्र दशार्णाधिपतेः पुरे ।
स्थित्वाऽल्पकालं प्रययौ सभार्य्यो निजमन्दिरं ॥ ६१ ॥
दशार्णाधिपतेश्चासौ दत्त्वा नागांस्तुरङ्गमान् ।
रथगोश्वखरोष्ट्रांश्च दासीदासांस्तथा बहून् ॥ ६२ ॥
वस्त्रालङ्कारचापादि वरोपस्करमात्मनः ।
अन्यैस्तैश्च तथा भाण्डैः परिपूर्णं व्यसर्जयत् ॥ ६३ ॥

इति श्रीमार्कण्डेयपुराणे दमचरिते ॥ १३४ ॥

पञ्चविंशदधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच।

स तां लब्ध्वा तदा पत्नीं सुमनां सुमहामुने।
प्रणम्य स पितुः पादौ मातुश्च क्षितिपात्मजः ॥ १ ॥
सा च तौ श्वशुरौ सुभ्रूर्ननाम सुमना तदा।
ताभ्यां तौ च तदा विप्र आशीभिरभिनन्दितौ ॥ २ ॥
महोत्सवश्च संजज्ञे नरिष्यन्तस्य वै पुरे।
कृतदारे च संप्राप्ते दशार्णाधिपतेः पुरात् ॥ ३ ॥
सम्बन्धिनं दशार्णेशं जितांश्च पृथिवीश्वरान्।
श्रुत्वा पुत्रेण मुमुदे नरिष्यन्तो महीपतिः ॥ ४ ॥
सोऽपि रेमे सुमनया महाराजसुतो दमः।
वरोद्यानवनोद्देशप्रासादगिरिसानुषु ॥ ५ ॥
अथ कालेन महता रममाणा दमेन सा।
अवाप गर्भं सुमना दशार्णाधिपतेः सुता ॥ ६ ॥
सोऽपि राजा नरिष्यन्तो भुक्तभोगो महीपतिः।
वयःपरिणतिं प्राप्य दमं राज्येऽभिषिच्य च ॥ ७ ॥
वनं जगामेन्द्रसेना पत्नी चास्य तपस्विनी।
वाणप्रस्थविधानेन स तत्र समतिष्ठत ॥ ८ ॥
दाक्षिणात्यः सुदुर्वृत्तः संक्रन्दनसुतो वने।
वपुष्मान् स मृगान् हन्तुं ययावल्पपदानुगः ॥ ९ ॥

स तं दृष्ट्वा नरिष्यन्तं तापसं मलपङ्किनं।
इन्द्रसेनाञ्च तत्पत्नीं तपसातिसुदुर्बलां ॥ १० ॥
पप्रच्छ कस्त्वं भो विप्रः क्षत्रियो वा वनेचरः।
वानप्रस्थमनुप्राप्तो वैश्यो वा मम कथ्यतां ॥ ११ ॥
ततो मौनव्रती भूपो न हि तस्योत्तरं ददौ।
इन्द्रसेना च तत्सर्व्वमाचष्टास्मै यथातथं ॥ १२ ॥

मार्कण्डेय उवाच ॥

ज्ञात्वा तञ्च नरिष्यन्तं वपुष्मान् पितरं रिपोः।
प्राप्तोऽस्मीति वदन् कोपात् जटासु परिगृह्य च ॥ १३ ॥
हा हेति चेन्द्रसेनायां रुदन्त्यां वास्यग द्वदं।
चकर्ष कोपात् खड्गञ्च वाक्यञ्चेदमुवाच ह ॥ १४ ॥
निर्जितः समरे येन येन मे सुमना हता।
दमस्य तस्य पितरं हरिष्येऽवतु तन्दमः ॥ १५ ॥
येनाखिलमहीपालपुत्राः कन्यार्थमागताः।
अवधूता हनिष्येऽहं पितरं तस्य दुर्म्मतेः ॥ १६ ॥
योधनेषु स्वरूपेण दमो यस्य दुरात्मनः।
स दमो वारयत्वेष हन्मि तस्य रिपोर्गुरुं ॥ १७ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा स दुराचारो वपुष्मानवनीपतिः।
क्रन्दन्त्यामिन्द्रसेनायां शिरश्चिच्छेद तस्य च ॥ १८ ॥
ततो धिग्धिङ्मुनिजना अन्ये च वनवासिनः।
तमूचुः स च तं दृष्ट्वा जगाम स्वपुरं वनात् ॥ १९ ॥

गते तस्मिन् विनिष्क्रान्ते सेन्द्रसेना-वपुष्मति।
प्रेषयामास पुत्त्रस्य समीपं वृद्धतापसं ॥ २० ॥
गच्छेथा आशु मे पुत्त्रं इमं ब्रूहि वचो मम।
अभिज्ञो ह्यसि मद्वृत्तं ह्यस्तात्त्वं प्रोच्यतेऽद्य किं ॥ २१ ॥
तथापि वाच्यः पुत्त्रो मे यद्ब्रवीष्यति दुःखिता।
लज्जनामीदृशीं प्राप्तां विलोक्यतां महीपतेः ॥ २२ ॥
मद्भर्त्ताऽधिकृतो राजा चतुर्णां परिपालकः।
त्वमाश्रमाणां कि युक्तं तापसान् यन्निरीक्षसि ॥ २३ ॥
भर्त्ता मम नरिष्यन्तस्तापसस्तपसि स्थितः।
विलपन्त्यास्तथा नाथो यथा नास्ति तथा त्वयि ॥ २४ ॥
आकृष्य केशेषु बलादपराधं विना ततः।
हतो वपुष्मता ख्यातिमिति ते भूपतिर्गतः ॥ २५ ॥
एवं स्थिते तत् क्रियतां यथा धर्म्मो न लुप्यते।
तथा च नैव वक्तव्यमतोऽस्मत्तापसी ह्यहं ॥ २६ ॥
पिता वृद्धस्तपस्वी च नापराधेन दूषितः।
निहतो येन यत्तस्य कर्त्तव्यन्तद्विचिन्त्यतां ॥ २७ ॥
सन्ति ते मन्त्रिणो वीराः सर्व्वशास्त्रार्थवादिनः।
तैः सहालोच्य यत्कार्य्यमेवम्भूते कुरुष्व तत् ॥ २८ ॥
तास्माकमधिकारोऽद्य तापसानां नराधिप।
कुरुष्वैतदितीत्थं त्वमेवं भूपतिभाषितं ॥ २९ ॥
विदूरथस्य जनको यवनेन यथा हतः।
तथाद्यन्तव पुत्त्रस्य कुलस्तेनं विनाश्रितं ॥ ३० ॥

जम्भस्यासुरराजस्य पिता दृष्टो भुजङ्गमैः ।
तेनाप्यखिलपातालवासिनः पन्नगा हताः ॥ ३१ ॥
पराशरेण पितरि शक्तौ च रक्षसाऽऽहृते ।
श्रुत्वाऽग्नौ पातितं सर्वं रक्षसामभवत् कुलं ॥ ३२ ॥
अन्यस्यापि स्ववंशस्य लङ्घना क्रियते हि या ।
तां नालं क्षत्रियः सोढुं किं पुनः पितृमारणं ॥ ३३ ॥
नायं पिता ते निहतो नास्मिन् शस्त्रं निपातितं ।
त्वामद्य निहतं मन्ये त्वयि शस्त्रं निपातितं ॥ ३४ ॥
बिभेत्यस्य हि कः शस्त्रं न्यस्तं येन वनौकसां ।
तव भूपस्य विप्रस्य मारिते तु बिभेतु वा ॥ ३५ ॥
तवेयं लङ्घना युक्ता यदस्मिंस्तत्समाचर ।
वपुष्मति महाराज सभृत्यज्ञातिबान्धवे ॥ ३६ ॥

मार्कण्डेय उवाच ॥

इति संक्रान्तसन्देशमिन्द्रदासं विसृज्य तं ।
पतिदेहमुपाश्लिष्य विवेशाग्निं मनस्विनी ॥ ४० ॥

इति श्रीमार्कण्डेयपुराणे दमचरिते । १३५ ।

मार्कण्डेय उवाच ॥

तापसेन समाख्यातं दमस्तेन पितुर्वधं ।
क्रोधेनातीव जज्वाल हविषेवाग्निरुद्धृतः ॥ १ ॥
स तु क्रोधाग्निना धीरो दह्यमानो महामुने ।
करङ्करेण निष्पिष्य वाक्यमेतदुवाच ह ॥ २ ॥
अनाथ इव मे तातो मयि पुत्रे तु जीवति ।
घातितः सुन्दशंसेन परिभूय कुलं मम ॥ ३ ॥
न्यायवादो जने तस्याप्येष क्लैव्यात् समाम्यहं ।
दुर्वृत्तशान्तौ शिष्टानां पालनेऽधिकृता वयं ॥ ४ ॥
पिता तस्यापि निहतो दृष्ट्वा जीवन्ति शत्रवः ।
तत्किमेतेन बहुना हा तातेति च किं पुनः ॥ ५ ॥
विलापेनाद्य यत्कृत्यं तदेषोऽद्य करोम्यहं ।
यदाहं तस्य रक्तेन देहोत्थेन वपुष्मतः ।
न करोमि गुरोस्तृप्तिं तत्प्रवेक्ष्ये हुताशनं ॥ ६ ॥

न शोणितेनोदककर्म तस्य
तातस्य संख्ये विनिपातितस्य ।
मांसेन सम्यग्द्विजभोजनञ्च
न चेत् प्रवेक्ष्यामि हुताशनन्तत् ॥ ७ ॥

साहाय्यमस्यासुरदेवयक्ष-
गन्धर्वविद्याधरसिद्धसंघाः ।

कुर्वन्ति ये तानपि शाङ्खपर्णै-
भस्मीकरोम्येष वृषा समेतः ॥ ८ ॥
निःशूरमाधार्मिकमप्रशस्तं
तं दाक्षिणात्यं समरे निहत्य ।
भोक्ष्ये ततोऽहं पृथिवीञ्च कृत्स्नां
वह्निं प्रवेक्ष्याम्यनिहत्य तं वा ॥ ९ ॥
सदुर्मतिं तापसरूपमौनिनं
वनस्थितं शान्तवचोविविग्नं ।
हन्ताहमद्याखिलबन्धुमित्र-
पदातिहस्त्यश्वबलैः समेतं ॥ १० ॥
एषोऽहमादाय धनुः सखड्गो
रथी तथैवारिबलं समेत्य ।
करोमि वै यत्कदनं समस्ताः
पश्यन्तु मे देवगणाः समेताः ॥ ११ ॥
यो यः सहायो भविताद्य तस्य
मया समेतस्य रणाय भूयः ।
तथैव निःशेषकुलक्षयाय
समुद्यतोऽहं निजबाहुसैन्यः ॥ १२ ॥
यदि कुलिशकरोऽस्मिन् संयुगे देवराजः
पितृपतिरथ चोग्रं दण्डमुद्यम्य कोपात् ।
धनपतिवरुणाद्यो रक्षितुन्तं यतन्ते
निशितशरवरौघैर्घातयिष्ये तथापि ॥ १३ ॥

नियतमतिरदोषः काननाखण्डलौको-
निपतितफलभक्षः सर्व्वभूतेषु मैत्रः ।
प्रभवति मयि पुत्रे हिंसितो येन तातः
पिशितरुधिरतृप्तास्तस्य सन्त्वद्य गृध्राः ॥ १४ ॥

इति श्रीमार्कण्डेयपुराणे दमचरिते ॥ १ ॥

---

सप्तत्रिंशदधिक शततमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

दमेन राज्ञा इत्युक्ते पितुः शत्रुः पलायितः ।
मत्पिता तापसोऽन्यश्च तप्यतां निर्भयं महत् ॥
पलायनपरान् दृष्ट्वा किञ्चिन्नोक्तं दमेन तान् । १ ॥

मार्कण्डेय उवाच ॥

एतत्सर्व्वमुपाख्यानं धर्म्मं स्वर्गापवर्गदं ।
यः शृणोति पठेद्वापि सिद्धं तस्य समीहितं ॥ २ ॥
आधिव्याधिजदुःखेन कदाचिन्नाभियुज्यते ।
ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥ ३ ॥
सन्तः सुजनमित्राणि भवन्ति हितबुद्धयः ।
नारयः संभविष्यन्ति दस्यवो वा कदाचन ॥ ४ ॥
सदयो मिष्टभोगी च दुर्भिक्षैर्नावसीदति ।
परदारपरद्रव्यपरहिंसादिकिल्बिषैः ॥ ५ ॥

मुच्यतेऽनेकदुःखेभ्यो नित्यश्चैवोरगोत्तम ।
ऋद्धिर्बुद्धिः स्मृतिः शान्तिः श्रीःपुष्टिस्तुष्टिरेव च ॥
नित्यं तस्य भवेद्विप्र यः शृणोति कथामिमां ॥ ६ ॥
मार्कण्डेयपुराणमेतदखिलं शृण्वन्नशोच्यः पुमान्
यो वा सम्यगुदीरयेत् रसमयं शोच्यो न सोऽपि द्विज ।
योगज्ञानविशुद्धसिद्धिसहितः स्वर्गादिलोकेऽप्यसौ
शक्राद्यैश्च सुरादिभिः परिवृतः स्वर्गे सदा पूज्यते ॥ ७ ॥
पुराणमेतच्छ्रुत्वा च ज्ञानविज्ञानसंयुतं ।
विमानवरमारुह्य स्वर्गलोके महीयते ॥ ८ ॥

इति श्रीमार्कण्डेयपुराणं समाप्तं । १३७ ।



# DIFFERENT READING

## AT THE END.

मार्कण्डेय उवाच ॥

इति प्रतिज्ञाय तदा वधन्तस्य दुरात्मनः ।
कोपामर्षविवृत्ताक्षः सर्व्वं च बलशालिनः ॥
हा हतोऽसीति पितरं ध्यात्वा देवं विनिंद्य ताम् ।
प्रोवाच मन्त्रिणः सर्वानानिनाय पुरोहितं ॥

दम उवाच ॥

यदत्र कृत्यं तद्ब्रूत ताते प्राप्ते सुरालयं ।
श्रुतं भवद्भिर्यत्प्रोक्तं तेन शूद्रतपस्विना ॥
वृद्धस्तपस्वी स शूद्रो वानप्रस्थगते स्थितः ।
मौनव्रतधरोऽप्यस्तौ मन्मात्रा चेन्द्रसेनया ॥
प्रोक्तः संस्पृश्यानेन याथातथ्यं वपुष्मते ।
तेनाऽपि खड्गमाकृष्य जटां सकेन पाणिना ॥
कृत्वा यथा तन्दुष्टात्मा लोकनाथमनाथवत् ।
माता च संदिश्य च मां धिक्शब्दं कार्यपौरुषं ॥
मन्दभाग्यस्य निःश्रीक प्रविष्टा हव्यवाहन ।
हत्वाश्वरथपादातं सैन्यञ्च परिकल्पितं ॥
कैनिमित्तं पितुर्वैरमहत्वा पितृघातकं ।
अकृत्वा तु वचो मातुर्जीवितं किमिहोत्सहे ॥

मार्कण्डेय उवाच ॥

मन्त्रिणस्तद्वचः श्रुत्वा हा हेत्युक्त्वा तदाऽभवन् ।
हतवन्तो विमनसः सन्नह्य बलवाहनाः ॥
निर्ययुः सपरीवाराः पुरस्कृत्य दमं नृपं ।
गृहीत्वा चाशिषो विप्रास्त्रिकालज्ञाः पुरोधसः ॥
अहिरीडिव निश्वस्य दमः प्रियाहवपुष्मतं ।
सीमापालादिसामन्तं निघ्नन् याम्यां दिशं त्वरन् ॥
संक्रन्दनसुतेनापि दमो ज्ञातो वपुष्मता ।
आयातः सपरीवारः सामात्यः सपरिच्छदः ॥
अकम्पितेन मनसा ससैन्यापि दिदेश ह ।
दूतञ्च प्रेषयामास निर्गम्य नगराद्बहिः ॥
त्वं शीघ्रतरमागच्छ नरेष्यन्तः प्रतीक्षते ।
सभार्य्यः क्षत्रबन्धो त्वं समायाहि ममान्तिकं ॥
इति मद्बाहुनिर्मुक्ताः पीतं बाणाः पिपासिताः ।
भित्त्वा शरीरं संग्रामे पास्यन्ति रुधिरं तव ॥
श्रुत्वा दमस्तु तत्सर्व्वं दूतप्रोक्तं ययौ त्वरन् ।
कृत्वा प्रतिज्ञां पूर्व्वोक्तां निश्वसन्नुरगो यथा ॥
आक्रतः समरे चैव पुंमान् सेना विकल्पिता ।
ततो युद्धमतीवासीद्दमस्य च वपुष्मता ॥
रथी च रथिना नागो हस्तिना हयिना हयी ।
अयुध्यन्त च विप्रर्षे तद्युद्धं तुमुलोऽभवत् ॥
पश्यतां सर्व्वदेवानां सिद्धगन्धर्वरक्षसां ।
चकम्पे वसुधा ब्रह्मन् युध्यमाने दमे युधि ॥
न गजो न रथी नाश्वस्तस्य बाणसहस्रशः ।
ततो दमेन युयुधे सेनाध्यक्षो वपुष्मतः ॥
हृदि विव्याध च दममिषुणा गाढमन्तिके ।
तस्मिन्निपतिते सैन्यं पलायनपरं ह्यभूत् ॥

अस्वामिकं ततः प्राह दमः सुनन्दमतथा ।
यथाहि दुष्टपितरं घातयित्वा तपस्विनं ॥
अप्रवच ततः सैन्यं दाक्षिर्योऽसि निवर्तता ।
ततो विवक्षुः स दमो योधयामास सानुजं ॥
स पुत्रैः सह संबाधं बान्धवैर्युयुधे रथी ।
ततः शरासनान्मुक्तबाणौघांस्तं बुतो द्विजः ॥
दमश्च सत्यश्चाशु शराणैरपूरयत् ।
ततः पितृवधोत्थेन कोपेन स दमस्तथा ॥
चिच्छेदास्तांश्चरांस्तेषां विध्याधान्येश्च तानपि ।
एकेनैकेन बाणेन सप्त पुत्रांस्तथा द्विज ॥
सम्बन्धिबान्धवान्भित्वान् निनाय यमसादनं ।
वपुष्मान् स रथी क्रोधाग्निहताशेषबान्धवः ॥
युयुधे च स तेनाजौ स रथी विबुधोपमः ।
चिच्छेद तस्य तान्बाणान् स दमः प्रत्युवाच ह ॥
युयुधाते च संरब्धौ परस्परजयैषिणौ ।
परस्परशराघातविच्छिन्नधनुषौ त्वरम् ॥
गृहीतखड्गमुद्यम्य चिक्रीडति वपुष्मति ।
दमः त्वरां रूपं ज्ञात्वा पितरश्च स्थितं वने ॥
केशेष्वाकृष्य चाक्रम्य निपात्य धरणीतले ।
शिरोधरायां पादेन भुजमुद्यम्य चाब्रवीत् ॥
पश्यन्तु देवताः सर्व्वे मानुषाः पन्नगाः खगाः ।
पाट्यमानं च हृदयं दमबन्धोर्वपुष्मतः ॥
एवमुक्त्वा च स दमो हृदयश्च व्यदारयत् ।
खात्तकामश्च ससुरैः स्वतजेन निवारितः ॥
ततश्चकार तातस्य रक्तेनैवोदकक्रियां ।
आनृण्यं प्राप्य स पितुः पुनः प्रायात् स्वमन्दिरं ॥
वपुष्मतश्च मांसेन पिण्डदानं चकार ह ।
ब्राह्मणान् भोजयामास रक्षःकुलसमुद्भवान् ॥

एवंविधा हि राजानो बभूवुः सूर्य्यवंशजाः।
अन्येऽपि सुधियः शूरा यज्वानः शास्त्रकोविदाः॥
वेदान्तं पठमानांस्तानसंख्यातुमिहोत्सहे।
एतेषां चरितं श्रुत्वा नरः पापैः प्रमुच्यते॥

पक्षिण ऊचुः॥

एवमुक्त्वा जैमिनेयं मार्कण्डेयो महामुनिः।
विसृज्य क्रौष्टुकिमुनिं चक्रे माध्याह्निकीं क्रियां॥
अस्माभिश्च श्रुतं यस्माद्यतः प्रोक्तं महामुने।
अनादिमासिद्धमेतद्धि पुरा प्रोक्तं स्वयम्भुवा॥
मार्कण्डेयाय मुनये यत्तेऽस्माभिरुदाहृतं।
पुण्यं पवित्रमायुष्यं धर्म्मकामार्थसिद्धिदं॥
पठतां शृण्वतां सद्यः सर्वपापप्रमोचनं।
आदावेव कृता ये च प्रश्नाश्चत्वार एव हि॥
पितापुत्रस्य सम्वादस्तथा सृष्टिः स्वयम्भुवः।
तथा मनूनां स्थितयो राज्ञाञ्च चरितं मुने॥
अस्माभिरेतत्ते प्रोक्तं किमद्य श्रोतुमिच्छसि।
एतान् सर्वोत्तरान् श्रुत्वा पठित्वा वाऽशुभानि च॥
विधूय सर्वपापानि ब्रह्मणा चैकतां व्रजेत्।

जैमिनिरुवाच॥

भारते नष्टसन्देहसंशयस्फोटना द्विजाः॥
उक्तवद्भिः कृतं यत्नं कश्चिदर्थः करिष्यति।
यूयं दीर्घायुषः सन्तः प्रज्ञाबुद्धिविविक्तदाः॥
सांख्ययोगे तथा चास्तु बुद्धिरव्यभिचारिणी।
पितृशापकृताद्दुःखाद्दौर्मनस्यं व्यपैतु वः॥
एतावदुक्त्वा वचनं जगाम स्वाश्रमं मुनिः।
चिन्तयन् परमोदारं पक्षिणां वाक्यमीरितं॥

इति श्रीमार्कण्डेयपुराणं समाप्तं॥ १२५॥

ब्रह्मोवाच ।

अष्टादश पुराणानि यानि प्राह पितामहः ।
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा ॥
तथान्यं नारदीयञ्च मार्कण्डेयञ्च सप्तमं ।
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमन्तथा ॥
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतं ।
वाराहं द्वादशं प्रोक्तं स्कन्दमत्र त्रयोदशं ॥
चतुर्द्दशं वामनञ्च कौर्म्मं पञ्चदशं तथा ।
मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततः परं ॥
अष्टादशपुराणानां नामधेयानि यः पठेत् ।
त्रिसन्ध्यं जपतो नित्यमश्वमेधफलं लभेत् ॥
ब्रह्महत्यादिपापानि यान्यन्यान्यशुभानि च ।
तानि सर्वाणि नश्यन्ति तृणं वातहतं यथा ॥
पुष्करे दानजं पुण्यं श्रवणादस्य जायते ।
सर्ववेदाधिकफलं समाप्त्या चाधिगच्छति ॥
श्रुत्वैतत् पूजयेच्छास्त्रं यथा देवं पितामहं ।
गन्धपुष्पैस्तथा वस्त्रैर्ब्राह्मणस्य च तर्पणैः ॥
यथा शक्त्या च दातव्यं स्वर्णयानादिवाहनैः ।
अपूज्य पाठकर्त्तारं श्लोकमेकञ्च शृण्वतां ॥
नासौ पुण्यमवाप्नोति शास्त्रचौरः स्मृतो हि
न तस्य वेदाः प्रीणन्ति पितरो नैव पुत्रक ॥
दत्तं श्राद्धञ्च नेच्छन्ति तीर्थस्नानफलं न च ।
अवज्ञया न श्रोतव्यं शास्त्रमेतद्विचक्षणैः ॥
पठ्यमाने त्ववज्ञाते साधुभिः शास्त्रमुत्तमे ।
श्रुत्वा तत्पूजयेद्यस्तु पुराणं सप्तमं पुनः ॥
सर्वपापविनिर्मुक्तः पुनात्येव निजं कुलं ॥
पूतो याति न सन्देहो विष्णुलोकं सनातनं ॥

पुनः सप्तमकुं यावद्भुक्त्वा भोगान् यथेप्सितान् ।
पृथिव्यामेव भुक्त्वा च परं योगमवाप्नुयात् ॥
नास्तिकाय न दातव्यं ब्रह्मादिप्रभविष्णवे ॥
गुरुद्विजातिनिन्दाय तथा भग्नव्रताय च ।
मातापित्रोर्निन्दकाय वेदशास्त्रादिनिन्दिने ॥
भिन्नमर्य्यादिने चैव तथा वै ख्यातिकोपिने ।
एतेषां नैव दातव्यं प्राणैः कण्ठगतैरपि ॥
लोभाद्वा यदि वा मोहाद्भयाद्वापि विशेषतः ।
पठेद्वा पाठयेद्वापि स गच्छेन्नरकं ध्रुवं ॥
पुराणाक्षरसंख्या च प्रख्याता तत्त्वबुद्धिना ।
श्लोकानां षट् सहस्राणि तथा चाष्टशतानि च ॥
श्लोकास्तत्र नवाशीति एकादश समाश्रिताः ।
कथिता मुनिना पूर्वं मार्कण्डेयेन धीमता ॥

इति श्रीमार्कण्डेयपुराणे पुराणमाहात्म्यं समाप्तं ॥

BISHOP'S COLLEGE PRESS.